# शुक्लयजुर्वेदसंहिता

श्रीदौलतरामगौडेन
'प्रकाश' टिप्पण्या समलंकृत्य सम्पादिता

चौखम्बा विद्याभवन, वाराणसी

## शिवाराधन से विशेष लाभ—

रुद्राध्यायी वसेद् यत्र ग्रामे वा नगरेऽपि वा ।
न तत्र क्षुत्पिपासाद्या दुर्भिक्षं व्याधयोऽपि च ॥
अनपत्यत्वनाशार्थं स्वस्वलाभार्थसिद्धये ।
सर्ववर्णैश्च कर्तव्यो रुद्रजाप्यः प्रयत्नतः ॥

( विधानपारिजात )

# भूमिका

## कलौ माध्यन्दिनी शाखा कलौ चण्डीविनायकौ

### वेदप्रशंसा आदि का महत्व

वेदमेव सदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः। वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्। भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यति॥ बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्। तस्मादेतत्परं मन्ये यजन्तोरस्य साधनम्॥ यथा जातबलो वन्हिर्दहत्यार्द्रानपि द्रुमान्। तथा दहति वेदज्ञः कर्मजं दोषमात्मनः॥ (मनुस्मृति) यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्। वेद·

एव द्विजातीनां निःश्रेयस्करः परः ॥ ( याज्ञवल्क्यस्मृति ) वेदो यस्य शरीरस्थो न स पापेन लिप्यते । वेदात्मा स तु विज्ञेयः शरीरं किं प्रयोजनम् ॥ ( स्मृतिसार ) वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः ॥ ( ऋग्विधान ) यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥ ( स्मृतिसारसमुच्चय ) वेदविद्याविहीनस्य शास्त्रजालं निरर्थकम् । कण्ठसूत्रविहीनायाः कामिन्या इव भूषणम् ॥ ( स्कन्दपुराण ) नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् । अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥ ( विधानपारिजात ) तथा वेदविहीनस्य क्रियाः सर्वास्तुनिष्फलाः । तथा—नाधीतवेदो यो विप्रो आचारेषु प्रवर्तते । नाचारफलमाप्नोति यथा शूद्रस्तथैव सः ॥ अनधीतस्य विप्रस्य पुत्रो वाऽध्ययनान्वितः । शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते ॥ ( व्यासस्मृति ) यथा काष्ठमयो हस्ती यथा

चर्ममयो मृगः। यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः॥ ग्रामस्थानं यथा शून्यं यश्च कूपश्च निर्जलः। यथा विप्रोऽनधीयानस्त्रयस्ते नामधारकाः॥ (वेदव्यासस्मृति) वेदविक्रयिणश्चैव वेदानां चैव लेखकाः। वेदानां दूषकाश्चैव ते वै निरयगामिनः॥ यथा दारुमयो हस्ती यथा चर्ममयो मृगः। ब्राह्मणश्चानधीयानस्त्रयस्ते नाम बिभ्रति॥ (महाभारत शान्तिपर्व अ० ३६ श्लो० ४६, ४७) यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला। शकुनिर्वाप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा॥ ऋग्वेदमभ्यसेद्यस्तु यजुःशाखमथापि वा। सामानि सरहस्यानि सर्वपापैः प्रमुच्यते॥ (संवर्तस्मृति)

## वेदविस्मरण में दोष

वराहपुराणे संस्काररत्नमालायां च पृ० ३२६—'जातायामपि विद्यायां विस्मरेत्पठितां श्रुतिः। अनधीत्याप्रमादेन मृतो गर्दभतां व्रजेत्। यावद्वेदो-

स्थवर्णानां पठितानां च विस्मृतिः। तावद्वर्षाणि भुङ्क्ते स खरयोनिं द्विजोत्तमः' ॥ इति।

## वेदादि में अनध्यायविचार

मासे मासे तु पर्वादिस्तथा मन्वादयः परम्। युगादयस्तथा शुक्ला अष्टमी च चतुर्दशी ॥ शयनोत्थानद्वादश्यौ महाभरणी तथैव च। सन्ध्यायां गर्जिते मेघे तथा भूकम्पनेऽपि च ॥ ग्रामदाहे राजनाशे तथा स्वर्भानुदर्शने। मातापित्रोर्मृताहे च श्रोत्रिये मरणे गते ॥ जाताशौचे च ज्ञातीनां गजच्छायाद्वये तथा। महापातकिनो दृष्ट्वा चाण्डालान् बहिरासितान्। एतेषूक्तेषु राजेन्द्र वेदं वेदान्तमेव वा। योऽधीते मूढधीः पापी मृत्वा नरकमश्नुते ॥ ( हेमाद्रि पृ० ५२८ )

## स्वाध्यायप्रकार

गोपीनाथीये स्मृतिः—स्वरवर्णोभयोपेतं मन्त्रस्थानक्रियान्वितम् । वेदमेवं पठेद्यस्तु स्वाध्यायफलमश्नुते ॥

## अध्यापनप्रकार

याज्ञवल्क्यः—गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः । मनुः—अध्येष्यमाणस्त्वाचान्तो यथा शास्त्रमुदङ्मुखः । प्राञ्जलिश्च कृतोऽध्यायो लघुवासा जितेन्द्रियः ॥ ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥ सव्येन सव्यः प्रष्टव्यो दक्षिणेन तु दक्षिणः । ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ॥ पाणिनीयशिक्षायाम्—हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके

महीयते ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥

## अध्ययनप्रकार

मन्द्रेणोपक्रमेत्पूर्वं सर्वशाखास्वयं विधिः । सप्तमन्त्रानतिक्रम्य यथेष्टां वाचमुत्सृजेत् । न तां समीरयेद्वाचं या प्राणमुपरोधयेत् । प्राणानामुपरोधेन वैस्वर्यं चोपजायते । स्वरव्यञ्जनमाधुर्यं लुप्यते नात्र संशयः ।

## वेदारम्भकालनिर्णय

'वैशाखे श्रावणे मासे चाश्विने मार्गशीर्षके । माघफाल्गुनयोर्वापि सिते पक्षे शुभे दिने ॥ वेदारम्भः प्रकर्तव्यः पुत्रपौत्रादिवृद्धये । कार्तिके स्वर्गलाभः स्यादिति केचित्' ( परशुरा० ) वर्ज्यानि सङ्ग्रहे—अनध्यायतिथीन्सर्वान् रिक्ताष्टम्यौ विहाय च । इतरासु च कर्तव्यो वेदारम्भः शुभप्रदः ॥ अनध्याये

च सन्ध्यायामपराह्णे कथञ्चन । स्त्रियां रजस्वलायान्तं वेदारम्भो न सिद्धिदः ॥ सोमसौम्यगुरुशुक्रवासराः सर्वकर्मसु भवन्ति सिद्धिदाः । निष्कामतया वेदाद्यनुष्ठाने तु यदा श्रद्धोत्पद्यते तदैवारम्भः कार्यः । 'नः श्वः श्वमुपासीत को हि मनुष्यस्य श्वो वदेति श्रुतेः' स्वः करवाणीत्येवमुपासनाकालान्तरप्रतीक्षा न कार्या । हि यस्मान्मनुष्यस्य स्वकालसम्बन्धिजीवनं को वेद को जानीयात् । आयुषोऽस्थिरत्वादिति श्रुत्यर्थः । ( रत्नमाला )

## पारायण की आवृत्ति से विशेष लाभ

पारायणाभ्यां द्वाभ्यां वाऽनभन्यः सततं पठेत् । अनृतेभ्यः पातकेभ्यो मुच्यते नात्र संशयः ॥ त्रिभिः पारायणैः शूद्रीगमनात्पातकान्नरः । गङ्गाम्भसु मज्जनाच्चैव मुच्यते नात्र संशयः ॥ चतुर्भिः शूद्रीगमनात्तदन्नाशनपातकात् । पञ्चभिश्चायाज्ययाजैरग्राह्यग्रहणात्तथा ॥ षड्भिः पारायणैः स्वर्णस्तेयस्त्रीपशु-

घाततात् । सप्तभिः प्राजापत्यस्य हीनाचाराच्च बन्धनात् ॥ अष्टभिश्चान्द्राय-णाच्च गुरुतल्पगमात्तथा । रजस्वलासङ्गमाच्च मुच्यते पातकान्नरः ॥ नवभिस्तु सुरापानात्पातकान्मुच्यते तथा । असोमपानाद्दशभिरेकादशभिर्ब्रह्महा । द्वादशभिः पूर्वजन्मकृतादिहापि जन्मनि । पातकान्मुच्यते स्वर्गलोकं गच्छति शाश्वतम् ॥ अग्निष्टोमादिक्रतुभिरिष्टं भवति तेन वै । वेदाध्यायी सदैवस्याद-पाप्मा सत्यवाक् शुचिः ॥ यं यं कामयते कामं तं तं वेदेन साधयेत् । असाध्यं नास्ति यत्किञ्चिद् ब्रह्मणो हि फलं महत् ॥ ( शौनकः कमलाकरश्च )

## कलशस्थापनदेशादिविचार

तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते । कलशं सुदृढं तत्र सुनिर्णीतं सुभूषितम् ॥ पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः । मृत्तिकायवसम्मिश्रं वेदमध्ये न्यसेत्ततः ॥ पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः ।

स्नापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ॥ वत्सजान्वाकृतिर्वेदः उत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत् ॥ प्रतिष्ठां कारयेत्पश्चात्पूजा द्रव्यमथोच्यते । यज्ञोपवीतं नैवेद्यं वस्त्रं चन्दनकुङ्कुमैः ॥ स्रग्धूपदीपताम्बूलैरेतैश्चापि पितामहम् । ब्रह्मयज्ञानमिति वा गायत्र्या च प्रपूजयेत् ॥ उपाध्यायं च सम्पूज्य यथा पाठं पठेत्ततः । ( चरणव्यूह )

ऋग्विधानेऽप्युक्तम्—चत्वारः कलशाः कार्याः पञ्चरत्नसमन्विताः । पञ्चपल्लवसंयुक्ताः सितवस्त्रेण वेष्टिताः ॥ कषायपञ्चकोपेता नानाविधफलान्विताः । सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं दिशम् ॥ रूप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् । तस्योपरि न्यसेद्देवं ब्रह्माणं च चतुर्मुखम् ॥ पलार्धार्धप्रमाणेन सुपर्णेन विनिर्मितम् । अर्चयेत्पुरुषसूक्तेन त्रिकालं प्रतिवासरम् ॥ यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधिः । पूर्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मचारिणः ॥ पाठयेयुः स्वकान्वेदान् ऋग्वेदप्रभृतीन् शनैः । दशांशेन ततो

होमो ग्रहशान्तिपुरःसरः ॥ मध्ये कुण्डं विधातव्यो घृताक्तैस्तिलव्रीहिभिः । द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः ॥ भद्रपीठे यजमानमभिषिञ्चेद्यथाविधिः । ततो दद्याद्यथाशक्ति गो-भू-हेम-तिलादिकम् ॥ केचित् ब्रह्मदक्षिणभागे द्वितीयकलशोपरि सुवर्णादिप्रतिमायां सावित्रीपूजनमुक्तं तत्र मूलं मृग्यम् ।

बृहद्हारीतस्मृतौ—'वेदपारायणेनैव मासमेकं निरन्तरम् । ऋचां दशसहस्राणि ऋचां पञ्चशतानि च । ऋचामशीतिपादश्च पारायणं प्रकीर्तितम् । वेदपारायणेनैव प्रत्यृचं कुसुमान्यसेत् । रात्रौ होमं प्रकुर्वीत तिलैर्व्रीहिभिरेव वा । सर्ववेदेष्वशक्तस्तु होमकर्मसु वैष्णवः । वैष्णवैरनुवाकैर्वा प्रत्यहं जुहुयाद् बुधः । यजुषाऽपि तथा साम्नां शक्त्या पुष्पाञ्जलिं चरेत् ।

केश्चित् संहिताहोमकरणाशक्त्यानुकल्पाः उच्यन्ते—सूक्तादिभूताभिर्ऋग्भिर्जुहुयादित्येकः पक्षः । अनुवाकाद्याभिर्जुहुयादिति द्वितीयः पक्षः । अध्या-

याद्याभिर्जुहुयादिति तृतीयः पक्षः। मण्डलाद्याद्यन्त्यभूतानि ऋग्भिर्वा होतव्यमिति चतुर्थः पक्षः। अत्र मूलवचनानि माण्डूकेयसाङ्ख्यायनादिसूत्रण्याकरादेवोपलब्धव्यानि।

## पाठाध्ययन में श्रवणादि विचार

अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन। कृते विरामे मध्ये तु अध्यायादिं च पुनः पठेत्॥ भविष्यपुराणे—श्रवणं ब्राह्मणादेव कर्यम्। ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्। श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकं व्रजेत्।

## अनश्नत्परायणादिविचार

अनश्नत्संहितामेतां प्रातः प्रातर्दिने दिने। आयुर्विद्यां धनं पुत्रं गृहांश्चाप्नोत्यनुत्तमान्॥ 'असमाप्तेर्नाश्नीयात् यथाशक्ति अपः पयः। फलान्योदनं वा हविष्यमल्पं भुक्त्वा तदा शेषमधीयीत।

## प्रतिदिन पाठकर्तृकनियम और अनार्यों से अभाषण

अनार्यैर्न न भाषेत न शूद्रैर्नापि गर्हितैः। न रजस्वलाया नार्या पतितैर्नान्त्यजैर्नृभिः। न देवब्राह्मणद्विष्टैर्नाचार्यगुरुनिन्दकैः। प्रत्यहं प्रहरद्वयपर्यन्तं पठेत्। त्वरया समापनेच्छायां सार्धप्रहरद्वयपर्यन्तं पठेत्। कर्मसमाप्त्यन्तं ब्रह्मचर्यमधः शयनं स्वल्पं हविष्याशनं च कार्यम्। पतितरजस्वलादिसंभाषणमध्ययनमपि समक्षं न कुर्यात्। शूद्रं दृष्ट्वैव संप्राप्तं नाधीयीत कदाचन। ऋत्विक्कर्तृकपारायणे पारायणकारयितृणाप्येते नियमाः कार्याः। संहितां समाप्य ब्राह्मणभागमपि पठेत्।

## कुछ श्रौत-पात्रों का निर्माण प्रकार

अग्निहोत्रहवणी—विकंकत काष्ठ की जुहू के सदृश बाहुमात्र लंबी स्रुक् को अग्निहोत्रहवणी कहते हैं। इसी से श्रौत अग्निहोत्र होम होता है।

आपस्तम्ब आदि शाखा में चौबीस अंगुल लम्बी अग्निहोत्रहवणी होती है।

अभ्रि—वारणकाष्ठ की एक हाथ की अग्रभाग से तीखी मूलभाग में एक, अंगुल की गोलाई में मोटी और मूलभाग से अग्र तक क्रम से पतली दर्श-पूर्णमासादि यज्ञ में वेदीखनन, यूपादिगर्त परिलेखन में उपयुक्त अभ्रि होती है। महावीर सम्भरण में विकङ्कत की अभ्रि होती है। सचयन सोमयाग में चित्र विचित्र बाँस की दोनों तरफ से तीखी मध्य में छिद्र वाली अथवा सुवर्ण की अभ्रि होती है।

अन्वाहार्यपात्र—दर्शपूर्णमासेष्टि में ब्रह्मा, होता, अध्वर्यु और अग्नीध्र को दक्षिणा के निमित्त दक्षिणाग्नि में पका हुआ ओदन दिया जाता है। उसको अन्वाहार्य कहते। इसे पकाने के लिए जो ताम्रादि अर्थ परिमाण पात्र है उसको अन्वाहार्य पात्र कहते हैं।

कूर्च—बाहु के बराबर लम्बा चार अंगुल चौड़ा आधा अंगुल मोटा मूल और अग्र में एक-एक अंगुल मोटा पावा जिसमें लगा हो वारण काष्ठ का कूर्च होता है। सायं और प्रातः अग्निहोत्र के समय में इसके ऊपर स्रुक् रक्खी जाती है।

ओविली—अरणिमन्थन में एक मन्थन दण्ड होता है उस मन्थनदण्ड के ऊपर दो अंगुल का लोहकील जड़ा हुआ है उसी लोहकील के ऊपर बारह अंगुल की दो अंगुल गोलाई की मोटी खैर की ओविली होती है। उसको उपमन्थ भी कहते हैं। यह ओविली मन्थनदण्ड को दवाने के लिए होती है।

दृषत् उपला—पाषाण की दस अंगुल लंबी आठ अंगुल चौड़ी दो अंगुल अथवा इच्छा प्रमाण पुरोडाश सम्बन्धी व्रीहि आदि के पेषण में उपयुक्त दृषत् और दृषत् के अनुरूप लोढी को उपला कहते हैं।

प्रमन्थ—उत्तरारणि का आठ अंगुल का दो अंगुल चौड़ा और दो अंगुल ऊंचा काष्ठ खण्ड को प्रमन्थ कहते हैं।

फलीकरण पात्र—बारण काष्ठ का एक अंगुल मोटा चार अंगुल चौड़ा बारह अंगुल लम्बा यवमात्र खात चौकोर फलीकरण पात्र होता है। दर्श-पूर्णमासादि यज्ञ में पुरोडाश सम्बन्धी ब्रीहि आदि को उलूखल में मूसल से कूटकर शूर्प से पछाड़ते हैं उससे जो तुषादि गिरते हैं उनको फलीकरण कहते हैं। उनके रखने के लिये पात्र फलीकरण पात्र कहे जाते हैं। यह पात्र केवल आपस्तम्ब शाखा में विहित हैं। कोई आपस्तम्ब शाखा वाले इस पात्र को मध्य से दो करके एक भाग में फलीकरण रखते हैं, दूसरे भाग में पिष्टलेप रखते हैं। पुरोडाश के बनाने के समय जो अंगुलियों में आटा लगता है वह पिष्टलेप है, उसका यज्ञान्त में हवन होता है।

ध्रुवः—वारणकाष्ठ की देवयाज्ञिक के मत में विकङ्कत काष्ठ की जुहू के

सदृश, बाहुप्रमाण स्रुक् ध्रुवा होती है। इसमें चार स्रुव घृत छोड़ कर 'शमिष्ट यजुः' नामक होम के लिए रखा जाता है और यज्ञ समाप्ति तक तक यह स्थिर रूप से रख रहती है इसलिये इसका नाम ध्रुवा है। आपस्तम्बादि शाखा में इसकी लम्बई २४ अंगुल की। चयनयाग में गंभारी ( कार्ष्मर्यमयी ) बाहुप्रमाण जुहू के सदृश एक स्रुक और गूलर की बारह अंगुल की दूसरी स्रुक् होती है। इष्टकाओं के साथ यह भी रक्खी जाती है। आपस्तम्बादि शाखा में पहली स्रुक् का २४ अंगुल का प्रमाण है।

परिधि—दर्शपौर्णमासादि याग में आहवनीय कुण्ड के दक्षिण पश्चिम और उत्तर तरफ पलाश की बाहुप्रमाण समित् रखी जाती है। इसको परिधि कहते हैं।

षडवत्तपात्र—वारण काष्ठ का बारह अंगुल लम्बा चार अँगुल चौड़ा उस में एक अंगुल दंड उसके बाद चार अंगुल चौकोर एक अंगुल ऊँचा

मध्य में दो अंगुल की गुलाई यव के बराबर खात होता है। उसके बाद एक अंगुल दण्ड फिर पूर्ववत् चार अंगुल चौकोर एक अंगुल ऊँचा मध्य में दो अंगुल की गोलाई में यवमात्र खात आग्नीध्र ऋत्विक का भाग देने के लिए होता है। आपस्तम्ब शाखा में षडवत्त पात्र नहीं होता है।

प्राशित्रहरण— वारणकाष्ठ का चार अंगुल लंबा चौड़ा चौकोर एक अंगुल मोटा मध्य में तीन अंगुल गोलाई में यवमात्र खात प्राशित्र हरण होता है। ब्रह्मा के लिए हुतशेष भाग दिया जाय वह प्राशित्रहरण शाखा वाले खैर का दश अंगुल का जो कर्णाकृति श्रुतावदानं मानते हैं। आजकल खैर का प्रोक्षणीपात्र के सदृश प्राशित्रहरण आपस्तम्बशाखा वाले बनाते हैं।

चात्र-उपमन्थ—अरणिमन्थन के लिए आठ अंगुल का एक काष्ठ शंकु जिस मन्थनदण्ड में तक्षा के द्वारा लगाया जाता है वह मन्थनदण्ड खैर

का बारह अंगुल लंबा दो अंगुल के लोहकील के सहित तीन अंगुल गोलाई वाला रज्जु लपेटने ( घुमाने ) के लिए अनेक वलययुत चात्र और उपमन्थ भी कहा जाता है।

शम्या—वरणा लकड़ी के मूलभाग में एक अंगूठेभर गोल दस अंगुल लम्बी फिर क्रम से अग्रभाग तक क्रम से सूक्ष्म तीक्ष्ण अग्र वाली दर्शपूर्णमास आदि में सिल लोढी के कुट्टन आदि में उपयुक्त होनेवाला पात्रविशेष है। चातुर्मास्य आदि यज्ञ में यही शम्या वारणकाष्ठ की छत्तीस अंगुल लम्बी दो अंगुल चौड़ी एक अंगुल मोटी मूल और अन्त में दो दो अंगुल छोड़कर मध्य में छोड़कर मध्य में बत्तीस अंगुल की लम्बाई में आधा अंगुल गर्तवाली चात्वालमान और उत्तर वेदिमान आदि में उपयुक्त होनेवाली होती है। आपस्तम्ब के मत से शम्या का प्रमाण बाहुमात्र है। तित्तिरि शाखा में

शम्या खैर की छत्तीस अंगुल की बिना गर्त की श्रौत कर्म में होती है और स्मार्त-कर्म में बारह अंगुल की होती है।

वेद—दर्शपौर्णमास आदि में पुरोडाश में लगे हुए भस्म को दूर करने के लिए ५१ कुशाओं से बना हुआ वेणी के आकार गूँथा हुआ बैठे हुए बछड़े के जानु के सदृश कुशमुष्टि को वेद कहते हैं।

उपभृत—पीपल की जुहू के सदृश स्रुक् उपभृत होती है। दर्शपूर्ण-मासादि यज्ञ में अध्वर्यु दक्षिण हस्त से जुहू के द्वारा होम करता है और होम के समय वामहस्त में जुहू के समीप इसको रखता है। इसलिए इसका नाम उपभृत है। आपस्तम्ब शाखा में २४ अंगुल प्रमाण है और आपस्तम्ब शाखावाले इसको अनुष्टुब्धि भी कहते हैं।

उलूखल—पलाश या खैर अथवा वारण काष्ठ का दश अंगुल या जानुप्रमाण अथवा इच्छाप्रमाण चार अंगुल की गोलाई में मोटा ऊपर एक

अंगुल खात मध्य में कुछ संकुचित चरु पुरोडाश संबन्धि व्रीहि आदि के कण्डन में उपयोगी उलूखल होता है। आश्वलायन आपस्तम्ब शाखावालों के यहाँ स्मार्तकर्म में उलूखल छः अंगुल के होते हैं। आपस्तम्ब के यहाँ खैर का होता है।

उपवेष—वारणकाष्ठ से बना हुआ एक हाथ का पांच अंगुली वाले हाथ के सदृश हाथ के नीचे दो अंगुल मोटे गोलदण्ड वाला उपवेष होता है। आपस्तम्ब शाखा में उपवेष नहीं हैं केवल धृष्टि होती है।

इडापात्री— वारणकाष्ठ की एक हाथ लंबी आठ अंगुल चौड़ी कुछ गोल आकार की चार अंगुल दण्ड जिसमें हो दो अंगुल ऊँची एक अंगुल विस्तृत और चौड़ी जिसकी परिधि किनारी हो ब्रह्मा, होता, अध्वर्यु, आग्नीध्र और यजमान इनका भाग जिसमें रक्खा जाता हो उसको इडापात्री कहते हैं तित्तिरि शाखावालों की इडा-पात्री चौकोर प्रणीता के सदृश आकृति

वाली होती है। आपस्तम्ब शाखा में इस इडापात्री के सदृश दारुपात्री होती है।

अन्तर्द्धानकट—वारणका काष्ठ अर्द्धचन्द्रकार बारह अंगुल का आधा अंगुल मोटा पात्र अन्तर्द्धानकट होता है। दर्शपूर्णमासादि याग में पत्नी-संजाय में अपना २ भाग लेने के लिए देवपत्नी आती हैं, उन्हें देवताओं से लज्जा होती है, इसलिए आड़ करने के लिए गार्हपत्यकुण्ड के ऊपर पत्नीसंयाज के समय इसको रक्खा जाता है। बौधायनशाखा में यह पीपल का होता है।

## वेदस्वरूपकथन

प्रायः लोक में इष्टप्राप्ति अनिष्टपरिहार पुरुषमात्र को इष्ट है। इसलिए उसके साधन में अनवरत लगे रहते हैं। उसमें भी जो नित्य हैं दुःखा-

सम्बद्ध वैसे ही सुख को विचारशील पुरुष चाहते हैं। अतः उसके साधन को जानने की जरूरत पड़ती है। उसका ज्ञान प्रत्यक्ष या अनुमान इत्यादि प्रमाणों से नहीं हो सकता है। किन्तु वेद से ही हो सकता है। इसीलिए सायणाचार्य प्रभृति भाष्यकारों ने वेद शब्द का 'इष्टानिष्टपरिहारोपायमलौकिकं यः शब्दराशिः-प्रतिपादयति स वेद इति' निर्वचन किया। अतः अलौकिक श्रेय को जो प्राप्त करना चाहें वे वेद ही से प्राप्त कर सकते हैं दूसरे से नहीं। इस बात को याज्ञवल्क्य महर्षि ने भी कहा है 'वेद एव द्विजातीनां निःश्रेयसकरः परः' इति। यह वेद चार प्रकार का है—ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद।

## ऋग्वेदीय संहिता-ब्राह्मण-आरण्यक-शाखाभेद

ऋग्वेद की २५ शाखायें हैं—यजुर्वेद में १०१ हैं। सामवेद में एक हजार शाखायें, अथर्ववेद में सोलह शाखायें हैं, लेकिन कलिकाल के माहात्म्य से

या हमारे भाग्य से ये सब शाखायें नामशेष रह गई हैं। आजकल उपलब्धमान शाखा ऋग्वेद में शाकल और बाष्कल ये दो शाखायें हैं इसमें अधिक भेद नहीं है। जिसमें मण्डल सूक्तादि से विभाग किया गया है वह शाकल संहिता कहलाती है। जिसमें अध्याय वर्ग इत्यादि से विभाग किया गया है वह बाष्कलसंहिता है। ऐतरेय कौशितकी दो ब्राह्मण आजकल मिलते हैं। उसमें ऐनरेय ब्राह्मण शाकल शाखा सम्बन्धि कर ऋग्वेदी लोग मानते हैं। लेकिन विचार से यह सिद्ध होता है वह किसी एक शाखा को लेकर भी प्रवृत्त नहीं है। किन्तु अन्य शाखाओं को लेकर भी प्रवृत्त हैं। इसमें ऐतरेयारण्यक कौषितकारण्यक दो आरण्यक मिलते हैं।

## यजुर्वेदीय-शाखादिभेद

आध्वर्यवं क्वचिद् हौत्रं क्वचिद्यदि व्यवस्थया।
बुद्धिमालिन्यहेतुत्वात् यजुः कृष्णमितीर्यंते ॥

यजुर्वेद शुक्ल और कृष्ण भेद से दो प्रकार का है। ये दोनों को मिला कर ही प्राचीन आचार्यों ने यजुर्वेद की १०१ शाखायें हैं यह सिद्ध किया है। उसमें तैत्तरीय कठ मैत्रायणी तीन शाखायें उपलब्ध हैं। मन्त्रब्राह्मण अलग-अलग नहीं पठित हैं। संहिता में भी ब्राह्मण मिले हुए हैं। इसीलिए इसको अलग-अलग कर समझ नहीं सकते। अत एव उसको कृष्णयजुर्वेद कहते हैं। मैत्रायणी और कठसंहिता में केवल संहिता मात्र मिलता है। तैत्तरीयारण्यक एक है[1] इस में १५ शाखायें चरणव्यूहादि ग्रन्थों में सबका

---

१. कृष्णयजुर्वेद में श्रौतसूत्र बौधायन, आपस्तम्बीय, सत्याषाढीय, मानव, भारद्वाज, वैखानस, यह छः सूत्र हैं। उसमें भी बौधायन, आपस्तम्बीय, सत्याषाढीय, भारद्वाज, वैखानस, पाँच सूत्र तैत्तरीयशाखा को लेकर प्रवृत्त हैं। मानवसूत्र मैत्रावरुण शाखा को लेकर प्रवृत्त है।

नाम लेकर व्यवहार किया है—काण्वाः, माध्यन्दिनाः, शापेयाः, तापायनीयाः, कापालाः, पौण्ड्रवत्साः, आवटिकाः, पाराशर्याः, वैधेयाः, वैनेयाः, औधेयाः, गालवाः, बैजवाः। कात्यायनीयाः। इन पन्द्रह शाखाओं में से दो शाखायें मिलती हैं, काण्व और माध्यन्दिन। काण्वनामक महर्षि से उपलब्ध यह शाखा प्राप्त की गई है इसलिए इसका काण्वशाखा नाम से प्रसिद्ध है। इसलिए आजकल भी काण्वशाखा का जो अध्ययन करते हैं वे भी काण्व शब्द से कहे जाते हैं। तैत्तरीयशाखा तथा काण्वशाखा इन दोनों में अध्वर्यु का प्रयोग ही प्रतिपादित होता है। तथापि मन्त्रपाठ के विशेष प्रयोग-विशेष से भी महान् भेद है। इसीलिए अनुष्ठातृभेद से व्यवस्थित विषय होने के कारण विकल्प नहीं जाना जाता है। इसलिए 'स्वाध्यायोध्येतव्यः' इस अध्ययनविधि में अपनी शाखा का अध्ययन अनुष्ठान करना चाहिये यह पूर्वमीमांसा से सिद्ध है। इसमें दो ब्राह्मण हैं—माध्यन्दिन

शतपथ और काण्व शतपथ। दो आरण्यक हैं किन्तु विशेष अन्तर नहीं है।

## सामवेद-शाखाभेद

इसमें कौथुमी, जैमिनीया, राणायणीया, ये तीन शाखायें मिलती हैं। लेकिन दक्षिण देश में तीनों शाखाओं का अध्ययन होता है। गुजरात में कौथुमी शाखा का, महाराष्ट्र में राणायणीया का अध्ययन होता है। अन्य शाखायें कालवशात् लुप्त हो गई है। सामवेद के आठ ब्राह्मण—ताण्ड्य, षड्विंश, मन्त्र, दैवत, आर्षेय, सामविधान, संहिता, उपनिषद, वंश, जैमिनीय इसमें सबसे ताण्ड्यब्राह्मण बहुत बड़ा है। इसलिए वह महा-ब्राह्मण भी कहलाता है। सामवेद में दो श्रौत्रसूत्र हैं लाट्यायन, द्राह्यायण और मासिकसूत्र ये तीन हैं।

## अथर्ववेद शाखाभेद

अथर्ववेद में पैप्पलाद शौनक दो संहितायें मिलती हैं। ब्राह्मण एक ही मिलता है। वह गोपथ नाम से प्रसिद्ध है। कौशिक सूत्र मिलता है।

## पाश्चात्य भारतीय मतभेद

वेद के विषय में पाश्चात्य विद्वान् कुछ काल से वेद षडङ्गादि को समालोचना करते हुए यह सिद्ध किया है कि वेद भारतवर्ष के एक इतिहास का ग्रन्थ है। इससे यह मालूम होता है कि प्राचीन भारतीय लोग स्थावर अग्नि आदित्य की विशेष कर पूजा करते थे और उनके आचार व्यवहार आर्य सभ्यता सबका अच्छी तरह से उपपादन वेद से मिलता है। इसीलिए उस समय के मनुष्य तत्कालीन काल देशादि का देखकर वेदरूप के लिए वह ही आजकल ऋग्वेदादि शब्द से कहा जाता है। इसलिए ही

ऋग्वेदादियों में मण्डलद्रष्टा 'वामदेव ऋषिः' इस तरह से ऋषियों का नामोल्लेख भी मिलता है। अतः लगभग ६ हजार वर्ष पूर्व वेद का निर्माण हुआ है। उसमें भी क्रम यह है कि पहला ऋग्वेद, दूसरा यजुर्वेद, तीसरा सामवेद इस क्रम से सब वेदों का निर्माण सिद्ध करते हैं।

हम लोग वेद के विषय में यह समझते हैं कि वेद सर्वज्ञकल्प है। जो चार पुरुषार्थ हैं सबको बतलाते हैं और ऐसी कोई चीज नहीं है जिसका वेद में प्रतिपादन न हो तथा परमपवित्र है जिन्होंने अनेक जन्मों में कई पुण्यकर्मों का अनुष्ठान किया हो उसी का पूर्वपुण्य सुकृत से वेदाध्ययन करने का वेदार्थ को समझाने का शुभावसर मिलता है। यह भारतीयों का स्थिर विश्वास है जो वेद का अध्ययन करते हैं उसके अर्थ को समझते हैं उसके समालोचना में हरेक समय लगे रहते हैं। अर्थात् अपने जीवन को वेद में ही सम्बन्ध व्यतीत किया हो। उनका इस लोक में जितने भोग

हैं सब उन्हें प्राप्त होते हैं। लोकान्तर में भी स्वर्गादि जितने भोग हैं सब प्राप्त होते हैं और यह वेद किसी पुरुष से निर्मित नहीं है। यह नित्य अपौरुषेय निर्दुष्ट है। इसका कालनिर्माण कोई नहीं कर सकता है। यद्यपि काठकादि समाख्या को लेकर सामान्यतः अनुमान से पौरुषेयत्व को सिद्ध कर सकते हैं लेकिन यही इसके कर्ता हैं यह निश्चय रूप से कोई प्रतिपादन नहीं कर सकता। इसी बात को मीमांसक-शिरोमणि वाचस्पति मिश्रजी ने अपनी शास्त्रदीपिका में सुन्दर शब्दों में कहा है कि 'येऽपि वेदस्य पौरुषेयतां मन्यन्ते तेऽपि सामान्यतोनुमानेन यङ्कश्चन अनुमाय स्वाभिमतं कर्तारं तत्र निष्पन्ति केचिदीश्वरं केचित् हिरण्यगर्भमपरे प्रजापतिम्। न हि मानवे भारते शाक्यग्रन्थे वा,कर्तृविशेषं प्रति कश्चित् विवदते। तस्मात् स्मर्त्यव्यस्वेति अस्मरणात्। दृश्यादर्शनवारितं सामान्यतो दृष्टं न शक्नोति कर्तारमवसाय-यितुम्।' अतः कोई वेद के निर्माण काल का प्रतिपादन नहीं कर सकता।

## मन्त्रसंख्यादिकथन

ऋग्वेद में १०४४०, यजुर्वेद में १९७५, (कृष्णयजुर्वेद में १८२४), सामवेद में १८०००, अथर्ववेद में ५९७७। वेद में धर्म और ब्रह्म अर्थात् प्रवृत्तिमार्ग और निवृत्तिमार्ग का वर्णन है। उपनिषदों में निवृत्तिमार्ग का विशेष रूप से निरूपण किया गया है। पूर्वकाण्ड में कर्मकाण्ड निरूपण है। यह उसका स्वरूप है—किसी देवता को उद्देश्य लेकर पुरोडशादि द्रव्य को आहवनीयादि अग्नि में हवन करना यही सामान्यतः यज्ञ का स्वरूप है। भगवान् कात्यायन महर्षि आपस्तम्ब श्रौतसूत्र में यज्ञस्वरूप का निरूपण करने के लिए यह सूत्र बनाया है 'द्रव्यं देवता त्यागः' 'यजति जुहोतीनां को भेदः।' यह यज्ञ पाँच प्रकार का वेद में विहित है अग्निहोत्र, दर्शपूर्णमास, पशू, चातुर्मास्य, सोम। जिन्होंने श्रौताग्नि का आधार किया है वे इन यज्ञों को कर सकते हैं। आधान में सपत्नीक का ही अधिकार है।

उसके कालका विधान वसन्त है। प्रकृत जो संहिता है इसमें चालिस अध्याय हैं उसमें प्रथम और द्वितीय अध्याय में दर्शपूर्णमास का निरूपण है। तृतीय में आधान अग्न्युपस्थान और चातुर्मास्य, चतुर्थादि अध्यायों में अग्निष्टोम का निरूपण है। ९-में वाजपेय, ११ में राजसूय, १२-२० तक अग्नि चयन, १९-२१ तक सौत्रामणी, २३-२७ तक अश्वमेध २८-३३ तक अनारभ्याधीत मन्त्र पठित है, ३४-३५ तक पुरुषमेध, ३६ में शान्ति, ३७-३९ प्रवर्ग्य का निरूपण, ४० में आत्मविद्या का निरूपण है।

वसन्तपञ्चमी २०००, रवौ। —श्री दौलतरामगौड

## वैदिक यज्ञों में आवश्यक बातें

(१) देवाग्निगिरिगोष्ठेसु नद्यां वा न श्मशानके ।
वल्मीके मूषिकास्थाने वृक्षमूले सुरालये ॥
जलान्तरे च मार्गे च न गृह्णीयात् कदाचन ।
प्राण्यङ्गतुषभस्मास्थिकाष्ठलोष्ठविवर्जितम् ।
परशौचावशिष्टं यच्छ्रेयः कामैः सदा नरैः ॥

(२) दर्भैर्विना तु यत् स्नानं विना नैवेद्यमर्चनम् ।
विनोदकं तु यद्दानं तत्सर्वं निष्फलं भवेत् ॥
अर्चनं जपहोमौ च दानं च पितृतर्पणम् ।
अपवित्रानुपाणिश्चेत् तत् सर्वं च विनश्यति ॥
तस्मात् सर्वप्रयत्नेन सदा धार्यं पवित्रकम् ।

( ३ ) गोमयं च नवं ग्राह्यं भूमिष्ठं धेनुसम्भवम् ।
सजलं शिथिलं शुष्कं कीटवच्च विवर्जयेत् ॥

( ४ ) उपविश्यासने यागमारभेत समाहितः ।
( ५ ) अल्पतेजोऽल्परूपश्च विस्फुलिङ्गसमन्वितः ।
ज्वालाभ्रमविहीनश्च कृशानुर्नैव सिद्धिदः ॥
अप्रबुद्धे स धूमे च जुहुयाद्यो हुताशने ।
कर्महानिर्भवेत्तस्य त्वभिचारार्थमश्नुते ॥

( ६ ) यल्लग्नहेतुकं कर्म यन्मुहूर्तं निमित्तकम् ।
तत् सशेषं संपाद्य प्रायेण विभवेन तु ॥
नैमित्तिकं दिवोक्तं तु दिवैव तु समापयेत् ।
नैमित्तिकं निशोक्तं तु निश्येव तु समापयेत् ॥
यस्मिन् यस्मिन्नहोरात्रे विहितं कर्म यद्द्विज ! ।
समापयेत् तत्तस्मिन् यत्नतोऽवश्यमेव हि ॥

महोत्सवः सदाकालं विहितं न व्यतिक्रमेत् ।

(७) नित्यनैमित्तिके प्राप्ते ह्येकस्मिन् समये सदा ।
पूर्वं नैमित्तिकं कृत्वा पश्चान्नित्यं समाचरेत् ॥

(८) नित्ये कुण्डेऽन्यथा स स्यान्नित्यै नैमित्तिकेऽपि च ।
अग्नौ निवेदयेद् विप्र ! भूषणं न तु होमयेत् ॥

(९) एवं सर्वेषु यागेषु भवेत् पुण्याहवाचनम्

(१०) नदीषु दीर्घिकायां वा तटके निर्भरे ह्रदे ।
सम्भवे सति कुर्वीत जलावासं यथाविधि ॥
असम्भवे जलद्रोण्यां कटाहे धातुनिर्मिते ।
यथा सम्यवमन्यस्मिन् पात्रे वा मृन्मयादिके ॥
अल्पतोये श्मशानान्ते लवणोदकपरिप्लुते ।
कटुके च कषाये च तिक्ते फेनैश्च दूषिते ॥
चैत्यवृक्षसमीपे च नीचावाससमीपके ।

वर्णान्तरे च युते स्वल्पे उषरे शैवलान्विते ॥
एवमादिषु दुष्टेषु जलावासं न कारयेत् ।
एकत्रिपञ्चरात्रं वा जलमध्येऽधि वासयेत् ।
देशकालानुरूपेण सद्यो वा जलवासनम् ॥

(११) गुग्गुल्वाज्यैर्द्विजारोग्यं शुभैर्धात्रीफलैस्तथा ।
शर्करैर्बिल्वफलकैः पञ्चगव्यसमुच्चितैः ॥
आज्याक्तैः पद्मबीजैश्च लक्ष्मीं शीघ्रं प्रयच्छति ।
उत्पलैर्वश्यकामस्तु भोगकामश्च होमयेत् ॥
दूर्वाङ्कुरैश्च होमेन आयुषो वृद्धिमाप्नुयात् ।
एधोभिश्च शुभैर्होमो माषैः शान्तिप्रदः प्रभुः ॥
तिलानां शस्यते होमो हरिणाननमुद्रया ।
घृतस्य कार्षिको होमः क्षीरस्य च विशेषतः ॥

शुक्तिलात्राहुतिर्दध्नः प्रसृतिः पायसस्य च।
ग्रासार्धमानसन्नानां भक्ष्याणां स्वप्रमाणतः॥

तृतीयं मूलकन्दानां पुष्पाणां स्वप्रमाणतः।
सर्वेषामेव बीजानां मुष्टिना होममाचरेत्॥

अग्राङ्गुलिस्तु लाजानां शालीनां पञ्चकं हुनेत्।
फलानां स्वप्रमांणं च पल्लवानां तथैव च॥

कर्कन्धुमात्रा गुलिका होतव्या गुग्गुलोः सदा।
धात्रीफलप्रमाणं वा सम्भवे सति होमयेत्॥

दूर्वाकाण्डानि विप्रेन्द्र चतुरष्टाङ्गुलानि वा।
समित्प्रादेशमानेन समच्छेदास्त्वगन्विताः॥

(१२) स्वाहाकारं सदा होमे पूर्णायां वौषडेव च।
तमेव शान्तिके कुर्याद्वृपडाप्यायने तथा॥
स्वधां पितृक्रियायां च फट्कारं क्षयकर्मणि।

विद्वेषे हुं वशे ह्रीं च नमो मोक्षप्रसिद्धये ॥
मोक्षार्थी स्नापयेद्देवं सर्वकालं यथाविधि ।
रिपूणां निग्रहार्थाय दिवा कुर्यात्तु सर्वदा ॥
स्वर्गकामस्तु पूर्वाह्णे धर्मार्थी दिनमध्यमे ।
दिनान्ते सर्वभोगार्थी प्रायश्चित्तेषु सर्वदा ॥
चन्द्रसूर्योपरागे च तत्काले स्नापयेद्विभुम् ।
संक्रान्तिकालविज्ञानान्नाड्यः षोडश षोडश ॥
तदानीं स्नापयेद्देव मनुक्रान्ते हुनेन्मनुम् ।
(१३) सर्वथा होमकर्मार्थं तिलमाज्यं न लोपयेत् ।
तिलाज्ययोरभावे तु हवनं स्यान्निरर्थकम् ॥
(१४) मूषिकासर्पमण्डूकचचुन्दर्यादिजन्तुभिः ।
स्थापिते कलशे स्पृष्टे लङ्घिते सति तं त्यजेत् ॥
पुनरन्यं तथा स्थाप्य जपेन्मूलशतं गुरुः ।

(१५) छिन्ने भिन्नेऽग्निना दग्धे नष्टे मूषिकदंशिते ॥
विण्मूत्ररुधिरापेयरेतोनिष्ठीवनादिभिः ।
दूषितं ध्वजमुत्सृज्य प्राग्वदन्यं समाहरेत् ॥
(१६) यागालयं तु सर्वत्र गव्यैरभ्युक्ष्य पञ्चभिः ।
द्रव्याणि यागयोग्यानि तत्तत्स्थाने नियोजयेत् ॥
(१७) गृह्णीयात् पञ्चगव्यानि मृत्पात्रे नूतने शुभम् ।
गोमूत्रं गोमयं क्षीरं दधिमस्तु च पञ्चमम् ॥
कपिलाया जरायां वा पञ्चगव्यं प्रशस्यते ।
तयोरभावे चान्यासां गवां गव्यं विधीयते ॥
नार्ताया न च गर्भिण्या न वृद्धायाः कदाचन ।
नावत्साया उपादेयं धेनोर्मूत्रं शकृद् द्वयम् ॥
भूयिष्ठं गोमयं ग्राह्यं सोष्णं क्रिम्याद्यदूषितम् ।
निष्पीड्य सम्यग्गृह्णीयाद्गोमयस्य रसं पुनः ॥

सद्यस्तप्तं घृतं शुद्धमहोरात्रोषितं दधि ।
क्षीरं ग्राह्यमतप्तं च दशाहाज्जन्मनः परम् ॥
प्रोक्षणे स्नपने पञ्चगव्यमन्त्रा उदीरिताः ।
स्थापने कथितं मानमभिषेकविधावपि ॥
भूमिसंशोधनार्थं च तत् प्रोक्षणे पञ्चकं समम् ।
गोमयेन समं मूत्रं दधि स्याद् द्विगुणं ततः ॥
दध्नश्चतुर्गुणं सर्पिः सर्पिषोऽष्टगुणं पयः ।
प्राशने पञ्चगव्यानां प्रमाणमिदमीरितम् ॥

(१८) गोमयं च नवं ग्राह्यं भूमिष्ठं धेनुसंभवम् ।
सजलं शिथिलं शुष्कं कीटवच्च विवर्जयेत् ॥

(१९) आवाहने तथाऽभ्यङ्गे स्नानारंभावसानयोः ।
तथा तिलकदाने च दीपमात्रानिवेदने ॥

नीराजने त्वाहरणे नैवेद्यस्य महानसात् ।
तन्निवेदनकाले तु पूर्णाहुत्यवसानके ॥
जलाहरणकाले तु यानारोहावरोहयोः ।
कवाटयोर्विघटने तथा वन्धेद्द्विजोत्तम ॥
एतेषु नित्यकालेषु शङ्खमापूरेत् त्रिधा ।
(२०) अङ्कुरान् श्यामलान् रक्तान् कृष्णान् तिर्यग्गतां स्तथा ।
अप्ररूढान् मुनिश्रेष्ठ ! वर्जयेत्तु प्रयत्नतः ॥
श्यामेषु द्रव्यनाशः स्याद्रक्तेषु कलहो भवेत् ।
कृष्णेषु मानसीपीडा रोगी तिर्यग्गतेषु च ॥
अप्ररूढेषु मरणं भवेत् तत्र न संशयः ।
शुभं पीतेषु शुक्लेषु ऋजुस्तूर्ध्वंगतेस्वपि ॥
सर्वसंपत्समृद्धिश्च कर्त्तुः कारयितुर्भवेत् ।
एवं सर्वेषु यागेषु अङ्कुरारोपणं भवेत् ॥

(२१) उत्तमोत्तमपूजायां चन्दनं त्रिपलं भवेत्।
सपादं मुख्यकल्पे तु द्विपलं निष्कहीनकम् ॥
अधमाधमकं भावदनुकल्पे ऋतुचये।
पलमेकं सनिष्कं स्यान्निष्कैकं ह्रासयेत् क्रमात् ॥
चन्दनं निष्कमानं तु यथा स्यादधमाधमे।

## ( वर्णोच्चारण काल में ही हस्तप्रदेश का विधान )

समम्मुच्चारयेद्वर्णान् हस्तेन च मुखेन च।
स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत् स्थितौ ॥

## ( वेदाध्ययन के पूर्व विद्यार्थी की परीक्षा )

दन्तुर (ऊँचे दांत वाला), ओठ लंबे वाला, मूर्ख या साफ न बोलने वाला, नाक का रोगी, तोतली बोली बोलने वाला और जो रुक्-रुक् कर बोलता हो, ऐसा व्यक्ति वेद नहीं पढ सकता।

## ( उदात्तादि के वर्ण )

उदात्त स्वर का सफेद, अनुदात्त स्वर का रक्तवर्ण और स्वरित स्वर का कृष्णवर्ण होता है।

## ( उदात्तादि के देवता )

उदात्त स्वर का अग्नि, अनुदात्त का सोम तथा स्वरित स्वर का सविता देवता होता है।

## ( उदात्तादि स्वर की जाति )

उदात्त स्वर ब्राह्मण, अनुदात्त स्वर क्षत्रिय और स्वरित वैश्य जाति का होता है।

## ( उदात्तादि स्वर के गोत्र )

उदात्त स्वर का भारद्वाज, अनुदात्त का गौतम तथा स्वरित का गार्ग्य गोत्र होता है।

( उदात्तादि स्वर के छन्द )

उदात्त स्वर का गायत्री, अनुदात्त स्वर का त्रैष्टुभ और स्वरित स्वर का जगती छन्द होता है।

( वेदसंहिता, पद और क्रम पढने का फल )

जो यजुर्वेद संहिता पढता है उसे आदित्यलोक की प्राप्ति होती है। जो पद पाठ—पढता है वह चन्द्रलोक जाता है तथा क्रम पाठ जो पढता है वह सूक्ष्म अनामय ब्रह्मलोक को जाता है।

इससे यह भी सिद्ध होता है कि वैदिक छात्रों को क्रमशः संहिता, पद फिर क्रम पाठ पढना चाहिये।

( संहिता आदि के नामों में पुण्य विशेष )

संहिता पढने से यमुना नदी जल स्नान का फल होता है। पद पाठ से सरस्वती नदी जल स्नान पुण्य तथा क्रम पाठ से गंगा स्नानजन्य फल ( मुक्ति ) होता है।

### ( वैदिक छात्रों को दतवन आदि में विशेषता )

खदिर, कदंब, करवीर, करंजक आदि की लकड़ी से दतवन करें।

( १ ) वेदों के स्वाध्याय के आरंभ में ही ओंकार लगाना चाहिये।

( २ ) हाथ, पैर धोकर अत्यन्त पवित्रावस्था में त्रैवर्णिक सति संभव में ब्रह्मचर्ययुक्त होकर वेद का स्वाध्याय करे।

( ३ ) अभीष्ट आसन पर बैठकर वेद का स्वाध्याय करे।

( ४ ) एक योजन के जाने बाद वेद का स्वाध्याय न करे।

( ५ ) वेदपाठी को मधुर, घृत आदि से युक्त भोजन करना चाहिये।

( ६ ) शूद्र, पतित आदि जिसप्रकार न श्रवण कर सके ऐसी शुद्ध भूमि में वेद का स्वाध्याय करे।

( ७ ) निर्भीक तथा शान्त मन से वेद के वर्णों का उच्चारण करना चाहिये।

## ( उदात्तादि स्वरों के साधारण भेद )

( १ ) जिस अक्षर पर कोई स्वर न हो वह उदात्त होता है। इसके दो स्थान होते हैं एक भ्रू प्रान्त भाग और दूसरा शरीर के वामभाग की ओर होता है।

( २ ) जिस अक्षर के नीचे रेखा हो उसको अनुदात्त कहते हैं। इसके भी दो स्थान होते हैं—पहला इसका स्थान शरीर के दक्षिण भाग में होता है और दूसरा हृदय के सम्मुख होता है।

प्रतिशाख्यकार ने उपरोक्त दोनों का लक्षण प्रथम अध्याय के एक सौ आठ और एक सौ नौ के सूत्रों में बताया है।

( ३ ) जात्य, अभिनिहित, क्षैप्र, प्रश्लिष्ट, तैरोव्यञ्जन, तैरोविराम, पादवृत्त और ताथाभाव्य ये आठ स्वरित के भेद हैं।

इनके उदाहरण क्रमशः यों हैं—धान्यमसि। ते ऽसरसाम्। त्र्यम्बकम्। अभीन्धताम्। इडेरन्तेहव्येकाम्ये। गोपतावितिगो। पंतौ। ( यहाँ

पर द्वितीयावृत्ति में गकार से परे जो अकार है जिसका उदात्त अवग्रह ( पदपाठ ) हुआ है। उससे परे जो पकारोत्तरवर्ति स्वरित अकार को ही तैरोविराम कहा जाता है। ध्रुवाऽअंसद्न्नृतस्यं।

यहाँ 'ध्रुवा' में आकार और 'असदन्' के अकार के मध्य में विवृत्ति नामक जो अर्धखण्ड अनामक अकार है वह सन्धि के अभाव का सूचक है। उसे पादवृत्त कहते हैं।

तनूनपूत्रऽइति। तनू न,प्त्रें। यहाँ तनूनप्त्रें—

इस उदाहरण में तकार तथा नकार दोनों उदात्त है। इन दोनों के मध्य में 'नू' है वह अनुदात्त स्वर विशिष्ट है वही पद पाठ में विराम का हेतु होने से 'ताथाभाव्य' कहा जाता है। माध्यन्दिनशाखा में ताथाभाव्य स्वर को अनुदात्त स्वर विशिष्ट मानते हैं। अन्य शाखावाले ताथाभाव्य को स्वरित स्वरविशिष्ट मानते हैं। जोकि माध्यन्दिनशाखावालों के लिए विरुद्ध पड़ता है। इसकी विशेष बात 'उदाद्यन्तोन्यवग्रहस्ताथाभाव्यः'

प्रातिशाख्य ( सूत्र १२. अ. १ ) में देखनी चाहिये। कई ग्रन्थों के अवलोकन से निष्कर्ष यही मिलता है कि ताथाभाव्य को माध्यन्दिन शाखा वाले स्वरित न मानकर उसको कंप ही मानते हैं। इसीलिए वे लोग पद पाठ में कंपन करते हैं। उदाहरणार्थ—

अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित्।
ताथाभाव्यो भवेत् कम्पस्तनूनप्त्रे निदर्शनम् ॥

इसीप्रकार स्वरित विशिष्ट अक्षर से परे जो अनुदात्त होते हैं उनको प्रचय कहते हैं।

एक श्रुति नाम से भी प्रचयों की प्रसिद्धि है।

उदाहरणार्थ—गणानों त्वा, यहाँ पर स्वरित न से परे 'त्वा' अनुदात्त है उसीको प्रचय कहते हैं। इसका प्रदर्शन स्वरित के साथ ही होता है।

# वेद विषय में स्मृतियों का विचार

वाधूलस्मृतौ—वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात्।
तावतीं ब्रह्महत्यां वै वेदविक्रय्यवाप्नुयात्॥
प्रख्यापनं प्राध्ययनं प्रश्नपूर्वं प्रतिग्रहः।
याजनाध्यापने वादः षड्विधो वेदविक्रयः॥

आङ्गिरसमृतौ—स्वयं यद्यसमर्थश्चेन्मन्त्रोच्चारणकर्मणि।
येन केन च विप्रेण वाचनीयं प्रयत्नतः॥
राक्षसानां विनाशाय वेदघोषः प्रशस्यते।
स घोषो ब्राह्मणैः कर्तुं शक्यते प्रकृते किल॥

मार्कण्डेयस्मृतौ—धनं तु विनियोगेन निधनं प्रतिपद्यते।
वेदाख्यं परमं श्रीमद् धनं लोकोत्तरं यतः॥

विनियोगेन नितरामेतिवृद्धिं प्रपद्यते ।
प्रतिक्षणं प्रतिदिनं प्रतिमासं तथैव च ॥

कण्वस्मृतौ—अनधीत्यैव यो वेदं शास्त्रेषु कुरुते श्रमम् ।
स पापीयानृषिणान्मुक्तो नैव भवत्यलम् ॥

दक्षः— वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदभ्यासो हि पञ्चधा ॥

हारीतः—मन्त्रार्थज्ञो जपन् जुह्वन् तथैवाध्यापयन् द्विजः ।
स्वर्गलोकमवाप्नोति नरकं तु विपर्यये ॥

नारदः—पुस्तकं प्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
भ्राजते न सभामध्ये जारगर्भं इव स्त्रियाः ॥

# शतरुद्रिय और रुद्र पर विचार

शतरुद्रिय शब्द कर्म नामधेय है। सिद्धान्तकौमुदीकार ने चातुरार्थिक प्रकरण में सौ रुद्र देवता जिसमें हों उसे शतरुद्रिय या शतरुद्रीय कहा है। असंख्यात रुद्र देवता जिसमें हों उसे शतरुद्रीय कहा जाता है—यह रुद्र कल्पद्रुम का मत है।

शतरुद्रियशब्द संपूर्ण रौद्राध्याय को कहा जाता है। इसी बात को परशुराम कारिकानुसारिविधानपारिजात काशीदीक्षित आदि भी कहते हैं। यही युक्ततर पक्ष है।

मैथिल संप्रदाय मत से—

षट् षष्टिमूलजाप्येन षोडशर्चं पुनर्जपेत्। एष ते द्वे नमस्ते द्वेन तं द्वितयमेव च॥
मीढुमचतुष्कं च वयं सोमाष्टकं ततः। वेदज्ञादिभिराख्यातमेतद्वै शतरुद्रियम्॥

इन दो श्लोकों द्वारा इसी को शतरुद्रिय कहा है। पर रुद्रकल्पद्रुमादि निबन्धकारों ने निर्मूल कहा है।

जो शतरुद्रिय को पढता है वह पवित्र होता है। सोने की चोरी करनेवाले, सुरापी, ब्रह्म हत्या आदि पवित्र होते हैं। इसके पाठ ( जप ), हवन और अभिषेक का महत्त्व विष्णुधर्मोत्तर पुराण, पद्मपुराण, शिवगीता और बोधायन सूत्र में विहित है।

रुद्र में एकवचन और बहुवचन के प्रयोग मिलते हैं, एकवचन में सम्पूर्ण रौद्राध्याय को एकवचन कहा है। बहुवचन में—रौद्राध्याय में बहुत मन्त्र हैं यों सिद्ध होगा। इसीप्रकार त्रेधापक्ष, षोढा प्रकार, षोडशधा प्रकार, चतुश्चत्वारिंशत्प्रकार, अष्टाचत्वारिंशत्प्रकार, एकषष्ट्युत्तर शतधाविभाग और पंचविंशत्युत्तर चतुःशतधाविभाग। यों आठ पक्ष सिद्ध होंगे। यह रुद्रकल्पद्रुमादि में स्पष्ट है।

बृहत्पराशरीकार ने पञ्चधा, अष्टधा, दशधा और एकादशधा विभाग

माना है। जो अब प्रचलित नहीं हैं। उपरोक्त पद्यों में भी केवल एकषष्ट्युत्तर शतधा विभागपच विशेष रूप से अब प्रचलित है। हम देख रहे हैं।

## नमक और चमक की प्रधानता

जावालोपनिषद् में—शतरुद्रिय पाठ की ही प्रधानता कही है। अतः चमक पाठ रुद्र के साथ आवश्यक नहीं है।

यदि आप कहें कि—रुद्रों की तरह चमक अनुवाकों की प्रधानता स्वीकार कर ही ली जाय।

उत्तर—फलवान् दर्शपूर्णमासशब्दवाच्य आग्नेयादि याग समुदाय की सन्निधि में श्रूयमाण अफल प्रयाज-अनुयाज यागों का जैसे—दर्शपूर्णमास याग अंग है, तद्वत् फलवान् रुद्रजप की सन्निधि में श्रूयमाण अफल चमकजप रुद्रजप का अंग है। अतः काण्व और माध्यन्दिनादि शाखावालों को चमक पाठ का अनुष्ठान फ़लाधिक्य मात्र है। न करने पर रुद्र में वैगुण्य नहीं आता है।

यदि यह कहें कि—

नमकं चमकं चैव पौरुषं सूक्तमेव च। नित्यं त्रयं प्रयुञ्जानो ब्रह्मलोके महीयते॥

इस काशीदीक्षितधृत वचन से नमक, चमक और पुरुषसूक्त से पाठ करने से ब्रह्मलोक मिलता है।

यह ठीक नहीं, कारण इस वाक्य में—स्वतन्त्र नमकादित्रिक प्रयोग का ही विधान है। मिताक्षरा और बृहत्पराशरस्मृतिकार ने रुद्र मात्र का ही पाठ हो सकता है। चमक को रुद्रशब्द वाच्यत्वाभाव कहा है।

किसी का मत है कि—शाखाधिकरणन्यायमूलकत्व होने से अविरुद्ध है, अतः चमक का अनुष्ठान करना ही युक्त है। लेकिन तैत्तरीय शाखावालों को चमक अनुवाक ग्यारह है। वाजसनेय शाखावालों की आठ ही है। ऐसी परिस्थिति में रुद्राध्याय की सम्पूर्ण आवृत्ति के बाद चमकानुवाक पढ़ें।

विशेष विधि से सामान्यविधि का उपसंहार हो जाता है। वसोर्धारा

होम में कात्यायन ने आठ ही अनुवाकात्मक चमक मन्त्र समुदाय को ही एक मन्त्रत्व कहा है। उसका वसोर्धारा होम विषयकत्व होने से श्रुति में भी कहा है। अतः प्रकृत में रुद्रजपादि विषयक चमक का अनुष्ठान रुद्र के साथ नहीं हो सकता।

हेमाद्रिमतसे—

जपित्वा सर्वरुद्राँश्च चमकाद्यं ततो जपेत् । पुनरेतज्जपेत्सर्वं द्वितीयं चमकं तथा ॥
एवमेकादशगुणान् क्रमेण चमकाँस्तथा । रुद्रैकादशिनी त्वेषा सर्वकामफलप्रदाः ॥

## रुद्रभेद

रूप, रुद्र, रुद्री, महारुद्र और अतिरुद्र। इसमें उत्तरोत्तर पक्ष ही अत्युत्तम है। कोई अत्यतिरुद्रयज्ञकी कल्पना करते हैं। इसका आधार शास्त्रीय कोई नहीं मिलता। कारण उत्तमोत्तम शब्द ही बनाता है कि अत्यतिरुद्र की कल्प करता अत्यन्त मूर्खता है।

## भूतशुद्धि और मातृकादिन्यास

भूत शुद्धि और मातृकान्यास को रुद्रांग मान कर जो न्यास करने कराते हैं सब निर्मूल है। क्योंकि ये न्यास तान्त्रिकों के लिये है, वैदिक रुद्र आदि में और सन्ध्योपासनादि में इसकी आवश्यकता नहीं हैं स्मृति प्राप्त वचनों द्वारा उपवेशनादि कथनों का आनर्थक्य हो जायगा। इसीलिए देवयाज्ञिक नारायणभट्ट आदि ने भूतशुद्ध्यादिन्यास रुद्रांगत्व मान कर नहीं कहा है।

## छन्दःपुरुषन्यास

रुद्रयागादि में सर्वानुक्रमसूत्रविहित छन्दःपुरुषन्यास करने की वृहत्परिपाटी काशीस्थवैदिकोंने कर रखी है। यह युक्त नहीं है। यह न्यास ब्रह्मयज्ञांग है। यह स्पष्ट रुद्रकल्पद्रुमादि में कहा है।

## मनोजूत्यादिन्यास

रुद्रयागादि यज्ञों में 'मनोजूतिः' इन मन्त्रों से ही हृदयादिन्यास करने

की महतीप्रथा लोक में देखते आ रहे हैं। 'रुद्रकल्पद्रुमादिनिबन्धकारों का मत है कि—यह न्यास अनावश्यक है। केवल मूर्खों के लिए पाण्डित्यमात्र का प्रदर्शन करता है।

## सद्योजातादिन्यास

रुद्रयागादियज्ञों में 'सद्यो जातम्' इत्यादिमन्त्र से पञ्चवक्त्रन्यास करते हैं, यह ठीक नहीं है। कारण—यह न्यास प्रतिष्ठा का अंग है। केवल यजमान का प्रतारणमात्र करना है। अतः निर्मूल है। यह शान्तिरत्न रुद्रकल्पद्रुम आदि निबन्धों का मत है।

## योनिमुद्रा प्रदर्शन

रुद्रयागादियज्ञों में योनिमुद्रा 'एष ते रुद्रभागः' इस मन्त्र से करते है। यह उपयुक्त है। कारण निबन्धविशिष्टकारों के मत से अग्राह्य है।

## ऋचं वाचम्—

रुद्रयागादियज्ञों में अन्त में 'ऋचं वाचम्' इस अध्याय को पढ कर 'ओं शान्तिः शान्तिः शान्तिः' यह पढने की प्रथा है। रुद्रकल्पद्रुमादि निबन्धों को पूर्वापर देखने से पता चलता है कि उपरोक्त दोनों में वैकल्पिक है। अतः एक का ही शान्ति कामनार्थं पाठ कर सकता है। कुछ लोगों का कथन है कि—द्यौः शान्तिः, इस मन्त्र का पाठ करे। वस्तुतः रुद्रांग मान कर पाठ करना हेय ही है।

## न्यास की इयत्ता

हवन और जपादि में न्यास बराबर है। केवल अभिषेकात्मक रुद्र में न्यास विशेष है। अतः 'प्रजनने ब्रह्मा तिष्ठतु' इत्यादिन्यास का पृथक् विधान रुद्रकल्पद्रुमादि में कहा है। वह युक्ततम है।

## काशी के वैदिकों का न्यासों के प्रति मन्त्रोच्चारण में भ्रम

काशी के वैदिकों ने रुद्रयागादि भागों में 'यज्जाग्रतः' इत्यादि मन्त्रों

द्वारा न्यास समाप्त कराकर फिर 'यज्जाग्रतः' से पाठ करने की महती प्रथा कर रखी है, वह भ्रम ही मूलक है, अशास्त्रीय है। अतः विनियोगों के मन्त्रों को दो वार पढना अनावश्यक है यह समस्त निबन्धकारों का मत है।

## नमक जपानन्तर विचार

नमक जपा ( पाठ ) नन्तर चमक का जप करे या 'वयठं सोम' और 'उग्रश्च' इन दोनों रुद्री के अध्यायों का पाठ करे।

अन्य निबन्ध मतों से उपरोक्त दोनों अध्यायों का पाठकर चमक का पाठ करें।

रुद्रकल्पद्रुम आदि निबन्धकारों के मत से नमक पाठानन्तर-अव्यवहित-काल में ही चमक जप युक्त है और लोकव्यवहार में भी रुद्रैकादशनी रुद्री में भी नमकाध्याय के पाठ समाप्ति व्यवहितोत्तर काल में ही चमक जप का विधान करते हैं।

वस्तुतः—रौद्राध्याय की समाप्तिकालानन्तर 'उग्रश्च' इत्यादि मन्त्रों

का पाठ जो करते हैं वे विहित विधान को नहीं जानते हुए विपरीत करते हैं, अतः वन्ध्य हैं। अतः रुद्रादि पाठ में महच्छिरजप और जटाजप कृताकृत है। क्योंकि कोई विधान मानते हैं। कोई अविधान कहते हैं। ऐसी स्थिति में—चमक जपवत् कृताकृत ही है। करने से फलाधिक्य ('एक कर्मणि गुणविशेषे फलविशेषः' कात्यायन श्रौतसूत्र—१।१०।११ ) हो सकता है, न करने से रुद्रों के अनुष्ठान में वैगुण्यता नहीं आ सकती।

यदि ये कहें कि रुद्र की प्रति आवृत्ति के अन्त में महच्छिरजप और जटाजप का पाठ किया जाय तो क्या क्षति है। उत्तर—महच्छिर और जटाजप को रुद्रशब्दवाच्यत्वाभाव है अतः सर्वावृत्यन्त में एकवार जप करे यह सम्प्रदायविदों का मत है।

देवयाज्ञिक ने—हेमाद्रि और महार्णव आदि में अदर्शन हो जाने से महच्छिर और जटाजप की अवहेलना कर दी है।



# श्रीशुक्लयजुर्वेद-संहिता

## ❀ अथ प्रथमो[2]ऽध्यायः[3] ❀

ॐ इषेत्त्वोर्जेत्त्वाव्वायवस्त्थदेवोव÷ सविताप्प्रार्प्पयतुश्श्रेष्ठ्तम-

---

सर्वैश्वर्यविधातारं सर्वस्फूर्तिविधायकम् ।
सर्वमङ्गलदं नित्यं गणराजं नमाम्यहम् ॥ १ ॥
भो ! भो ! भासुरभूसुराः सुमतयः काले कलौ सांप्रतम् ।
वेदो वै भगवान् हिताय विदुषां योऽत्रावतीर्णः स्वयम् ॥
यत्पादप्लवसंश्रयेण शतशो वेदार्थपारङ्गताः ।
श्रीविद्याधरसंज्ञितं स्वपितरं प्रख्यातकीर्तिं भजे ॥ २ ॥

'१—अध्ययनारम्भस्तु प्रथमं स्ववेदस्यैव कार्यः-'यच्छाखीयैस्तु संस्कारैः संस्कृतो

मायकर्म्मणऽआप्प्यायद्ध्वमग्घ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽ·

ब्राह्मणो भवेत् । तच्छाखाध्ययनं कार्यमन्यथा पतितो भवेत् ।

हरिः "ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात्"। भरद्वाजशिक्षायाम्—प्रश्नानुवाकाद्यारम्भे सविसर्गोच्चको हरिः । न सन्धिः प्रणवे नित्यं विरामे स्वरितोभवेत्"। सविसर्गउदात्तो हरिशब्द आरम्भेप्रयोक्तव्यः। अन्तेऽध्ययनसमाप्तौ स्वरितो हरिशब्दो भवेत्। अत्र वेदारम्भ इषेत्वेत्यादितः कर्तव्यः। यद्यपि व्रतादेशे प्रथमम् 'आग्नेयं व्रतं प्रथममादिशेत्' इति विधिः, तदनुरोधेन समिधाऽग्निमित्याद्यारम्भः कर्तव्य इत्यापाततः प्रतीयते, तथापि तस्य पृथगध्ययनकाले तदारम्भवेऽपि वेदारम्भकाले प्रथमाध्यायस्य परित्यागे प्रमाणाभावात् । संस्कारभास्करादौ सर्वत्र प्रथमाध्यायादेवारम्भस्य विहितत्वात्तत आरम्भैव वेदाध्ययनम् ।

२—अध्ययनक्रमः—'हस्तौ सुसंयतौ धार्यौ जानुनोरुपरि स्थितौ । गुरोरनुमितिं कुर्यात्पठन्नाऽन्यमतिर्भवेत् । ऊरुभागे तृतीये तु कूर्परं न्यस्य दक्षिणम् । कूर्परम्–

अयक्ष्मामावस्तेनऽईशतमाघशꣳसोदूध्रुवाऽअस्मिन्गोपतौस्यातबह्वी·

प्रगण्डप्रकोष्ठयोः सन्धिम् । करमित्यपि पाठभेदः । या० शि० श्लो० १९-२० ।

३—'वेदाभ्यासो हि विप्राणां परमं तप उच्यते ।'

४—'ॐकारं वेदेषु' 'अथकारं भाष्येषु' ( शु० य० प्रा० १।१८।१९ ) इति व्यवस्थाकृता । 'प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्वेण ततो वेदान्समारभेत् ॥ आरभेत्–अत्र परस्मैपदमार्षम् । या० शि० श्लो० २२ । "कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः । स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद् बुधः" या० श्लो० २३। प्रशान्तः–शान्तमनाश्च सन् ।

५—देवा ÷ इत्यत्र–स्वरितं यत्रवेत्किञ्चित्सवकारोष्मकं ततः । ह्रस्वं वा यदि वा दीर्घं निक्षेप उभयोरपि ( या० ६६ ) इति वाक्यात् । 'देवोवं ÷ सविता' इत्यत्र 'अङ्गुलिद्वयप्रक्षेपः । एवम् 'अति विश्वा ÷' इत्यत्रापि ( शु. १२।८४ ) वायव्यैः वायव्या ÷ इत्यादौ च अङ्गुलिद्वयप्रक्षेपः ।

र्ष्जमानस्यपशून्पाहि ॥ १ ॥ व्वसोःपवित्त्रमसिद्यौरसिपृथि-
व्व्यसिमातरिश्श्वनोघर्म्मोसिविश्श्वधाऽअसि । परमेणधाम्नाद्दृꣳ-
हस्वमाह्वार्म्मातेयज्ञपतिर्ह्वार्षीत् ॥ २ ॥ व्वसोःपवित्त्रमसिशत-

१—'हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ।' या० श्लो० २६ हस्तहीनं तु योऽधीते मन्त्रं वेदविदो विदुः । न साधयेद्याजुषाणि भुक्तमव्यञ्जनं यथा ॥ ऋचो यजूꣳषि सामानि हस्तहीनानि यः पठेत् । अनृचो ब्राह्मणस्तावद् यावत्स्वारं न विन्दति ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति । अनृचः—अवैदिकः, या० श्लो० ३९-४१ ।

२—मनुः 'वेदारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्री चानुपूर्वेण ततो वेदान् समारभेत् । ॐओङ्कारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् । ओंकारं च पुनः कृत्वा भूमिं स्पृष्ट्वा समापयेत् ।

धारंव्वसोः पवित्त्रंमसिसहस्रंधारम् । देवस्त्वासवितापुनातुव्वसोः
पवित्त्रेणशतधारेणसुप्वाकामधुक्षः ॥ ३ ॥ साव्विश्वायुःसाव्विश्व-
कर्म्मासाव्विश्वधायाः । इन्द्रस्यत्वाभागꣳसोमेनातनच्मिव्विष्णो
हव्यꣳरक्ष ॥ ४ ॥ अग्नेव्व्रतपतेव्रतञ्चरिष्यामितच्छकेयन्तन्मेराध्य-
ताम् । इदमहमनृतात्सत्यमुपैमि ॥ ५ ॥ कस्त्वायुनक्तिसत्वायुनक्तिक-
स्मैत्वायुनक्तितस्मैत्वायुनक्ति । कर्म्मणेवांव्वेषायवाम् ॥ ६ ॥ प्रत्यु-
ष्टꣳरक्षः प्रत्युष्टाऽअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः । उर्व्वन्त-
रिक्षमन्वेमि ॥ ७ ॥ धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतंयोस्मान्धूर्व्वतितन्धू-
र्व्वयंव्वयन्धूर्व्वामः । देवानामसिव्वह्नितमꣳसस्नितमम्पप्रितमञ्जु-

ष्टतमन्देवहूतमम् ॥ ८ ॥ अह्रुतमसिहविर्द्धानन्दृꣳहस्वमाह्वार्म्मा-
तेषज्ञपतिर्ह्वार्षीत् । विष्णुस्त्वाक्क्रमतामुरुव्वातायापहतꣳ रक्खो-
षच्छन्ताम्पञ्च ॥ ९ ॥ देवस्यत्वासवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्यां-
म्पूष्णोहस्ताब्भ्याम् । अग्नयेजुष्टङ्गृह्णाम्यग्नीषोमाब्भ्याञ्जुष्टङ्गृह्णामि
॥ १० ॥ भूतायत्वानारातयेस्वरभिविक्ख्येषन्दृꣳहन्तान्दुर्ष्याः पृथि-
व्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्म्यदित्याऽउप-
स्थेग्नेहव्यꣳरक्ख ॥ ११ ॥ पवित्रेस्थोव्वैष्णव्यौसवितुर्व्वः प्र-
सवऽउत्पुनाम्म्यच्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः । देवीरापो-
ऽअग्रेगुवोऽअग्रेपुवोग्रऽइममद्ययज्ञन्नयताग्रेयज्ञपतिꣳसुधातुंयज्ञ-

ज्ञपतिन्देवयुवम् ॥ १२ ॥ युष्माऽइन्द्रोवृणीतवृत्रतूर्य्येयूयमिन्द्रम-
वृणीध्वंवृत्रतूर्य्येप्प्रोक्षितास्थ । अग्नयेत्वाजुष्टम्प्प्रोक्षाम्म्यग्नी-
षोमाब्भ्यान्त्वाजुष्टम्प्प्रोक्षामि । दैव्यायकर्म्मणेशुन्धध्वन्देवयज्ज्या-
यैयद्वोशुद्धाःपराजघ्नुरिदंव्वस्तच्छुन्धामि ॥ १३ ॥ शर्म्मास्यवधू-
तꣳरक्षोवधूताऽअरातयोदित्यास्त्वगसिप्प्रतित्वादितिर्व्वेत्तु । अद्रि-
रसिव्वानस्पत्योग्रावासिपृथुबुध्नःप्प्रतित्वादित्यास्त्वग्वेत्तु ॥ १४ ॥
अग्नेस्तनूरसिव्वाचोव्विसर्ज्जनन्देववीतयेत्वागृह्णामिबृहद्ग्रावासि-
व्वानस्पत्यःसऽइदन्देवेब्भ्योहविःशमीष्ववसुशमिशमीष्व । हविष्कृ-
देहिहविष्कृदेहि ॥ १५ ॥ कुक्कुटोसिमधुजिह्वऽइषमूर्ज्जमावद-

त्वयाव्वयᳪं॰सङ्घातᳪं सङ्घातञ्जेष्मव्वर्षवृद्धमसिप्प्रतित्वाव्वर्ष-
वृद्धंव्वेत्तुपरापूतᳪंरक्षःपरापूताऽअरातयोपहतᳪंरक्षोव्वायुर्व्वोव्वि-
विनक्तुदेवोव्वः सविताहिरण्यपाणिःप्प्रतिगृब्भ्णात्वच्छिद्द्रेणपाणिना
॥ १६ ॥ धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहिनिष्क्क्रव्यादᳪं सेधादेव-
यजंव्वह । ध्रुवमसिपृथिवीन्दृᳪं॰हब्ब्रह्मवनित्वाक्षत्रवनिसजातवन्न्यु-
पदधामिब्भ्रातृव्व्यस्यव्वधाय ॥ १७ ॥ अग्नेब्रह्मगृब्भ्णीष्ष्वधरुणम-
स्यन्तरिक्षन्दृᳪं॰हब्ब्रह्मवनित्त्वाक्षत्रवनिसजातवन्न्युपदधामिब्भ्रातृ-
व्व्यस्यव्वधाय । धर्त्रमसिदिवन्दृᳪं॰हब्ब्रह्मवनित्त्वाक्षत्रवनिसजात-
वन्न्युपदधामिब्भ्रातृव्व्यस्यव्वधाय । विश्श्वाब्भ्यस्त्वाशाब्भ्यऽउपद-

धामिचितंस्त्थोर्द्ध्वचितोभृगूणामङ्गिरसान्तपसातप्प्यद्ध्वम् ॥ १८ ॥
शर्म्मास्यवधूतꣳरक्षोवधूताऽअरातयोदित्यास्त्वगसिप्प्रतित्वादितिर्व्वे-
त्तु । धिषणासिपर्व्वतीप्प्रतित्वादित्यास्त्वग्वेत्तुदिवस्कम्भनीरसिधि-
षणासिपार्व्वतेयीप्प्रतित्वापर्व्वतीव्वेत्तु ॥ १९ ॥ धान्न्यमसिधिनुहि-
देवान्प्राणायत्त्वोदानायत्वाव्यानायत्वा । दीर्ग्घामनुप्प्रसितिमायुषे-
धान्देवोवः सविताहिरण्ण्यपाणिःप्प्रतिगृब्भ्णात्वच्छिद्द्रेणपाणिनाच-
क्षुषेत्वामहीनाम्पयोसि ॥ २० ॥ देवस्यत्वासवितुःप्प्रसवेश्विनोर्ब्बाहु-
भ्याम्पूष्णोहस्ताभ्याम् । सव्वपामिसमापऽओषधीभिःसमोषध-
योरसेन । सꣳरेवतीर्ज्जगतीभिःपृच्च्यन्ताꣳसम्मधुमतीर्म्मधुमतीभिः

पृच्यन्ताम् ॥ २१ ॥ जनयत्यै त्वा संयौमीदमग्नेरिदमग्नीषो-
मयोरिषे त्वा घर्म्मोऽसि विश्वायुरुरुप्रथा ऽउरु प्रथस्वोरु ते यज्ञपतिः प्र-
थतामग्निष्टे त्वचम्मा हिंसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके
॥ २२ ॥ मा भेर्मा संविक्था ऽअतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा-
भूयात्त्रिताय त्वा द्विताय त्वैकताय त्वा ॥ २३ ॥ देवस्य त्वा सवितुः प्र-
सवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतन्देवे-
भ्य ऽइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मते-
जा द्विषतो वधः ॥ २४ ॥ पृथिवि देवयजन्योषध्यास्ते मूलम्मा हिंसि-
षं व्रजङ्गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्याम्पृथि-

व्व्या ॐ शतेनपाशैठश्चो॑ऽस्मान्द्वेष्टि॒यञ्चं॑व्वयन्द्वि॒ष्मस्तमतोमामौ॑क् ॥ २५ ॥ अपाररुम्पृथि॒व्व्यैदे॑वयज॑नाद्वद्ध्यासंव्व्रजङ्गच्छगोष्ठानं-व्वर्षतुतेद्यौर्व्बधानदेवसवितःपरमस्याम्पृथिव्व्या ॐ शतेनपाशैठश्चो॑-स्मान्द्वेष्टि॒यञ्चं॑व्वयन्द्वि॒ष्मस्तमतोमामौ॑क् । अर॑रोदिवम्मापप्तो-द्रप्सस्तेद्याम्मास्कं॑न्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौर्व्बधानदेवस-वितःपरमस्याम्पृथिव्व्या ॐ शतेनपाशैठश्चो॑ऽस्मान्द्वेष्टि॒यञ्चं॑व्वयन्द्वि-ष्मस्तमतोमामौ॑क् ॥ २६ ॥ गायत्त्रेणत्वाच्छन्द॑सापरि॑गृह्णामित्त्रैष्टु-भेनत्वाच्छन्द॑सापरि॑गृह्णामिजाग॑तेनत्वाच्छन्द॑सापरि॑गृह्णामि । सु-क्ष्माचासिशिवाचासिस्योनाचासिसुषदाचासयूर्ज्जस्वतीचासिपय-

स्वतीच ॥ २७ ॥ पुराक्क्रूरस्यंव्विसृपोविरप्शिन्नुदादायपृथिवीञ्जी-
वदानुम् । यामैरयँश्चन्द्रमसिस्वधाभिस्तामुधीरासोऽअनुदिश्ययजन्-
न्ते । प्रोक्षणीरासादयद्विषतोव्वधोसि ॥ २८ ॥ प्रत्युष्टꣳरक्षःप्प्रत्युष्-
ष्टाअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः । अनिशितोसिसपत्नक्षि-
द्वाजिनन्त्वाव्वाजेद्ध्यायैसम्मार्ज्मि । प्रत्युष्टꣳरक्षःप्प्रत्युष्टाऽअरात-
योनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः । अनिशितासिसपत्नक्षिद्वाजि-
नीन्त्वाव्वाजेद्ध्यायैसम्मार्ज्मि ॥ २९ ॥ अदित्यैरास्नासिव्विष्णो-
र्व्वेष्पोस्यूर्जेत्वादब्धेनत्वाचक्षुषावपश्यामि । अग्नेर्जिह्वासिसुहूर्द्दे-
वेब्भ्योधाम्नेधाम्नेमेभवयजुषेयजुषे ॥ ३० ॥ सवितुस्त्वाप्प्रसवऽउ-

त्पुंनाम्म्यच्छिद्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः । सवितुर्व्वः प्रस-
वऽउत्पुंनाम्म्यच्छिद्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः । तेजोऽसिशुक्रम-
स्यमृतमसिधामनामासिप्प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥३१॥
इति प्रथमोऽध्यायः ॥

## ❀ अथ द्वितीयोऽध्यायः ❀

ॐकृष्णोऽस्याखरेष्ठोग्नयेत्वाजुष्टम्प्रोक्षामिव्वेदिरसिबर्हिषेत्वाजु-
ष्टाम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टम्प्रोक्षामि ॥ १ ॥ अदित्यैव्युन्द-
नमसिव्विष्णोस्तुपोस्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्थान्देवेभ्योभु-

वंपतयेस्वाहाभुवंनपतयेस्वाहाभूतानाम्पतंयेस्वाहा ॥ २ ॥ गन्धर्व्व-
स्त्वाविश्श्वावंसुःपरिदधातुव्विश्श्वस्यारिष्ट्यैयजंमानस्यपरिधिरंस्य-
ग्निरिडऽईडितः। इन्द्रंस्यबाहुरंसिदक्षिणोव्विश्श्वस्यारिष्ट्यैयजंमान-
स्यपरिधिरंस्यग्निरिडऽईडितः। मित्राव्वरुंणौत्त्वोत्तरतःपरिधत्ता-
न्ध्रुवेणधर्म्मणाव्विश्श्वस्यारिष्ट्यैयजंमानस्यपरिधिरंस्यग्निरिडईडितः
॥ ३ ॥ व्वीतिहोत्रन्त्वाकवेद्युमन्तꣳसमिंधीमहि। अग्ग्नेबृहन्तंमद्ध्वरे
॥ ४ ॥ समिदंसिसूर्य्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशंस्त्यै। सवितु-

१—इत्यत्र 'विश्वसहभुवपुषवसुषु' (शु० य० प्रा० ३।१०) विश्व इत्येतत्पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते।

र्न्नांहूस्त्थऽऊर्ण्णम्म्रदसन्त्वास्तृणामिस्वासस्थन्देवेब्भ्यऽआत्त्वाव्वसं-
वोरुद्द्राऽआदित्याः सदन्तु ॥ ५ ॥ घृताच्च्यसिजुहूर्न्नाम्म्नासेदम्प्रि-
येणधाम्म्नाप्प्रियꣳसदऽआसीदघृताच्च्यस्युपभृन्नाम्म्नासेदम्प्रियेणधा-
म्म्नाप्प्रियꣳसदऽआसीदघृताच्च्यसिद्ध्रुवानाम्म्नासेदम्प्रियेणधाम्म्ना-
प्प्रियꣳसदऽआसीदप्प्रियेणधाम्म्नाप्प्रियꣳसदऽआसीद । ध्रुवाऽअ-
सदन्नृतस्ययोनौताविष्ण्णोपाहिपाहियज्ञम्पाहियज्ञपतिम्पाहिमांय्यज्ञ-
न्न्यम् ॥ ६ ॥ अग्ग्नेव्वाजजिद्वाजन्त्त्वासरिष्यन्तंव्वाजजितꣳसम्मा-
र्ज्मि । नमोदेवेब्भ्यः स्वधापितृब्भ्यः सुयमेमेभूयास्तम् ॥ ७ ॥
अस्कन्नमद्यदेवेब्भ्यऽआज्ज्यꣳसम्भ्रियासमङ्घ्रिणाव्विष्ण्णोमात्त्वाव-

वेक्कमिषंव्वसुमतीमग्ग्नेतेच्छायामुपंस्थेषंव्विष्ष्णोस्त्थानंमसीतऽइ-
न्द्रोव्वीर्य्यमकृणोदूद्ध्वोऽध्वरऽआस्त्थात् ॥ ८ ॥ अग्ग्नेव्वेहोत्त्रंव्वे-
र्द्दूत्यमवतान्त्वान्द्यावापृथिवीऽअवत्वन्द्यावापृथिवीस्विष्टकृद्देवेब्भ्यऽ
इन्द्रऽआज्ज्येनहविषाभूत्स्वाहासञ्ज्योतिषाज्ज्योतिः ॥ ९ ॥ मयीदमि-
न्द्रऽइन्द्रियन्दधात्वस्मान्रायोमघवानःसचन्ताम् । अस्माकꣳसन्त्वा
शिषः सत्यानः सन्त्वाशिषऽउपहूतापृथिवीमातोपमाम्पृथिवीमा-
ताह्वयतामग्निराग्ग्नीद्ध्रात्स्वाहा ॥ १० ॥ उपहूतोद्यौष्पितोपमा-
न्द्यौष्पिताह्वयतामग्निराग्ग्नीद्ध्रात्स्वाहा । देवस्यत्वासवितुःप्प्र-
सवेश्विनोर्ब्बाहुब्भ्यांपूष्ष्णोहस्ताब्भ्याम् । प्रतिगृह्णाम्म्यग्ग्नेष्ट्वा-

स्येनप्प्राश्नामि ॥ ११ ॥ एतन्तेदेवसवितठयँज्ञम्प्राहुर्बृहस्पतयेब्र-
ह्मणे । तेनयज्ञमवतेनयज्ञपतिन्तेनमामव ॥ १२ ॥ मनोजूतिर्ज्जुषता-
माज्ज्यस्यबृहस्पतिठयँज्ञमिमन्तनोत्वरिष्टंठयज्ञठं०समिमन्दधातु ।
व्विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ १३ ॥ एषातेऽअग्नेस-
मित्तयाव्वर्द्धस्वचाचप्प्यायस्व । वर्द्धिषीमहिचव्वयमाचप्प्यासिषी-
महि । अग्नेव्वाजजिद्वाजन्त्वाससृवाठँसंव्वाजजितठँसम्मार्ज्मि
॥ १४ ॥ अग्नीषोमयोरुज्जितिमनूज्जेषंव्वाजस्यमाप्प्रसवेनप्प्रोहामि ।
अग्नीषोमौतमपनुदतांठयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्मोव्वाजस्यैनम्प्र-
सवेनापोहामि । इन्द्राग्न्योरुज्जितिमनूज्जेषंव्वाजस्यमाप्प्रसवेनप्प्रो-

हामि । इन्द्राग्नीतमपनुदतांठयोस्मान्द्वेष्टियञ्चंव्वयन्द्विष्मोव्वाज-
स्यैनम्प्रसवेनापोहामि ॥ १५ ॥ व्वसुंब्भ्यस्त्वारुद्रेब्भ्यस्त्वादित्ये-
ब्भ्यस्त्वासञ्जानाथान्द्यावापृथिवीमित्रावरुणौत्वाव्वृष्ट्यावताम् ।
व्यन्तुव्वयोक्तूकठं०रिहाणामरुताम्पृषतीर्गच्छव्वशापृश्निर्ब्भूत्वादि-
वङ्गच्छतनोव्वृष्टिमावह । चक्षुष्पाऽअंग्नेसिचक्षुर्म्मेपाहि ॥ १६ ॥
यम्परिधिम्पर्य्यधत्थाऽअग्नेदेवपणिभिर्गुह्यमानः । तन्तऽएतमनु-
जोषम्भराम्येषनेत्वदपचेतयाताऽअग्नेःप्प्रियम्पाथोपीतम् ॥ १७ ॥
सं०स्रवभागास्त्थेषाबृहन्तः प्रस्तरेष्ठाःपरिधेयाश्चदेवाः। इमांव्वा-
चमभिविश्वेगृणन्तऽआसद्यास्मिन्बर्हिषिमादयद्ध्वं०स्वाहाव्वाट्

॥१८॥ घृताचीस्त्थोधुय्यौं पातᳪ सुम्म्नेस्त्थ÷सुम्म्नेमाधत्तम् । यज्ञन-
मश्च्चतऽउपचयज्ञस्यशिवेसन्तिष्ठस्वस्त्रिष्टेमेसन्तिष्ठस्व ॥ १९ ॥ अ-
ग्नेदब्धायोशीतमपाहिमादिद्योःपाहिप्प्रसित्यैपाहिदुरिष्ट्यैपाहिदुर-
द्मन्न्याऽअविषन्न÷पितुङ्कृणुसुषदायोनौस्वाहाव्वाडग्नयेसंव्वेशपतये-
स्वाहासरस्वत्यैयशोभगिन्न्यैस्वाहा ॥ २० ॥ व्वेदोसिyेनत्वन्देवव्वे-
ददेवेब्भ्योव्वेदोभवस्तेनमह्यंव्वेदोभूयाः । देवागातुविदोगातुंव्वित्वा-
गातुमित । मनसस्पतऽइमन्देवयज्ञᳪस्वाहाव्वातेधाः ॥ २१ ॥ स-

१—'अकारे च' ४।४२ अकारे परे सति सर्वो अकार ओकारमापद्यते । व्वेदोऽसि । इत्यादि ।

र्म्बर्हिरङ्क्ताᳮहविषाघृतेनसमादित्यैर्व्वसुभिःसम्मरुद्भिः । स-
मिन्द्रोव्विश्वदेवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा ॥ २२ ॥ क-
स्त्वाविमुञ्चतिसत्वाव्विमुञ्चतिकस्मैत्वाव्विमुञ्चतितस्मैत्वाव्विमुञ्च-
ति । पोषायरक्षसाम्भागोसि ॥ २३ ॥ संवर्च्चसापयसासन्तनूभिरग-
न्महिमनसासᳫशिवेन । त्वष्टासुदत्रोव्विदधातुरायोनुमार्ष्टुतन्न्वो-
यद्विलिष्टम् ॥ २४ ॥ दिविव्विष्णुर्व्यक्रᳮस्तजागतेनच्छन्दसा-
ततोनिर्ब्भक्तोयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्मोन्तरिक्षेव्विष्णुर्व्यक्र-
ᳮस्तत्रैष्टुभेनच्छन्दसाततोनिर्ब्भक्तोयोस्मान्द्वेष्टियञ्चव्वयन्द्वि-
ष्मःपृथिव्याम्विष्णुर्व्यक्रᳮस्तगायत्रेणच्छन्दसाततोनिर्ब्भक्तो-

योस्मान्द्वेष्टियञ्चवयन्द्विष्मोस्मादन्नादस्यैप्रतिष्ठायाऽअगन्मस्व-
ꣳसञ्ज्योतिषाभूम ॥ २५ ॥ स्वयम्भूरसिश्रेष्ठोरश्मिर्वर्च्चोदाऽअसि-
वर्च्चोमेदेहि । सूर्य्यस्यावृतमन्वावर्त्ते ॥ २६ ॥ अग्नेगृहपतेसुगृहपति-
स्त्वयाग्नेहङ्गृहपतिनाभूयासꣳसुगृहपतिस्त्वम्मयाग्नेगृहपतिनाभू-
याꣳ । अस्थूरिणौगार्हपत्यानिसन्तुशतꣳहिमाꣳसूर्य्यस्यावृतमन्वा-
वर्त्ते ॥२७॥ अग्नेव्रतपतेव्रतमचारिषन्तदशकन्तन्मेराधीदमहंयऽ
एवास्मिसोस्मि ॥ २८ ॥ अग्नयेकव्यवाहनायस्वाहासोमायपितृ-
मतेस्वाहा । अपहताऽअसुरारक्षाꣳसिवेदिषदः ॥ २९ ॥ येरूपा-
णिप्रतिमुञ्चमानाऽअसुराःसन्तःस्वधयाचरन्ति । परापुरोनिपुरो-

षेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्म्मात् ॥ ३० ॥ अत्रपितरोमादय-
द्ध्वंयथाभागमावृषायद्ध्वम् । अमीमदन्तपितरोयथाभागमावृषा-
यिषत ॥ ३१ ॥ नमोवःपितरोरसायनमोवःपितरःशोषायनमोवःपि-
तरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोघोरायनमोवःपितरो-
मन्यवेनमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपि-
तरोदेष्मैतद्वःपितरोव्वासः ॥३२॥ आधत्तपितरोगर्ब्भङ्कुमारम्पु-
ष्करस्रजम् । यथेहपुरुषोसत् ॥ ३३ ॥ ऊर्ज्जंव्वहन्तीरमृतङ्घृतम्प-
यः कीलालम्परिस्रुतम् । स्वधास्त्थतर्प्पयतमेपितॄन् ॥ ३४ ॥ इति
द्वितीयोऽध्यायः ॥

## ❀ अथ तृतीयोऽध्यायः ❀

ॐ सुमिधाग्निन्दुवस्यत घृतैर्ब्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ १ ॥ सुसमिद्धाय शोचिषे । घृतन्तीव्रञ्जुहोतन । अग्नये जातवेदसे ॥ २ ॥ तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचा यविष्ठ्य ॥ ३ ॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्य्यत । जुषस्व समिधो मम ॥ ४ ॥ भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे

---

१—'चलुनौंकास्फुटोद्दण्डी स्वस्तिकोमुष्टिकाकृतिः । एते वै हस्तदोषाः स्युः परशुश्चैव सप्तमः' ( या० शि० ४४ ) परशुः—पश्वाकारः ।

॥ ५ ॥ आयङ्गौः पृश्निरक्क्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः ॥ ६ ॥ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ ७ ॥ त्रिᳫं शद्धाम व्विराजति व्वाक्पतङ्गाय धीयते । प्रतिवस्तोरहद्युभिः ॥ ८ ॥ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा । ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥ ९ ॥ सजूर्देवेन सवित्रा सजूरात्र्येन्द्रवत्या । जुषाणोऽअग्निर्व्वेतु स्वाहा । सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्य्यो व्वेतु स्वाहा ॥ १० ॥ उपप्रयन्तोऽअध्वरम्मन्त्रं व्वोचेमाग्नये । आरेऽअ-

स्मेचंशृण्वते ॥ ११ ॥ अग्निर्म्मूर्द्धादिवःककुत्पतिः पृथिव्व्याऽअ-
यम् । अपाᳪंरेताᳪंसिजिन्न्वति ॥ १२ ॥ उभावामिन्द्राग्नीऽआहुव-
द्ध्याऽउभाराधसःसहमादयद्ध्यै । उभादातारा विषाᳪंरयीणामु-
भाव्वाजस्यसातयेहुवेवाम् ॥ १३ ॥ अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽ-
अरोचथाः । तञ्जानन्नग्नऽआरोहाथानोव्वर्द्धयारयिम् ॥ १४ ॥ अय-
मिहप्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्वीड्यः । यमप्प्न-
वानोभृगवोविरुरुचुर्व्वनेषुचित्रंव्विभ्वंव्विशेविशे ॥ १५ ॥ अस्यप्प्र-
त्नामनुद्द्युतᳪंशुक्रन्दुदुह्रेऽअह्रयः । पयः सहस्रसामृषिम् ॥१६॥
तनूपाऽअग्नेसितन्न्वम्मेपाह्यायुर्दाऽअग्नेस्यायुर्म्मेदेहिव्वर्च्चोदाऽअ-

ग्ग्नेसिंव्वर्च्चोमेदेहि । अग्ग्नेषन्न्मेतन्न्वाऽऊनन्तन्न्मऽआपृण ॥ १६ ॥
इन्धानास्त्वाशतꣳहिमाद्युमन्तꣳसमिधीमहि । व्वयस्वन्तोव्वयस्कृ-
तꣳसहस्वन्तꣳसहस्कृतम् । अग्नेसपत्नदम्भनमदब्धासोऽअदाभ्यम् ।
चित्रावसोस्वस्तितेपारमशीय ॥ १८ ॥ सन्त्वमग्नेसूर्य्यस्यव्वर्च्चसा-
गथाꣳसमृषीणाꣳस्तुतेन । सम्प्रियेणधाम्नासमहमायुषासंव्वर्च्चसा-
सम्प्रजयासꣳरायस्पोषेणग्मिषीय ॥१९॥ अन्धस्थान्धोवोभक्षीयमहः
स्थमहोवोभक्षीयोर्ज्जस्थोर्ज्जंवोभक्षीयरायस्पोषस्थरायस्पोषंव्वोभ-
क्षीय ॥२०॥ रेवतीरमध्वमस्मिन्न्योनावस्मिन्न्गोष्ठेस्मिँल्लोकेस्मिन्-
न्क्षये । इहैवस्तमापगात ॥२१॥ सꣳहितासिविश्वरूप्यूर्ज्जामावि-

शगौपत्त्येन । उपंत्त्वाग्नेदिवेदिं वेदोषावस्तर्द्धियाव्वयम् । नमोभरन्तऽ-
एमसि ॥२२॥ राजन्तमद्ध्वराणाङ्गोपामृतस्यदीदिविम् । व्वर्द्धमानꣳ
स्वेदमे ॥ २३ ॥ सनः पितेवसूनवेग्नेसूपायनोभव । सचस्वानः स्व-
स्तये ॥ २४ ॥ अग्नेत्त्वन्नोअन्तमऽउतत्त्राताशिवोभवाव्वरूत्थ्यः ।
व्वसुरग्निर्व्वसुश्रवाऽअच्छानक्षिद्द्युमत्तमꣳरयिन्दाः ॥ २५ ॥ त-
न्त्वाशोचिष्ठदीदिवः सुम्म्नायनूनमीमहेसखिब्भ्यः । सनोबोधिश्रु-
धीहवमुरुष्ष्याणोऽअघायतः समस्म्मात् ॥ २६ ॥ इडऽएह्यदितऽए-
हिकाम्म्याऽएत । मयिवः कामधरणम्भूयात् ॥ २७ ॥ सोमा-
नꣳस्वरणङ्कृणुहिब्ब्रह्मणस्प्पते । कक्षीवन्तंय्यऽऔशिजः ॥ २८ ॥

योरेवान्न्योऽअमीवहाव्वसुवित्पुष्टिवर्द्धनः। सनः सिषक्तु यस्तुरः
॥ २९ ॥ मानःशꣳसोऽअररुषोधूर्तिः प्रणङ्मर्त्यस्य। रक्षाणोब्रह्म-
णस्पते ॥ ३० ॥ महित्रीणामवोस्तुद्युक्षम्मित्रस्यार्य्यम्णः ।
दुराधर्षंव्वरुणस्य ॥ ३१ ॥ नहितेषाममाचनना ध्वसुव्वारणेषु। ईशे-
रिपुरघशꣳसः ॥ ३२ ॥ तेहिपुत्रासोऽअदितेः प्रजीवसेमर्त्याय।
ज्योतिर्यच्छन्त्यजस्रम् ॥ ३३ ॥ कदाचनस्तरीरसिनेन्द्रसश्चसिदा-
शुषे । उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्यपृच्यते ॥ ३४ ॥
तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात्
॥ ३५ ॥ [ शतम् १०० ] परितेदूडभोरथोस्माँ२ऽअश्नोतुव्विश्व-

तं॑ । येन॑ र॒क्षसि॑ दा॒शुषं॑ ॥ ३६ ॥ भूर्भुव॒: स्व॑: सुप्र॒जा: प्र॒जाभि॑:
स्या॒ᳪ सु॒वीरो॑ वी॒रै: सु॒पोष॒: पोषै॑: । नर्य॑ प्र॒जां मे॑ पाहि॒ शᳪस्य॑ प॒शून्
मे॑ पाह्यथर्य पि॒तुं मे॑ पाहि ॥ ३७ ॥ आग॑न्म वि॒श्ववे॑दसम॒स्मभ्यं॑
वसु॒वित्त॑मम् । अग्ने॑ सम्राड॒भि द्यु॒म्नम॒भि सह॒ऽआय॑च्छस्व
॥ ३८ ॥ अ॒यम॒ग्निर्गृ॒हप॑तिर्गार्ह॑पत्य: प्र॒जाया॑ वसु॒वित्त॑म: । अग्ने॑
गृहपते॒ऽभि द्यु॒म्नम॒भि सह॒ऽआय॑च्छस्व ॥ ३९ ॥ अ॒यम॒ग्नि: पु॑री॒ष्यो॑ र॒
यि॒मान् पु॑ष्टि॒वर्ध॑न: । अग्ने॑ पुरीष्या॒भि द्यु॒म्नम॒भि सह॒ऽआय॑च्छस्व
॥ ४० ॥ गृहा॒ मा बि॑भीत॒ मा वे॑पध्व॒मूर्जं॒ बिभ्र॑त॒ऽएम॑सि । ऊर्जं॒ बिभ्र॑
द्व: सु॒मना॑: सु॒मेधा॑ गृ॒हानैमि॒ मन॑सा॒ मोद॑मान: ॥ ४१ ॥ येषा॑म॒

द्ध्येतिप्प्रवसन्न्येषुसौमनसोबहुः । गृहानुपह्वयामहेतेनोजानन्तु-
जानतः ॥ ४२ ॥ उपहूताऽइहगावऽउपहूताऽअजावयः । अथोऽ-
अन्नस्यकीलालऽउपहूतोगृहेषुनः । क्षेमायवःशान्त्यैप्रपद्येशिवꣳ-
शग्मꣳशंय्योःशंय्योः ॥ ४३ ॥ प्रघासिनोहवामहेमरुतश्चरिशा-
दसः । करम्भेणसजोषसः ॥ ४४ ॥ यद्ग्रामेयदरण्ण्येयत्सभायांयदि-
न्द्रिये । यदेनश्चकृमाव्वयमिदन्तदवयजामहेस्वाहा ॥ ४५ ॥
मोषूणऽइन्द्रात्रपृत्सुदेवैरस्तिहिष्म्मातेशुष्मिन्नवयाः । महश्चि-
द्यस्यमीढुषोयव्व्याहविष्म्मतोमरुतोव्वन्दतेगीः ॥ ४६ ॥ अक्क्रन्क-
र्म्मकर्म्मकृतः सहव्वाचामयोभुवा । देवेब्भ्यःकर्म्मकृत्वास्तम्प्रेतस-

त्राभुवं ॥ ४७ ॥ अवभृथनिचुम्पुण निचेरुरसि निचुम्पुणः । अव देवै-
र्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥४८॥
पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इष-
मूर्जं शतक्रतो ॥ ४९ ॥ देहि मे ददामि ते नि मे धेहि नि ते दधे । निहा-
रं च हरासि मे निहारन्निहराणि ते स्वाहा ॥ ५० ॥ अक्षन्नमीमदन्त ह्य-
वप्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा
न्विन्द्र ते हरी ॥ ५१ ॥ सुसन्दृशन्त्वा वयम्मघवन्वन्दिषीमहि ।
प्र नूनम्पूर्णबन्धुर स्तुतो यासि वशाँ२ अनु योजा न्विन्द्र ते हरी ॥ ५२ ॥
मनो न्वाह्वामहे नाराशंसेन स्तोमेन । पितृणाञ्च मन्मभिः ॥५३॥

आनऽएतुमनꣳपुनꣳक्रत्वेदक्षायजीवसे । ज्योक्चसूर्य्यन्दृशे ॥ ५४ ॥
पुनर्न्नꣳपितरोमनोददातुदैव्व्योजनः । जीवंव्व्रातꣳसचेमहि ॥५५॥
व्वयꣳसोमव्व्रतेतवमनस्तनूषुबिब्भ्रतꣳ । प्रजावन्तꣳसचेमहि ॥५६॥
एषतेरुद्द्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्द्रभागऽआ-
खुस्ते[1]पशुः ॥ ५७ ॥ अवरुद्द्रमदीमह्यवदेवन्त्र्यम्बकम् । यथानो-

---

१—'तथयोः सम्' शु॰ प्रा॰ ३।८ तकारथकारयोः परयोः विसर्जनीयः सकारमापद्यते। तकारे—'आखुः ते पशुः' इत्यत्र विसर्गस्य सकारो भवति। एवम्—'नमः ते रुद्र' १६।१। इत्यादिषु। संहितायां विसर्जनीयसन्धिस्तु न विद्यते अतो रूपोदाहरणं दीयते कः थकारः कस्थकारः।

व्वस्यंसस्करद्यथानःश्श्रेयंसस्करद्यथानोव्व्यवसाययात् ॥ ५८ ॥
भेषजमसिभेषजङ्गवेश्श्वायपुरुषायभेषजम् । सुखम्मेषायमेष्यै ॥५९॥
त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबन्धनान्मृ-
त्योर्म्मुक्षीयमामृतात् । त्र्यम्बकंयजामहेसुगन्धिम्पतिवेदनम् । उ-
र्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्तेरुद्रावं-
सन्तेनपरोमूजवतोतीहि । अवततधन्वापिनाकावसः कृत्तिवासाऽ-
अहिꣳसन्नः शिवोतीहि ॥ ६१ ॥ त्र्यायुषञ्जमदग्नेः कश्यपस्यत्र्यायु-
षम् । यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥ ६२ ॥ शिवोनामासि-
स्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः । निवर्त्तयाम्म्यायुषेन्ना-

द्व्यायप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥ ६३ ॥

इति तृतीयोऽध्यायः ॥

## ❀ अथ चतुर्थोऽध्यायः ❀

ॐ एदमगन्न्मदेवयजनम्पृथिव्याऽयत्रदेवासोऽअजुषन्तव्विश्श्वे ।
ऋक्सामाब्भ्याᳩसन्तरन्तोयजुर्भीरायस्प्पोषेणसमिषामदेम । इमा-
ऽआपᳩशमुमेसन्तुदेवीरोषधेत्रायस्वस्वधितेमैनᳩहिᳩसीः ॥ १ ॥
आपोऽअस्म्मान्न्मातरः शुन्धयन्तुघृतेननोघृतप्प्वः पुनन्तु । व्वि-

१—'न कुर्वीत पदं दीर्घं न चात्यन्तविलम्बितम् । पदस्य प्रहमोत्तौ च यथा-शीघ्रगतिर्हयः ।' ( या० शि० ४६ )

श्श्वꣳ हि रिप्रम्प्रवहन्ति देवीरुदिदाब्भ्यꣳ शुचिरापूतऽएमि । दीक्षातप-
सोँस्तनूरसि ताम्त्वा शिवाꣳ शग्ग्माम्परिदधे भद्द्रं व्वर्णम्पुष्ष्यन् ॥ २ ॥
महीनाम्पयोसि व्वर्चोदाऽअसि व्वर्च्चो मे देहि । व्वृत्रस्यासि कनीनक-
श्चक्षुर्दाऽअसि चक्षुर्म्मे देहि ॥ ३ ॥ चित्पतिर्म्मा पुनातु व्वाक्पतिर्म्मा-
पुनातु देवो मा सविता पुनात्त्वच्छिद्द्रेण पवित्त्रेण सूर्य्यस्य रश्मिभिः ।
तस्य ते पवित्त्रपते पवित्त्रपूतस्य यत्त्कामः पुने तच्छकेयम् ॥ ४ ॥ आवो-
देवासऽईमहे व्वामम्प्रयत्यद्ध्वरे । आवो देवासऽआशिषो यज्ञियासो-
हवामहे ॥ ५ ॥ स्वाहा यज्ञम्मनसः स्वाहोरोरन्तरिक्षात्स्वाहा द्यावा-
पृथिवीब्भ्याꣳ स्वाहा व्वातादारभे स्वाहा ॥ ६ ॥ आकूत्यै प्प्रयुजेग्नये-

स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा । आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी ऽउरोऽअन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा ॥ ७ ॥ विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम् । विश्वो राय ऽइषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ८ ॥ ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः । शर्मासि शर्म मे यच्छ नमस्ते ऽअस्तु मा मा हिंसीः ॥ ९ ॥ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऽऊर्जं मयि धेहि । सोमस्य नीविरसि विष्णोः शर्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुस-

स्या॑ङ्कृ॒षीस्कृ॑धि । उच्छ्र॑यस्व॒व्वनस्पत॒ऽऊ॒र्द्ध्वोमा॑पा॒ह्य॒ᳪह॑स॒ऽआ-
स्य॒य॒ज्ञस्यो॒दृच॑ः ॥ १० ॥ व्व्रतङ्कृ॑णुता॒ग्निर्ब्रह्मा॒ग्निर्य॒ज्ञो॒व्वन॒स्प-
ति॒र्य॒ज्ञियः॑ । दैवीन्धियम्मनामहे सुमृडीकाम॒भिष्ट॑ये व्वर्चो॒धां॒य॒ज्ञ-
वा॑ह॒ᳪसुती॒र्त्था नो॑ऽअस॒द्वशे॑ । येदे॒वाम॑नोजाता॒म॑नो॒युजो॒दक्ष॑क्क्रत-
वस्ते नो॑व्वन्तु॒ तेनः॑ पान्तु॒ ते॒भ्यः॒ स्वाहा॑ ॥ ११ ॥ श्वा॒त्राः॒पीता॒भ॑वत

१—इत्यत्र 'कृषीश्च कृधौ सकारम्' ( शु० य० प्रा० ३।२४ ) इति सूत्रेण कृधौ प्रत्यये ( परे सति ) कृषीरित्ययं विसर्जनीयः सकारमापद्यते । ननु—कविष्करत्कृधिपु ( ३।२२ ) इत्यनेनैव गतार्थत्वात् व्यर्थमिदं सूत्रमिति चेत्सत्यम् । भाव्युपधस्य षत्वं नियतं तन्माभूदित्येतदर्थमित्यदोषः ।

यूयमापोऽअस्माकमन्तरुदरेसुशेवाः । ताऽअस्मभ्यमयक्ष्माऽअन-
मीवाऽअनागसᳪंस्वदन्तुदेवीरमृताऽऋतावृधः ॥ १२ ॥ इयन्तेय-
ज्ञियातनूरपोमुञ्चामिनप्प्रजाम् । अᳪंहोमुचᳪंस्वाहाकृताᳪंपृथिवीमा-
विशतपृथिव्व्यासम्भव ॥ १३ ॥ अग्नेत्त्वᳪंसुजागृहिव्वयᳪंसुमन्दि-
षीमहि । रक्षाणोऽअप्प्रयुच्छन्प्रबुधेनᳪंपुनस्कृधि ॥ १४ ॥ पुनर्म्मनᳪं
पुनरायुर्म्मऽआगन्पुनः प्प्राणः पुनरात्त्मामऽआगन्पुनश्चक्षुᳪंपुनᳪं
श्श्रोत्रम्मऽआगन् । व्वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्न्नः पातुदु-
रितादवद्यात् ॥ १५ ॥ त्वमग्नेव्व्रतपाऽअसिदेवऽआमर्त्त्येष्वा ।
त्वंयज्ञेष्वीड्यः रास्वेयत्सोमाभूयोभरदेवोनः सविताव्वसोर्द्दाता

व्वस्वेदात् ॥ १६ ॥ एषातेंशुक्रतनूरेतद्वर्च्चस्तयासम्भवभ्राजंङ्गच्छ ।
जूरसिधृतामनसाजुष्टाविष्णवे ॥ १७ ॥ तस्यास्तेसत्त्यसवसःप्रस-
वेतन्न्वोषन्त्रमशीयस्वाहा । शुक्रमसिचन्द्रमस्यमृतमसिव्वैश्वदेवम-
सि ॥ १८ ॥ चिदसिमनासिधीरसिदक्षिणासिक्षत्रियासियज्ञियास्य-
दितिरस्युभयतःशीर्ष्णी । सानःसुप्राचीसुप्प्रतीच्च्येधिमित्रस्त्वापः
दिबध्नीताम्पूषाद्ध्वनस्प्पात्विन्द्रायाद्ध्यक्षाय ॥ १९ ॥ अनुत्त्वामा-
तामन्न्यतामनुपितानुभ्भ्रातासगर्ब्भ्योनुसखासयूथ्थ्यः । सादेविदेव-
मच्छेहीन्द्रायसोमꣳरुद्रस्त्वावर्त्तयतुस्वस्तिसोमसखापुनरेहि ॥२०॥
व्वस्व्यस्यदितिरस्यादित्त्यासिरुद्रासिचन्द्रासि । बृहस्पतिष्ट्वासु-

म्नेरम्मणातुरुद्रोव्वसुभिराचके ॥ २१ ॥ अदित्यास्त्वामूर्द्ध-
र्ध्नाजिघर्म्मिदेवयजनेपृथिव्व्याऽइडायास्पदमसिघृतवत्स्वाहा । अ-
स्म्मेरमस्वास्म्मेतेबन्धुस्त्वेरायोमेरायोमाव्वयꣳरायस्पोषेणव्वियौ-
ष्मतोतोरायः ॥ २२ ॥ समख्ख्येदेव्व्याधियासन्दक्षिणयोरुचक्षसा ।
मामऽआयुःप्रमोषीर्म्मोऽअहन्तवव्वीरंव्विदेयतवदेविसन्दृशि ॥ २३ ॥
एषतेगायत्त्रोभागऽइतिमेसोमायब्रूतादेषतेत्रैष्टुभोभागऽइतिमेसोमा-
यब्रूतादेषतेजागतोभागऽइतिमेसोमायब्रूताच्छन्दोनामानाꣳसा-
म्म्राज्ज्यङ्गच्छेतिमेसोमायब्रूतादास्माकोसिशुक्रस्तेग्ग्रह्योव्विचित-
स्त्वाव्विचिन्न्वन्तु ॥ २४ ॥ अभित्त्यन्देवꣳसवितारमोण्योः कविक्क्र-

तुमर्च्चामिसत्त्यसवꣳरत्नधामभिप्प्रियम्मतिङ्कविम् । ऊर्द्ध्वायस्या-
मतिर्ब्भाऽअदिद्द्युतत्त्सवीमनिहिरण्ण्यपाणिरमिमीतसुक्क्रतुः कृपा-
स्वः । प्रजाब्भ्यस्त्वाप्प्रजास्त्वानुप्प्राणन्तुप्प्रजास्त्वमनुप्प्राणिहि
॥ २५ ॥ शुक्क्रन्त्वाशुक्क्रेणक्क्रीणामिचन्द्रञ्चन्द्रेणामृतममृतेन । सग्ग्मे-
तेगोरस्म्मेतेचन्द्राणितपसस्तनूरसिप्प्रजापतेर्व्वर्ण्णः परमेणपशुना-
क्क्रीयसेसहस्रपोषम्पुषेयम् ॥ २६ ॥ मित्रोनऽएहिसुमित्रधऽइन्द्रस्यो-
रुमाविशदक्षिणमुशन्नुशन्तꣳस्योनः स्योनम् । स्वानब्भ्राजाङ्घारेब-
म्भारेहस्तसुहस्तकृशानवेतेवः सोमक्क्रयणास्तान्रक्षद्ध्वम्मावोदभन्
॥ २७ ॥ परिमाग्नेदुश्चरिताद्बाधस्वामासुचरितेभज । उदायुषा

स्वायुषोदस्त्थाममृतॉंऽअनु ॥ २८ ॥ प्रतिपन्थामपद्महिस्वस्तिगामने-
हसम् । येनव्विश्श्वाः परिद्द्विषोव्वृणक्तिविन्दतेव्वसु ॥ २९ ॥
अदित्यास्त्वगस्यदित्यैसदऽआसीद । अस्तभ्नाद्द्यांव्वृषभोऽअन्तरि-
क्षममिमीतव्वरिमाणम्पृथिव्व्याः । आसीदद्द्विश्श्वाभुवनानिसम्म्रा-
ड्विश्श्वेत्तानिव्वरुणस्यव्व्रतानि ॥३०॥ व्वनेषुव्व्यन्तरिक्षन्ततानव्वा-
जमर्व्वत्सुपयऽउस्रियासु । हृत्सुक्क्रतुंव्वरुणोव्विक्ष्वग्निन्दिविसू-
र्य्यमदधात्सोममद्द्रौ ॥३१॥ सूर्य्यस्यचक्षुरारोहाग्नेरक्ष्णः कनीनकम् ।
यत्रैतशेभिरीयसेब्भ्राजमानोव्विपश्चिता ॥ ३२ ॥ उस्रावेतन्धूर्षाः

द्यौषुज्ज्येथामनश्श्रूऽअवीरँहणौब्रह्ममचोदनौ । स्वस्तियजमानस्यगृ-
हान्गच्छतम् ॥ ३३ ॥ भद्रोमेसिप्रच्च्यवस्वभुवस्पते विश्श्वान्य-
भिधामानि । मात्वापरिपरिणोविदन्मात्वापरिपन्थिनोविदन्मा-
त्वावृकाऽअघायवोविदन् । श्येनोभूत्वापरापतयजमानस्यगृहान्गं-
च्छतन्नौसँस्कृतम् ॥ ३४ ॥ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायत-
दृतꣳसपर्य्यत । दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्य्यायशꣳसत

१—अत्र तत्पुरुषसमासः ।

२—इत्यत्र 'दिवोऽक्कुत्पृथिव्योः ( ३।२४ ) इति सूत्रेण कक्कुत्पृथिवीशब्दौ वर्ज-
यित्वा दिव इत्येतस्य सम्बन्धी विसर्जनीयः सकारमापद्यते ।

॥ ३५ ॥ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनीस्त्थोव्वरुण-
स्यऽऋतसदन्न्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमा-
सीद ॥ ३६ ॥ यातेधामानिहविषायजन्तिताते व्विश्श्वापरिभूरस्तुय-
ज्ञम् । गयस्फानः प्प्रतरणःसुवीरोवीरहाप्प्रचरासोमदुर्य्यान् ॥३७॥
इति चतुर्थोऽध्यायः ।

## ❀ अथ पञ्चमोऽध्यायः ❀

ॐ अग्ग्नेस्तनूरसिव्विष्ष्णवेत्त्वासोमस्यतनूरसिव्विष्ष्णवेत्त्वातिथे-

१—'यथा वाणी तथा पाणी रिक्तं तु परिवर्जयेत् । यत्र यत्र स्थिता वाणी पाणि-
स्तत्रैव तिष्ठति ( या० शि० ४७ ) ।

रातिथ्यमसिविष्णवेत्वाश्येनायत्वासोमभृतेविष्णवेत्वाग्नयेत्त्वा-
रायस्पोषदेविष्णवेत्वा ॥ १ ॥ अग्नेर्ज्जनित्रमसिव्वृषणौस्थऽउ-
र्व्वश्यस्यायुरसिपुरूरवाऽअसि । गायत्रेणत्वाच्छन्दसामन्थामित्रै-
ष्टुभेनत्वाच्छन्दसामन्थामिजागतेनत्वाच्छन्दसामन्थामि ॥ २ ॥
भवतन्नःसमनसौसचेतसावरेपसौ । मायज्ञꣳहिꣳसिष्टम्मायज्ञपति-
ञ्जातवेदसौशिवौभवतमद्यनः ॥ ३ ॥ अग्नावग्निश्चरतिप्रविष्टऽ-
ऋषीणाम्पुत्रोऽअभिशस्तिपावा । सनः स्योनःसुयजायजेहदेवेभ्यो-
हव्यꣳसदमप्प्रयुच्छन्त्स्वाहा ॥४॥ आपतयेत्त्वापरिपतयेगृह्णामितनू-
नप्त्रेशाक्वरायशक्वनऽओजिष्ठाय। अनाधृष्टमस्यनाधृष्यन्देवाना-

मोजोनभिशस्त्यभिशस्तिपाऽअनभिशस्तेन्न्यमञ्जसासत्त्यमुपगेषᳬं
स्वितेमाधाः ॥ ५ ॥ अग्ग्नेव्व्रतपास्त्वेव्व्रतपायातवतनूरियᳬंसामयि-
योममतनूरेषासात्त्वयि । सहनौव्व्रतपतेव्व्रतान्न्यनुमेदीक्षान्दीक्षाप-
तिर्म्मन्न्यतामनुतपस्तपस्प्पतिः ॥ ६ ॥ अᳬंशुरᳬंशुष्ट्टेदेवसोमाप्प्या-
यतामिन्द्रायैकधनविदे । आतुब्भ्यमिन्द्रः प्प्यायतामात्त्वमिन्द्राय-
प्प्यायस्व । आप्प्याययास्म्मान्त्सखीन्त्सन्न्यामेधयास्वस्तितेदेवसो-
मसुत्त्यामशीय । एष्टारायः प्प्रेषेभगायऽऋतमृतवादिब्भ्योनमोद्द्या-
वापृथिवीब्भ्याम् ॥ ७ ॥ यातेऽअग्ग्नेयःशयातनूर्व्वर्षिष्ठागह्वरेष्ठा ।
उग्ग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा । यातेऽअग्ग्नेरजःश-

यातनूर्व्वर्षिष्ठागह्वरेष्ठा। उग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा। यातेऽअग्नेहरिशयातनूर्व्वर्षिष्ठागह्वरेष्ठा। उग्रंव्वचोऽअपावधीत्त्वेषंव्वचोऽअपावधीत्स्वाहा ॥ ८ ॥ तप्तायनीमेऽसिव्वित्तायनीमेस्यवतान्मानाथितादवतान्माव्यथितात्। विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुनानाम्नेहियोस्याम्पृथिव्व्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्त्वादधेव्विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुना

१—इत्यत्र 'हरिशयेत्येके' ( ३।१२९ ) शयप्रत्यये परे सति हरीत्यस्य एके आचार्या दीर्घमिच्छन्ति। अत्र पाठव्यवस्था कृता-प्रथमशाखिनां काण्वानां दीर्घपाठः। अन्येषां ह्रस्वपाठ इत्यर्थः।

नाम्नेहिषोद्वितीयस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्त्वा
दधेव्विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुनानाम्नेहिषस्तृतीयस्या-
म्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्त्वादधे। अनुत्त्वादेववीतये
॥९॥ सिꣳह्यसिसपत्नसाहीदेवेब्भ्यः कल्पस्वसिꣳह्यसिसपत्न-
साहीदेवेब्भ्यः शुन्धस्वसिꣳह्यसिसपत्नसाहीदेवेब्भ्यः शुम्भस्व
॥ १० ॥ इन्द्रघोषस्त्वाव्वसुभिः पुरस्तात्पातुप्रचेतास्त्वारुद्रैः पश्चात्पा-
तुमनोजवास्त्वापितृभिर्द्दक्षिणतः पातुव्विश्वकर्म्मात्त्वादित्यैरुत्तरतः
पात्विदमहन्तप्तंव्वार्ब्बहिर्द्धायज्ञान्निःसृजामि ॥ ११ ॥ सिꣳह्यसि-

१—यथा कामातुरा नारी शब्दं कुर्याद्दिने दिने। तच्छब्दं कुरुते प्राज्ञः 'सिꣳ'

स्वाहासिॐह्यषस्यादित्यवनिंस्वाहासिॐह्यषसिब्रह्मवनि÷क्षत्रव-
निंस्वाहासिॐह्यषसिसुप्रजावनीरायस्पोषवनिंस्वाहासिॐह्यषः
स्यावहदेवान्यजमानायस्वाहाभूतेभ्यस्त्वा ॥१२॥ ध्रुवोसिपृथिवीन्दृ
हध्रुवक्षिदस्यन्तरिक्षन्दृहाच्युतक्षिदसिदिवन्दृहाग्नेःपुरीषमसि
॥१३॥ युञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चित÷।
विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिंस्वाहा
॥ १४ ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाॐसुरे-

---

ह्यसिं' इति दर्शनम् । कामातुरा रतिभावं प्राप्ता नारी दिने दिने रात्रौ पतिप्रसंङ्गे 'सि-
ऽसिऽ' इति ध्वनिं करोति । तथा प्राज्ञः तदनुकारिध्वनिं कुर्वीत ।

स्वाहा ॥ १५ ॥ इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ।
व्यस्कम्भ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहा
॥ १६ ॥ देवश्रुतौदेवेष्वाघोषतम्प्राचीप्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वं-
यज्ञन्नयतम्माजिह्वरतम् । स्वङ्गोष्ठमावदतन्देवीदुर्येऽआयुर्म्मा-
निर्व्वादिष्टम्प्रजाम्मानिर्व्वादिष्टमत्ररमेथांवर्ष्मन्पृथिव्याः ॥ १७ ॥
विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसि ।
योऽअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवे-
त्वा ॥ १८ ॥ दिवोवाविष्णऽउतवापृथिव्यामहोवाविष्णऽउरोर-
न्तरिक्षात् । उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्यात्

विष्णवेत्त्वा ॥ १९ ॥ प्रतद्विष्णुस्तवतेव्वीर्य्येणमृगोनभीमःकुच-
रोगिरिष्ठाः । यस्योरुषुत्रिषुव्विक्क्रमणेष्वधिक्षियन्तिभुवनानिव्वि-
श्वा ॥ २० ॥ विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्त्थोव्विष्णोःस्यूर-
सिव्विष्णोर्ध्रुवोसि । व्वैष्णवमसिव्विष्णवेत्त्वा ॥ २१ ॥ देवस्य-
त्वासवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् । आददेना-
र्य्यसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि । बृहन्नसिबृहद्रवाबृहती-
मिन्द्रायव्वाचंव्वद ॥ २२ ॥ रक्षोहणंव्वलगहनंव्वैष्णवीमिदमहन्तंव्वल-
गमुत्किरामियम्मेनिष्ट्योयममात्त्योनिचखानेदमहन्तंव्वलगमुत्किरा-
मियम्मेसमानोयमसमानोनिचखानेदमहन्तंव्वलगमुत्किरामियम्मेस-

बन्धुर्य्यमसबन्धुर्न्निचखानेदमहन्तंव्वलगमुत्किरामियम्मेसजातोयम-
सजातोनिचखानोत्कृत्याङ्किरामि ॥ २३ ॥ स्वराडसिसपत्नहासत्त्रराड-
स्यभिमातिहाजनराडसिरक्षोहासर्व्वराडस्यमित्रहा ॥२४॥ रक्षोहणो-
वोव्वलगहनम्प्रोक्षामिव्वैष्णवान्रक्षोहणोवोव्वलगहनोवनयामिव्वै-
ष्णवान्रक्षोहणोवोव्वलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांव्वलग-
हनाऽउपदधामिव्वैष्णवीरक्षोहणौवांव्वलगहनौपर्य्यूहामिव्वैष्णवी-
व्वैष्णवमसिव्वैष्णवास्स्थ ॥ २५ ॥ देवस्यत्वासवितुःप्प्रसवेश्विव-
नोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् । आददेनार्य्यसीदमहꣳरक्षसा-
ङ्ग्रीवाऽअपिकृन्तामि । यवोसियवयास्मद्द्वेषोयवयारातीर्द्दिवेत्वा-

न्तरिक्षायत्त्वापृथिव्व्यैत्त्वाशुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि
॥२६॥ उद्दिवꣳस्तभानान्तरिक्षम्पृणदृꣳहस्वपृथिव्व्यान्द्द्युतानस्त्वा-
मारुतोमिनोतुमित्त्रावरुणौद्ध्रुवेणधर्म्मणा । ब्रह्मवनित्त्वाक्षत्त्रवनि-
रायस्पोषवनिपर्य्यूहामि । ब्रह्मदृꣳहक्षत्त्रन्दृꣳहायुर्दृꣳहप्प्रजान्दृꣳह
॥२७॥ ध्रुवासिध्रुवोयंय्यजमानोस्म्मिन्नायतनेप्प्रजयापशुभिर्ब्भूयात् ।
घृतेनद्यावापृथिवीपूर्य्येथामिन्द्रस्यच्छदिरसिव्विश्श्वजनस्यच्छाया
॥२८॥ परित्वागिर्व्वणोगिरऽइमाभवन्तुव्विश्श्वतः । व्वृद्धायुमनुव्वृद्ध-
योजुष्टाभवन्तुजुष्टयः ॥२९॥ इन्द्रस्यस्यूरसीन्द्रस्यद्ध्रुवोसि । ऐन्द्रम-
सिव्वैश्श्वदेवमसि ॥३०॥ व्विभूरसिप्प्रवाहणोव्वह्निरसिहव्व्यवाहनः ।

श्वान्नोसिप्रचैतास्तुथोसिव्विश्श्ववेदाऽउशिगसि ॥ ३१ ॥ उशिगसि
कविरङ्घारिरसिबम्भारिरवस्यूरसिदुवस्वाञ्छुन्ध्यूरसिमार्ज्जालीयः
सम्म्राडसिकृशानुः परिषद्द्योसिपवमानोनभोसिप्रतक्वामृष्टोसिहृ-
व्यसूदनऽऋतधामासिस्वर्ज्योतिः ॥ समुद्द्रोसि ॥ ३२ ॥ समुद्द्रोसि
व्विश्श्वव्यचाऽअजोस्येकपादहिरसिबुध्न्योव्वागस्यैन्द्रमसिसदोस्यृ-
तस्यद्द्वारौमामासन्ताप्तमद्ध्वनामद्ध्वपतेप्रमातिरस्वस्तिमेस्मिन्न्प-
थिदेवयानेभूयान्मित्त्रस्यमा ॥ ३३ ॥ मित्त्रस्यमाचक्षुषेक्षद्ध्वमग्ग्नयः
सगराःसगरास्त्थसगरेणनाम्म्नारौद्द्रेणानीकेनपातमाग्ग्नयःपिपृत-
माग्ग्नयोगोपायतमानमोवोस्तुमामाहिᳫंसिष्ट ॥ ३४ ॥ ज्योतिरसि

व्विश्श्वरूपंव्विश्श्वैषान्देवानाᳬ समित् । त्वᳬ सोमतनूकृद्भ्योद्द्वेषो-
भ्योन्यकृतेभ्य ऽउरुयन्तासिव्वरूथᳬ स्वाहाजुषाणोऽअप्तुराज्ज्यस्य-
व्वेतुस्वाहा ॥ ३५ ॥ [शतम् २००] अग्नेनयसुपथारायेऽअस्मान्विव-
श्श्वानिदेवव्वयुनानिव्विद्वान् । युयोद्ध्यस्मज्जुहुराणमेनोभूयि-
ष्ठान्तेनमऽउक्तिंव्विधेम ॥ ३६ ॥ अयन्नोऽअग्निर्व्वरिवस्कृणोत्वय-
म्मृधः पुरऽएतुप्प्रभिन्दन् । अयंव्वाजाञ्जयतुव्वाजसातावयᳬ शत्रू-
ञ्जयतुजर्हृषाणᳬ स्वाहा ॥ ३७ ॥ उरुव्विष्णोविक्क्रमस्वोरुक्षयायन-
स्कृधि । घृतङ्घृतयोनेपिबप्प्रप्प्रयज्ञपतिन्तिरस्वाहा ॥ ३८ ॥ देवस-
वितरेषतेसोमस्तᳬ रक्षस्वमात्वादभन् । एतत्वन्देवसोमदेवोदेवाँ२ऽ-

उपागाऽइदमहम्मनुष्यान्त्सहरायस्पोषेणस्वाहानिर्व्वरुणस्यपाशा-
न्मुच्च्ये ॥ ३९ ॥ अग्ग्नेव्व्रतपास्त्वेव्व्रतपायातवतनूर्म्मय्यभूदेषासा-
त्वयियोममतनूस्त्वय्यभूदियꣳसामयि। यथायथन्नौव्व्रतपतेव्व्रतान्न्य-
नुमेदीक्षान्दीक्षापतिरमꣳस्तानुतपस्तपस्प्पतिः ॥ ४० ॥ उरुव्विष्ष्णो-
व्विक्क्रमस्वोरुक्षयायनस्क्कृधि। घृतङ्घृतयोनेपिबप्प्रप्प्रयज्ञपतिन्तिर-
स्वाहा ॥ ४१ ॥ अत्यन्न्याँ२ऽअगान्नान्न्याँ२ऽउपागामर्व्वाक्क्त्वापरे-
ब्भ्योविदम्परोवरेब्भ्यः। तन्त्वाजुषामहेदेवव्वनस्प्पतेदेवयज्ज्यायैदे-
वास्त्वादेवयज्ज्यायैजुषन्तांव्विष्ष्णवेत्त्वा। ओषधेत्त्रायस्वस्वधितेमैनꣳ-
हिꣳसीः ॥ ४२ ॥ द्याम्मालेखीरन्तरिक्षम्माहिꣳसीःपृथिव्यासम्भव।

अयꣳहि त्वा स्वधितिस्तेतिजानः प्प्रणिनाय महते सौभगाय। अतस्त्व-
न्देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम ॥ ४३ ॥
इति पञ्चमोऽध्यायः ॥

## ❀ अथ षष्ठोऽध्यायः ❀

ॐ देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्यां पूष्णो हस्ताब्भ्या-
म्। आददे नार्य्यसीदमहꣳ रक्षसां ग्ग्रीवाऽअपिकृन्तामि। यवोसि यव-
यास्म्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लो-
काः पितृषदनाः पितृषदनमसि ॥ १ ॥ अग्ग्रेणीरसि स्वावेशऽउन्नेतॄणा-

मेतस्यव्वित्ताद्दधित्त्वास्थास्यतिदेवस्त्वासविताम्मद्ध्वानक्कुसुपिप्पला-
ब्भ्यस्त्वौषधीब्भ्यः। द्यामग्ग्रेणास्पृक्षऽआन्तरिक्षम्मद्ध्येनाप्प्राः पृथि-
वीमुपरेणादृꣳहीः ॥ २ ॥ यातेधामान्युश्मसिगमद्ध्यैयत्त्रगावोभूरि-
शृङ्गाऽअयासः । अत्त्राहतदुरुगायस्यव्विष्ण्णोः परमम्पदमवभारि-
भूरि । ब्रह्मवनिन्त्वाक्षत्त्रवनिरायस्प्पोषवनिपर्य्यूहामि । ब्ब्रह्मदृꣳह-
क्षत्त्रन्दृꣳहायुर्दृꣳहप्प्रजान्दृꣳह ॥ ३ ॥ विष्ण्णोः कर्म्माणिपश्यतयतो-
व्व्रतानिपस्पशे ॥ इन्द्रस्ययुज्ज्यः सखा ॥ ४ ॥ तद्विष्ण्णोः परमम्पदꣳ
सदापश्यन्तिसूरयः । दिवीवचक्षुराततम् ॥ ५ ॥ परिवीरसिपरि-
त्वादैवीर्व्विशोव्व्ययन्ताम्परीमंय्यजमानꣳरायोमनुष्ष्याणाम् । दिवः

सूनुरस्येषतेपृथिव्याँल्लोकऽआरण्यस्तेपशुः ॥ ६ ॥ उपावीरस्युपदे-
वान्दैवीर्व्विशः प्प्रागुरुशिजोव्वह्नितमान् । देवत्त्वष्टर्व्वसुरमहव्व्याते-
स्वदन्ताम् ॥ ७ ॥ रेवतीरमध्वम्बृहस्पतेधारयाव्वसूनि । ऋतस्यत्त्वा-
देवहविः पाशेनप्प्रतिमुञ्चामिधर्षामानुषः ॥ ८ ॥ देवस्यत्त्वासवितुः
प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् । अग्नीषोमाभ्याञ्जु-
ष्टन्नियुनज्मि । अद्भ्यस्त्वौषधीभ्योनुत्त्वामातामन्यतामनुपितानु-
भ्रातासगर्भ्योनुसखासयूथ्यः । अग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षा-
मि ॥ ९ ॥ अपाम्पेरुरस्यापोदेवीः स्वदन्तुस्वात्तञ्चित्सद्देवहविः । स-
न्तेप्प्राणोव्वातेनगच्छताꣳ समङ्गानियजत्रैः संय्यज्ञपतिराशिषा ॥ १० ॥

घृतेनाक्तौ पशूँस्त्रायेथाᳪं रेवतियजमाने प्रियन्धाऽआविश । उरोर
न्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यजसमस्य तन्वा भव । व-
र्षो वर्षीयसि यज्ञे यज्ञपतिन्धाᳪं स्वाहा देवेभ्यो देवेभ्यᳪं स्वाहा ॥ ११ ॥
माहिर्भूर्म्मा पृदाकुर्न्नमस्तऽआतानानर्वा प्रेहि । घृतस्य कुल्याऽउपऽ-
ऋतस्य पथ्याऽअनु ॥ १२ ॥ देवीरापᳪं शुद्धा वोढ्वᳪं सुपरिविष्टा-
देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म ॥ १३ ॥ वाचन्ते शुन्धा-
मि प्राणन्ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धा-
मि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि चरित्राँस्ते शुन्धामि ॥ १४ ॥ मन-
स्तऽआप्यायतां वाक्त ऽ आप्यायताम्प्राणस्त ऽ आप्यायताञ्चक्षु-

स्तऽआप्यायताᳬंश्रोत्रन्तऽआप्यायताम् । यत्ते क्रूरं यदास्थितं
तत्तऽआप्यायतान्निष्ट्यायतान्तत्ते शुद्ध्यतु शमहोभ्यः । ओषं-
धे त्रायस्व स्वधिते मैनᳬंहिᳬंसीः ॥ १५ ॥ रक्षसां भागोसि निरस्तᳬं
रक्षंऽइदमहᳬंरक्षोभितिष्ठामीदमहᳬंरक्षोवबाधऽइदमहᳬं रक्षोधमन्त-
मोनयामि । घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्नि-
राज्यस्य वेतु स्वाहा स्वाहाकृतेऽऊर्ध्वनभसं मारुतं गच्छतम् ॥ १६ ॥
इदमापः प्रवहतावद्यञ्च मलं च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपेऽ-
भीरुणम् । आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥ १७ ॥ स-
न्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम् । रेडस्यग्निष्ट्वा श्रीणात्वा-

पस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या ऽऊष्मणो व्यथिषत्प्रयुतं द्वेषः ॥ १८ ॥ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिश ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहा ॥ १९ ॥ ऐन्द्रः प्राणो ऽअङ्गे ऽअङ्गे निदीध्यदैन्द्र ऽउदानो ऽअङ्गे ऽअङ्गे निधीतः । देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपं भवाति । देवत्रा यन्तमवसे सखायोनु त्वा माता पितरो मदन्तु ॥ २० ॥ समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवꣳसवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाहोरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा

दिव्यन्नभौंगच्छस्वाहाग्निंवैश्वानरङ्गच्छस्वाहामनोंमेहार्दियच्छदि-
वन्तेधूमोगंच्छतुस्वर्ज्योतिः पृथिवीम्भस्मनापृणस्वाहा ॥ २१ ॥
मापोमौषधीर्हिᳬसीर्द्धाम्नोधाम्नोराजँस्ततोंव्वरुणनोमुञ्च । यदाहु-
रघ्न्या ऽइतिव्वरुणेतिशपामहेततोंव्वरुणनोमुञ्च । सुमित्रियानऽआ-
पऽओषधयᳬसन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्वि-
ष्मः ॥ २२ ॥ हविष्मतीरिमाऽआपोहविष्माँ२ऽआविवासति ।
हविष्मान्देवोऽअध्वरोहविष्माँ२ऽअस्तुसूर्यः ॥ २३ ॥ अग्ने-
र्वोपन्नगृहस्यसदसिसादयामीन्द्राग्न्योर्भागधेयीस्स्थमित्रावरुणयो-
र्भागधेयीस्स्थव्विश्वेषान्देवानाम्भागधेयीस्स्थ । अमूर्याऽउपसू-

ठ्षैषाभिर्व्वासूठ्षैँ ÷ सह । तानोंहिन्न्वन्त्वद्ध्वरम् ॥ २४ ॥ हृदेत्त्वा
मनसेत्त्वादिवेत्त्वासूठ्षीयत्त्वा । ऊद्ध्र्वमिममद्ध्वरन्दिविदेवेषुहो-
त्राषच्छ ॥ २५ ॥ सोमराजन्विश्श्वास्त्वस्प्रजाऽउपावरोहव्विश्श्वा-
स्त्वाम्प्रजाऽउपावरोहन्तु । श्शृणोत्त्वग्निःसमिधाहवम्मेश्शृण्ण्वन्त्वा-
पोधिषणाश्चदेवीः । श्रोताग्ग्रावाणोव्विदुषोनयज्ञꣳश्शृणोतुदेवःस-
विताहवम्मेस्वाहा ॥ २६ ॥ देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हं-
विष्ष्यऽइन्द्रियावान्म्मदिन्तमः । तन्देवेब्भ्योदेवत्राद्दत्तशुक्क्रपेब्भ्यो
येषाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसिसमुद्द्रस्यत्त्वाक्षित्याऽउ-
न्नयामि । समापोऽअद्भिरग्ग्मतसमोषधीभिरोषधीः ॥ २८ ॥ यम-

ग्नेपृत्सुमर्त्यमवा॑वाजेषुयञ्जुनाः । सयन्ताशश्वतीरिषःस्वाहा
॥ २९ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ता-
भ्याम् । आददेरावासिगभीरमिमम्मध्वरङ्कृधीन्द्रायसुषूतमम् ।
उत्तमेनपविनोर्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्राभ्यास्थदेवश्रुतस्त-
र्प्पयतमामनोमे ॥ ३० ॥ मनोमेतर्प्पयतवाचम्मेतर्प्पयतप्प्राणम्मेतर्प्प-
यतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मेतर्प्पयतात्मानम्मेतर्प्पयतप्रजाम्मेतर्प्पय-
तपशून्मेतर्प्पयतगणान्मेतर्प्पयतगणामेमावितृषन् ॥ ३१ ॥ इन्द्रा-
यत्वावसुमतेरुद्रवतऽइन्द्रायत्वादित्यवतऽइन्द्रायत्वाभिमातिघ्ने ।
श्येनायत्वासोमभृतेग्नयेत्वारायस्पोषदे ॥ ३२ ॥ यत्तेसोमदिवि-

ज्ज्योतिष्ष्मत्पृथिव्व्यां᳖यदुरावन्तरिक्षे । तेनास्मैयजमानायोरुराये-
कृद्ध्यधिदात्रेव्वोचः ॥ ३३ ॥ श्वात्रास्स्थवृत्रतुरोराधोगूर्त्ताऽअमृत-
स्यपत्नीः । तादेवीर्द्देवत्रेमं᳖यज्ञन्नयतोपहूताः सोमस्यपिबत ॥ ३४ ॥
माभेर्म्मासंव्विक्क्थाऽऊर्ज्जन्धत्स्वधिषणेव्वीड्वीसतीव्वीडयेथामूर्ज्ज-
न्दधाथाम् । पाप्माहतोनसोमः ॥ ३५ ॥ प्रागपागुदगधराक्सर्व्व-
तस्त्वादिशऽआधावन्तु । अम्बनिष्परसमरीर्व्विदाम् ॥ ३६ ॥ त्वम-
ङ्गप्रशᳬंसिषोदेवः शविष्ठमर्त्त्यम् । नत्त्वदन्न्योमघवन्नस्तिमर्डितेन्द्रब्र-
वीमितेव्वचः ॥ ३७ ॥ इति षष्ठोऽध्यायः ॥ ६ ॥

# ❀ अथ सप्तमोऽध्यायः ❀

ॐ व्वाचस्पतयेपवस्वव्वृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः । देवो-
देवेभ्यः पवस्वयेषाम्भागोसि ॥ १ ॥ मधुमतीर्न्नऽइषस्कृधियत्तेसो-
मादाभ्यन्नामजागृवितस्मैतेसोमसोमायस्वाहास्वाहोर्व्वन्तरिक्षम-
न्वेमिस्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृतोसिव्विश्श्वेभ्यऽइन्द्रियेभ्योदिव्ये-
भ्यःपार्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासुभवसूर्य्यायदेवेभ्यस्त्वाम-
रीचिपेभ्योदेवाꣳशोयस्मैत्वेडेतत्सत्यमुपरिप्लुताभङ्गेनहतोसौफट्
प्राणायत्वाव्व्यानायत्वा ॥ ३ ॥ उपयामगृहीतोस्यन्तर्यच्छमघव-

न्पाहिसोमम्। उरुष्ष्यरायऽएषोयजस्व ॥ ४ ॥ अन्तस्तेद्यावापृथि-
वीर्दधाम्म्यन्तर्द्दधाम्म्युर्व्वन्तरिक्षम् । सजूर्द्देवेभिरवरैः परैश्श्चान्त-
र्य्यामेमघवन्न्मादयस्व ॥ ५ ॥ स्वाङ्कृतोसिव्विश्श्वेब्भ्यऽइन्द्रियेब्भ्यो
दिव्येब्भ्यः पार्थिवेब्भ्योमनस्त्वाष्टुस्वाहात्वासुभवसूर्य्यायदेवेब्भ्यं-
स्त्वामरीचिपेब्भ्यऽउदानायत्त्वा ॥ ६ ॥ आवायोभूषशुचिपाऽउपनः
सहस्रन्ते नियुतोव्विश्श्ववार । उपोतेऽअन्धोमद्यमयामियस्यदेवद-
धिषेपूर्व्वपेयंव्वायवेत्त्वा ॥ ७ ॥ इन्द्रवायुऽइमेसुताऽउपप्प्रयोभिरा-
गतम्। इन्दवोव्वामुशन्तिहि । उपयामगृहीतोसिव्वायवऽइन्द्रवा-
युब्भ्यान्त्वैषतेयोनि÷सजोषोब्भ्यान्त्वा ॥ ८ ॥ अयंव्वाम्मित्त्रावरुणा-

सुतꣳसोमऽऋतावृधा । ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोसि
मित्रावरुणाभ्यान्त्वा ॥ ९ ॥ रायाव्वयꣳ ससवाꣳसो मदेम हव्व्येन
देवा यवसेन गावः । तान्धेनुम्मित्रावरुणा युवन्नो व्विश्वाहा धत्तमनप-
स्फुरन्तीमेष ते योनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ या वाङ्कशा मधुमत्य-
श्विना सूनृतावती । तया यज्ञम्मिमिक्षतम् । उपयामगृहीतोस्यश्विभ्या-
न्त्वैष ते योनिर्म्माध्वीभ्यान्त्वा ॥ ११ ॥ तम्प्रत्नथा पूर्व्वथा व्विश्वथे
मथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्व्विदम् । प्रतीचीनं व्वृजनन्दोहसे धु-
निमाशुञ्जयन्तमनु यासु व्वर्द्धसे । उपयामगृहीतोसि शण्डाय त्वैष ते
योनिर्व्वीरताम्पाह्यपमृष्टꣳ शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृ-

ष्टासि ॥ १२ ॥ सुवीरोव्वीरान्प्रजनयन्परीह्यभिरायस्पोषेणयजं-
मानम् । सञ्जग्मानोदिवापृथिव्याशुक्रःशुक्रशोचिषानिरस्तःशं-
ण्डः ÷ शुक्रस्याधिष्ठानमसि ॥ १३ ॥ अच्छिन्नस्यतेदेवसोमसुवीर्य्यँ
स्यरायस्पोषस्यदद्दितारः ÷ स्याम । साप्रथमासंस्कृतिर्व्विश्ववारा-
सप्प्रथमोव्वरुणोमित्रोऽअग्निः ॥ १४ ॥ सप्प्रथमोबृहस्पतिश्चिकि-
त्वाँस्तस्माऽइन्द्रायसुतमाजुहोतस्वाहा । तृम्पन्तुहोत्रामद्ध्वोयाः
स्विष्टायाःसुप्रीताःसुहुतायत्स्वाहायाडग्नीत् ॥ १५ ॥ अयंव्वेन-
श्चोदयत्पृश्निगर्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने । इममपाᳪसङ्ग-
मेसूर्यस्यशिशुन्नविप्रामतिभीरिहन्ति । उपयामगृहीतोसिमर्काय-

स्त्वा ॥ १६ ॥ मनोनवेषुहवनेषुतिग्ग्मंव्विपश्शच्च्यावनुथोद्द्रवन्ता ।
आयश्शिवाभिस्तुविनृम्म्णोऽअस्याश्श्रीणीतादिशङ्गभस्तावेषतेयो-
निःप्प्रजाश्पाह्यपमृष्टोमर्क्कोदेवास्त्वामन्थिपाश्प्प्रणयन्त्वनाधृष्टासि
॥ १७ ॥ सुप्प्रजाश्प्रजाश्प्रजनयन्नपरीह्यभिरायस्प्पोषेणयजमानम् ।
सञ्जग्मानोदिवापृथिव्व्यामन्थीमन्थिशोचिषानिरस्तोमर्क्कोमन्थिनो-
धिष्ठानमसि ॥ १८ ॥ येदेवासोदिव्व्येकादशस्स्थपृथिव्व्यामद्ध्येका-
दशस्स्थ । अप्सुक्षितोमहिनैकादशस्स्थतेदेवासोयज्ञमिमञ्जुषद्ध्वम्
॥ १९ ॥ उपयामगृहीतोस्याग्ग्रयणोसिस्वाग्ग्रयणः । पाहियज्ञम्पाहि
यज्ञपतिंव्विष्णुस्त्वामिन्द्रियेणपातुव्विष्णुन्त्वम्पाह्यभिसवनानिपा-

ह्वि ॥ २० ॥ सोमः॑ पवते॒ सोमः॑ पवते॒ऽस्मै ब्रह्म॑णे॒ऽस्मै क्ष॒त्राया॒स्मै सु॒-
न्व॒ते यज॑मानाय पवत॒ऽइ॒षऽऊ॒र्ज्जे प॑वते॒ऽद्भ्यऽओष॑धीभ्यः पवते॒ द्यावा-
पृ॒थि॒वीभ्या॑म्पवते सुभू॒ताय॑ पवते॒ विश्वे॑भ्यस्त्वा दे॒वेभ्य॑ऽए॒ष ते॒ योनि-
र्विश्वे॑भ्यस्त्वा दे॒वेभ्यः॑ ॥ २१ ॥ उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा
बृ॒हद्व॑ते॒ वय॑स्वतऽउक्था॒व्यं॑ गृह्णामि। यत्त॑ऽइन्द्र बृ॒हद्वय॒स्तस्मै॑
त्वा॒ विष्ण॑वे त्वै॒ष ते॒ योनि॑रु॒क्थेभ्य॑स्त्वा दे॒वेभ्य॑स्त्वा देवा॒व्यं॑ य॒ज्ञ-
स्यायु॑षे गृह्णामि मि॒त्रावरु॑णाभ्यान्त्वा ॥ २२ ॥ मि॒त्रावरु॑णाभ्यान्त्वा
देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णा॒मीन्द्रा॑य त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामी-
न्द्रा॒ग्निभ्या॑न्त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामी॒न्द्रावरु॑णाभ्यान्त्वा देवा-

व्व्यंयज्ञस्यायुषेगृह्णामीन्द्राबृहस्पतिब्भ्यान्त्वादेवाव्व्यंयज्ञस्यायुषेगृ-
ह्णामीन्द्राविष्ष्णुब्भ्यान्त्वादेवाव्व्यंयज्ञस्यायुषेगृह्णामि ॥ २३ ॥ मूर्द्धा-
नन्दिवोऽअरतिम्पृथिव्व्यावैश्वानरमृतऽआजातमग्निम् । कविꣳस-
म्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ २४ ॥ उपयाम-
गृहीतोसिध्रुवोसिध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोच्च्युतानामच्च्युत-
क्षित्तमऽएषतेयोनिर्व्वैश्वानरायत्त्वा । ध्रुवन्ध्रुवेणमनसाव्वाचासोम-
मवनयामि । अथानऽइन्द्रइद्विशोसपत्नाःसमनसस्करत् ॥ २५ ॥
यस्तेद्रप्प्सस्कन्दतियस्तेऽअꣳशुर्ग्रावच्च्युतोधिषणयोरुपस्त्थात् ।
अद्ध्वर्य्योर्व्वापरिवायःपवित्त्रात्तन्तेजुहोमिमनसाव्वषट्कृतꣳस्वाहा

देवानामुत्क्रमणमसि ॥ २६ ॥ प्राणायमेव्वर्च्चोदाव्वर्च्चँसेपवस्वव्व्या-
नायमेव्वर्च्चोदाव्वर्च्चँसेपवस्वोदानायमेव्वर्च्चोदाव्वर्च्चँसेपवस्वव्वाचेमे
व्वर्च्चोदाव्वर्च्चँसेपवस्वक्रतूदक्षाभ्याम्मेव्वर्च्चोदाव्वर्च्चँसेपवस्वश्श्रोत्रा-
यमेव्वर्च्चोदाव्वर्च्चँसेपवस्वचक्षुर्भ्याम्मेव्वर्च्चोदसौव्वर्च्चँसेपवेथामात्मने-
मे ॥ २७ ॥ आत्मनेमेव्वर्च्चोदाव्वर्च्चँसेपवस्वौजँसेमेव्वर्च्चोदाव्वर्च्चँसेपव-
स्वायुषेमेव्वर्च्चोदाव्वर्च्चँसेपवस्वव्विश्श्वाभ्योमेप्प्रजाभ्योव्वर्च्चोदसौ-
व्वर्च्चँसेपवेथाम् ॥ २८ ॥ कोसिकतमोसिकस्यासिकोनामासि । यस्य
तेनामामन्महियन्त्वासोमेनातीतृपाम । भूर्भुवᳪस्व ÷ सुप्प्रजाऽप्प्रजा-
भि ÷ स्याᳪसुवीरोव्वीरैᳪसुपोषᳪपोषैᳪ ॥ २९ ॥ उपयामगृहीतोसिम-

धवेत्त्वोपयामगृहीतोसिमाधवायत्त्वोपयामगृहीतोसिशुक्रायत्त्वो-
पयामगृहीतोसिशुचयेत्वोपयामगृहीतोसिनभसेत्त्वोपयामगृहीतोसि-
नभस्यायत्त्वोपयामगृहीतोसीषेत्त्वोपयामगृहीतोस्यूर्ज्जेत्त्वोपयाम-
गृहीतोसिसहसेत्त्वोपयामगृहीतोसिसहस्यायत्त्वोपयामगृहीतोसि
तपसेत्त्वोपयामगृहीतोसितपस्यायत्त्वोपयामगृहीतोस्यꣳहसस्पतये-
त्वा ॥ ३० ॥ इन्द्राग्ग्नीऽआगतꣳसुतङ्गीर्भिर्न्नभोव्वरेण्यम् । अस्यपा-
तन्धियेषिता । उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्नि-
भ्यान्त्वा ॥ ३१ ॥ आघायेऽअग्निमिन्धतेस्तृणन्तिबर्हिरानुषक । ये-
षामिन्द्रोयुवासखा उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैषतेयोनिर-

ग्नीन्द्राभ्यान्त्वा ॥३२॥ ओमासश्चर्षणीधृतोव्विश्वेदेवासऽआगत । दाश्वाᳫंसोदाशुषं÷ सुतम् । उपयामगृहीतोसिव्विश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्य÷ ॥ ३३ ॥ व्विश्वेदेवासऽआगतश्शृणुतामऽइमᳪ हवम् । एदम्बर्हिर्न्निषीदत । उपयामगृहीतोसिव्विश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्य÷ ॥३४॥ इन्द्रमरुत्त्वऽइहपाहिसोमंय्यथाशार्य्यातेऽअपिबःसुतस्य । तवप्रणीतीतवशूरशर्म्मन्नाविवासन्तिकवय÷सुयज्ञाः । उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वते ॥ ३५ ॥ मरुत्त्व-

१—इत्यत्र नेः सीदतेः ( ३।५९ ) इत्यनेन सकारस्य स्थाने षकारमापद्यते ।

न्तव्वृषभंव्वावृधानमकवारिन्दिव्व्यꣳशासमिन्द्रम् । व्विश्श्वासाह-
मवसेनूतन्नायोग्ग्रꣳसंहोदामिहतꣳहुवेम । उपयामगृहीतोसीन्द्राय
त्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वते । उपयामगृहीतोसिम-
रुतान्त्वौजसे ॥ ३६ ॥ सजोषाऽइन्द्रसगणोमरुद्भिꣳसोमम्पिबव्वृत्रहा-
शूरव्विद्वान् । जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिव्विश्श्वतो-
नꣳ । उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वाम-

---

१—'विश्वसहभुवपुषवसुषु' ( शु० य० प्रा० अ० ३ सू० १०२ ) विश्व इत्येतत्पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते । एवम् भुव यथा—'अर्चा विश्वा नराय विश्वाभुवे' ( शु० य० सं० ३३।२३ ) पुष यथा—'विश्वापुषꣳरयिम्' ( शु० य० सं० २५।४५ )

रुत्वते ॥ ३७ ॥ मरुत्वाँ२ऽइन्द्र वृषभो रणाय पिबा सोममनुष्वधम्
मदाय । आसिञ्चस्व जठरे मद्ध्वऽऊर्म्मिन्त्वꣳ राजासि प्रतिपत्सुता-
नाम् । उपयामगृहीतोसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा म-
रुत्वते ॥३८॥ महाँ२ऽइन्द्रो नृवदा चर्षणिप्राऽउत द्विबर्हाऽअमिनः स-
होभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ।
उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्म्महेन्द्राय त्वा ॥३९॥ महाँ२ऽइ-
न्द्रो यऽओजसा पर्ज्जन्यो वृष्टिमाँ२ऽइव । स्तोमैर्वत्सस्य वावृधे ।
उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्म्महेन्द्राय त्वा ॥ ४० ॥ उदु-
त्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यꣳ स्वाहा

॥ ४१ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्नेः ।
आप्राद्यावापृथिवीऽअन्तरिक्षᳪ सूर्य्यऽआत्माजगतस्तस्थुषश्च-
स्वाहा ॥ ४२ ॥ अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेवव्वयुना-
निव्विद्वान् । युयोद्ध्यस्म्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंव्वि-
धेमस्वाहा ॥ ४३ ॥ अयन्नोऽअग्निर्व्वरिवस्कृणोत्वयम्मृधः पुरऽए-
तुप्रभिन्दन् । अयंव्वाजाञ्जयतुव्वाजसातावयᳪ शत्रूञ्जयतुजर्हृषाणः-
स्वाहा ॥ ४४ ॥ रूपेणवोरूपमभ्यागान्तुथोवोव्विश्ववेदाव्विभजतु ।
ऋतस्यपथाप्रेतचन्द्रदक्षिणाव्विस्वःपश्यव्व्यन्तरिक्षंयतस्वसदस्यैः
॥ ४५ ॥ ब्राह्मणमद्यव्विदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयᳪ सुधा-

तुंदक्षिणम् । अस्मद्द्रातादेवत्रागच्छतप्रदातारमाविशत ॥ ४६ ॥
अग्नयेत्वामह्यंवरुणोददातुसोमृतत्वमशीयायुर्द्दात्रऽएधिमयोमह्यं-
प्रतिग्रहीत्रेरुद्रायत्वामह्यंवरुणोददातुसोमृतत्वमशीयप्राणोदा-
त्रऽएधिवयोमह्यंप्रतिग्रहीत्रेबृहस्पतयेत्वामह्यंवरुणोददातुसो
मृतत्वमशीयत्वग्दात्रऽएधिमयोमह्यंप्रतिग्रहीत्रेयमायत्वामह्यं
वरुणोददातुसोमृतत्वमशीयहयोदात्रऽएधिवयोमह्यंप्रतिग्रहीत्रे
॥४७॥कोदात्कस्माऽअदात्कामोदात्कामायादात् । कामोदाताकामः
प्रतिग्रहीताकामैतत्ते ॥ ४८ ॥ इति सप्तमोऽध्यायः ॥ ७ ॥

# ❀ अथ अष्टमोऽध्यायः ❀

ॐ उपयामगृ॑हीतोस्यादित्येभ्यंस्त्वा । विष्ण॑उरुगायैषते सोमस्त ꣳ रंक्षस्वमात्वांदभन् ॥ १ ॥ कदाचनस्तरीरसिनेन्द्रंसश्च सिदाशुषे । उपोपेन्नुमघवन्भूयइन्नुतेदानन्देवस्यंपृच्यतआदित्ये भ्यंस्त्वा ॥ २ ॥ कदाचनप्रयुच्छस्युभेनिपासिजन्मंनी । तुरीयादित्य सवंनन्तइन्द्रियमातंस्थावमृतन्दिव्यादित्येभ्यंस्त्वा ॥ ३ ॥ यज्ञो देवानाम्प्रत्यैतिसुम्नमादित्यासोभवंतामृडयन्त॑ः । आवोर्वाचीसु मतिर्व्ववृत्यादꣳहोश्चिद्याव्वरिवोवित्तरासंदादित्येभ्यंस्त्वा ॥ ४ ॥

व्विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्न्मत्स्व । अदस्मैनरोव्वचं-
सेदधातनयदाशीर्दादम्पतीव्वाममश्नुतः । पुमान्पुत्त्रोजायतेव्वि-
न्दतेव्वस्वधाव्विश्श्वाहारपऽएधतेगृहे ॥५॥ व्वाममद्यसवितर्व्वाम-
मुश्वोदिवेदिवेव्वाममस्म्मभ्यꣳसावीः । व्वामस्यहिक्षयस्यदेवभूरे-
र्याधियाव्वामभाजः स्याम ॥ ६ ॥ उपयामगृहीतोसिसावित्रोसि-
चनोधाश्चनोधाऽअसिचनोमयिधेहि । जिन्न्वयज्ञञ्जिन्न्वयज्ञपतिम्भ-
गायदेवायत्वासवित्रे ॥ ७ ॥ [ शतम् ३०० ] उपयामगृहीतोसिसु-
शर्म्मासिसुप्रतिष्ठानोबृहदुक्षायनमः । व्विश्श्वेब्भ्यस्त्वादेवेब्भ्यऽए-
षतेयोनिर्व्विश्श्वेब्भ्यस्त्वादेवेब्भ्यः ॥ ८ ॥ उपयामगृहीतोसिबृह-

स्प्पतिंसुतस्यदेवसोमतऽइन्द्रोरिन्द्रियावतुंपत्नीवतोग्रहाँ२ऽऋद्ध्या-
सम् । अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदुमेपिताभूत् । अहꣳ
सूर्य्यमुभयतोददर्शाहन्देवानाम्परमङ्गुहायत् ॥ ९ ॥ अग्नाँ३ऽइपत्नी-
वन्त्सजूर्देवेनत्त्वष्ट्रासोमम्पिबस्वाहा । प्रजापतिर्वृषासिरेतोधारेतो
मयिधेहिप्प्रजापतेस्तेवृष्णोरेतोधसोरेतोधामशीय ॥ १० ॥ उपयाम-
गृहीतोसिहरिरसिहारियोजनोहरिब्भ्यान्त्वा । हय्योर्धानास्थसह-
सोमाऽइन्द्राय ॥ ११ ॥ यस्तेऽअश्वसनिर्ब्भक्षोयोगोसनिस्तस्यतऽइ-
ष्टयजुषस्तुतस्तोमस्यशस्तोक्थस्योपहूतस्योपहूतोभक्षयामि ॥ १२ ॥
देवकृतस्यैनसोवयजनमसिमनुष्यकृतस्यैनसोवयजनमसिपितृकृतस्यै-

नसोवयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽएनसोवयजनमसि । यच्चाहमेनोविद्वाँश्चकारयच्चाविद्वाँस्तस्यसर्व्वस्यैनसोवयजनमसि ॥ १३ ॥ संव्वर्च्चसापयसासन्तनूभिरगन्न्महिमनसासꣳशिवेन । त्वष्टासुदत्रोव्विदधातुरायोनुमार्ष्टुतन्न्वोयद्द्विलिष्टम् ॥ १४ ॥ समिन्द्रणोमनसानेषिगोभिꣳसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्या । सम्ब्रह्मणादेवकृतंयदस्तिसन्देवानाꣳसुमतौयज्ञियानाꣳस्वाहा ॥१५॥ संव्वर्च्चसापयसासन्तनूभिरगन्न्महिमनसासꣳशिवेन । त्वष्टासुदत्रोव्विदधातुरायोनुमार्ष्टुतन्न्वोयद्द्विलिष्टम् ॥ १६ ॥ धातारातिःसवितेदञ्जुषन्ताम्प्रजापतिर्न्निधिपादेवोऽअग्निः । त्वष्टाव्विष्णुःप्रजया-

सꣳरराणा यजमानाय द्द्रविणन्दधात स्वाहा ॥ १७ ॥ सुगा वो देवाः
सदना ऽअकर्म्म यऽआजग्मेदꣳ सवनञ्जुषाणाः । भरमाणा व्वहमाना
हवीꣳष्यस्मे धत्त व्वसवो व्वसूनि स्वाहा ॥ १८ ॥ याँ२ऽआवहऽउश-
तो देव देवाँस्तान्प्रेरय स्वेऽअग्ने सधस्थे । जक्षिवाꣳसः पपिवाꣳसः-
श्च व्विश्वेसुं घर्म्मꣳ स्वरातिष्ठतानु स्वाहा ॥ १९ ॥ व्वयꣳ हि त्वा-
प्प्रयति यज्ञेऽअस्मिन्नग्ने होतारमवृणीमहीह । ऋधगया ऽऋधगुता-
शमिष्ठाः प्प्रजानन्यज्ञमुपयाहि व्विद्वान्त्स्वाहा ॥ २० ॥ देवा गातु-
विदो गातुं व्वित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳ स्वाहा व्वाते-
धाः ॥ २१ ॥ यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वां योनिङ्गच्छ स्वाहा । एष-

तैषशोर्षं॒ज्ञपतेसह्वसूं॒क्तवाकुं॑सर्व्ववींरस्तञ्जुंषस्वस्वाहा ॥ २२ ॥
माहिर्भूम्र्मापृदाकुं॑ । उरुꣳहिराजाव्वरुंणश्चकारसूर्य्यायपन्थाम-
न्वैतवाऽउं । अपदेपादाप्रतिंधातवेकरुतापवक्ताहृंदयाव्विधंश्चित् ।
नमोव्वरुंणायाभिष्ठितोव्वरुंणस्यपाशः ॥ २३ ॥ अग्नेरनींकमपऽ-
आविंवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् । दमेंदमेसमिधंय्यक्ष्यग्नेप्रति-
तेजिह्वाघृतमुच्चरण्यत्स्वाहा ॥ २४ ॥ समुद्रेतेहृदयमप्स्वन्तःसन्त्वा-
व्विशन्त्वोषंधीरुतापः । यज्ञस्यंत्वायज्ञपतेसूक्तोक्तौनमोवाकेव्वि-
धेमयत्स्वाहा ॥ २५ ॥ देवींरापऽएषवोगर्भस्तꣳसुप्रीतꣳसुभृतम्बि-
भृत । देवंसोमैषतेलोकस्तस्मिञ्छञ्चव्वक्ष्वपरिचव्वक्ष्व ॥२६॥ अवंभृ-

थनिचुम्पुणनिचेरुरसिनिचुम्पुणः । अवदेवैर्देवकृतमेनोयासिषमव-
मर्त्यैर्म्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहिदेवानाᳬसमिदसि ॥ २७ ॥
एजतुदशमास्योगर्ब्भोजरायुणासह । यथायंव्वायुरेजतियथासमुद्रऽ-
एजति । एवायन्दशमास्योऽअस्रज्जरायुणासह ॥ २८ ॥ यस्यैतेयज्ञि-
योगर्ब्भोयस्यैयोनिर्हिरण्ययी । अङ्गान्यह्रुतायस्यतम्मात्रासमजीग-
मᳬस्वाहा ॥ २९ ॥ पुरुदस्मोविषुरूपऽइन्दुरन्तर्म्महिमानमानञ्ज-
धीरः । एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानुप्रथ-
न्ताᳬस्वाहा ॥ ३० ॥ मरुतोयस्यहिक्षयेपाथादिवोव्विमहसः । ससु-
गोपातमोजनः ॥ ३१ ॥ महीद्यौःपृथिवीचनऽइमंय्यज्ञम्मिमिक्षताम् ।

पिपृतान्नोभर्रीमभिः ॥ ३२ ॥ आतिष्ठव्वृत्रहन्रथंयुक्तातेब्ब्रह्मणा-
हरी । अर्व्वाचीनꣳसुतेमनोग्ग्रावाकृणोतुव्वग्नुना । उपयामगृहीतो-
सीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्वाषोडशिने ॥३३॥ युक्ष्वा-
हिकेशिनाहरीव्वृषणाकक्ष्यप्रा । अथानऽइन्द्रसोमपागिरामुपश्श्रुतिञ्चर । उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वाषोड-
शिने ॥ ३४ ॥ इन्द्रमिद्धरीव्वहतोप्प्रतिधृष्टशवसम् । ऋषीणाञ्चस्तुती-
रुपंयज्ञञ्चमानुषाणाम् । उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयो-
निरिन्द्रायत्त्वाषोडशिने ॥ ३५ ॥ यस्म्मान्नजातःपरोऽअन्न्योऽअस्ति
यऽआविवेशभुवनानिव्विश्श्वा । प्रजापतिःप्प्रजयासꣳरराणस्त्रीणि

ज्ज्योतीꣳषिसचतेसषोडशी ॥३६॥ इन्द्रश्चसम्म्राड्वरुणश्चराजातौ-
तैभक्षञ्चक्क्रतुरग्ग्रेऽएतम् । तयोरहमनुभक्षम्भक्षयामिव्वाग्ग्देवीजुषा-
णासोमस्यतृप्प्यतुसहप्प्राणेनस्वाहा ॥ ३७ ॥ अग्ग्नेपवस्वस्वपाऽअ-
स्म्मेव्वर्च्चः सुवीर्य्यम् । दधद्द्रयिम्मयिपोषम् । उपयामगृहीतोस्य-
ग्ग्नयेत्त्वाव्वर्च्चसऽएषतेयोनिरग्ग्नयेत्त्वाव्वर्च्चसे । अग्ग्नेव्वर्च्चस्विन्व-
र्च्चस्वाँस्त्वन्देवेष्ष्वसिव्वर्च्चस्वानहम्मनुष्ष्येषुभूयासम् ॥ ३८ ॥ उ-
त्तिष्ठन्नोजसासहपीत्त्वीशिप्प्रेऽअवेपयः । सोममिन्द्रचमूसुतम् । उप-
यामगृहीतोसीन्द्रायत्त्वौजसऽएषतेयोनिरिन्द्रायत्त्वौजसे । इन्द्रौजि-
ष्ठौजिष्ठस्त्वन्देवेष्ष्वस्योजिष्ठोहम्मनुष्ष्येषुभूयासम् ॥ ३९ ॥ अदृश्र-

मस्यकेतवो व्विरश्म्मयोजनाँ२ऽअनु। भ्राजन्तोऽअग्नयोयथा। उपयाम-
गृहीतोसिसूर्य्यायत्वाभ्भ्राजायैषतेयोनिः सूर्य्यायत्त्वाभ्भ्राजाय। सू-
र्य्यभ्भ्राजिष्ठुभ्भ्राजिष्ठुस्त्वन्देवेष्ष्वसिभ्भ्राजिष्ठोहम्मनुष्ष्येषुभूयासम्
॥ ४० ॥ उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः। दृशेव्विश्श्वायसूर्य्य-
म्। उपयामगृहीतोसिसूर्य्यायत्त्वाभ्भ्राजायैषतेयोनिः सूर्य्यायत्त्वाभ्भ्रा
जाय ॥ ४१ ॥ आजिघ्रकलशम्महीत्वाव्विशन्त्विन्दवः। पुनरूर्ज्जा
निवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्द्रयिः
॥४२॥ इडेरन्तेहव्येकाम्म्येचन्द्रेज्ज्योतेदितिसरस्वतिमहिव्विश्श्रुति।
एतातेऽअघ्न्येनामानिदेवेब्भ्योमासुकृतम्ब्रूतात् ॥ ४३ ॥ व्विनऽइन्द्रमृ-

ग्नौजहिनीचार्षञ्छपृतञ्यतः। यो॒ऽअस्मा॒ँ२ऽअभिदास॒त्यध॑रङ्गमयात-
मं÷ । उ॒प॒या॒मगृ॑हीतो॒सीन्द्रा॑यत्त्वाव्विमृध॑ऽए॒षते॒योनि॑रिन्द्रा॑यत्त्वा
व्विमृधे॑ ॥ ४४ ॥ व्वाचस्पति॑व्विश्श्वक॑र्म्माणमू॒तयेम॒नोजु॒वंव्वाजे॑ऽअ-
द्याहु॑वेम । सनो॒व्विश्श्वा॑निहव॑नानिजोषद्वि॒श्श्वश॑म्भूरव॑सेसा॒धु-
क॑र्म्मा । उ॒प॒या॒मगृ॑हीतो॒सीन्द्रा॑यत्त्वाव्विश्श्वक॑र्म्मण॒ऽए॒षते॒योनि॑रि-
न्द्रा॑यत्त्वाव्विश्श्वक॑र्म्मणे ॥ ४५ ॥ व्विश्श्वक॑र्म्मन्हविषाव्वर्द्धनेनत्रा-
तार॑मिन्द्र॑मकृणोरवद्ध्यम्। तस्मै॒व्विशः॒सम॑नमन्तपूर्व्वीरयमु॒ग्ग्रोवि-
हव्यो॒यथास॑त् । उ॒प॒या॒मगृ॑हीतो॒सीन्द्रा॑यत्त्वाव्विश्श्वक॑र्म्मण॒ऽए॒षते
योनि॑रिन्द्रा॑यत्त्वाव्विश्श्वक॑र्म्मणे ॥ ४६ ॥ उ॒प॒या॒मगृ॑हीतोस्यग्नये॑

त्वागायत्रच्छन्दसङ्गृह्णामीन्द्रायत्वा त्रिष्टुप्छन्दसङ्गृह्णामिविश्श्वेब्भ्य-
स्त्वादेवेब्भ्योजगच्छन्दसङ्गृह्णाम्म्यनुष्टुप्तेभिगरः ॥४७॥ व्व्रेशीनान्त्वा-
पत्क्मन्नाधूनोमिकुकूननानान्त्वापत्क्मन्नाधूनोमिभन्दनानान्त्वापत्क्म-
न्नाधूनोमिमदिन्तमानान्त्वापत्क्मन्नाधूनोमिमधुन्तमानान्त्वापत्क्मन्ना-
धूनोमिशुक्क्रन्त्वाशुक्क्रआधूनोम्म्यह्नोरूपेसूर्य्यस्यरश्मिषु ॥ ४८ ॥
ककुभꣳरूपंव्वृषभस्यरोचतेबृहच्छुक्क्रःशुक्क्रस्यपुरोगाःसोमःसोम-
स्यपुरोगाः । यत्तेसोमादाब्भ्यन्नामजागृवितस्मैत्त्वागृह्णामितस्मैते
सोमसोमायस्वाहा ॥ ४९ ॥ उशिक्त्वन्देवसोमाग्ग्नेःप्प्रियम्पाथोपी-
हिव्वशीत्त्वन्देवसोमेन्द्रस्यप्प्रियम्पाथोपीह्यस्म्मत्सखात्वन्देवसोम-

व्विश्श्वेषान्देवानाम्प्प्रियम्पाथोपीहि ॥ ५० ॥ इहरतिरिहरमद्ध्वमिह-
धृतिरिहस्वधृतिर्ठ्स्वाहा । उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ।
रायस्प्पोषमस्म्मासुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऽऋद्धिरस्यगन्म-
ज्ज्योतिरमृताऽअभूम । दिवम्पृथिव्व्याऽअद्ध्यारुहामाविदामदेवा-
न्त्स्वज्ज्योतिः ॥५२॥ युवन्तमिन्द्रापर्व्वतापुरोयुधायोनः पृतन्न्यादपत-
न्तमिद्धतंव्वज्ज्रेणतन्तमिद्धतम् । दूरेचत्तायच्छन्त्सद्गहनंयदिनक्षत् ।
अस्म्माकर्ठ्शत्रून्परिशूरव्विश्श्वतोदर्म्मादर्षीष्टव्विश्श्वतः । भूर्भुवर्ठ्
स्वः सुप्प्रजाः प्प्रजाभिः स्यामसुवीराव्वीरैः सुपोषाः पोषैः ॥ ५३ ॥
परमेष्ठ्यभिधीतर्ठ्प्प्रजापतिर्व्वाचिव्व्याहृतायामन्धोऽअच्छेतर्ठ्सविता-

सन्न्यां व्विश्श्वकर्म्मा दीक्षायाम्पूषा सोमक्क्रयण्यामिन्द्रश्च ॥ ५४ ॥
इन्द्रश्च मरुतश्च क्क्रयायोपोत्थितोऽसुरः पण्यमानो मित्त्रः क्क्रीतो व्वि-
ष्णुः शिपिविष्ट ऽऊरावासन्नो व्विष्णुर्न्नरन्धिषः प्प्रोह्यमाणः सोमः
॥ ५५ ॥ प्प्रोह्यमाणः सोम ऽआगतो व्वरुण ऽआसन्द्यामासन्नोऽग्निराग्नी-
द्ध्र ऽइन्द्रो हविर्द्धानेऽथर्व्वोपावह्रियमाणो व्विश्श्वे देवाः ॥ ५६ ॥ व्वि-
श्श्वे देवा ऽअᳪशुषु न्न्युप्तो व्विष्णुराप्प्रीतपा ऽआप्प्याय्यमानो यमः सू-
यमानो व्विष्णुः सम्भ्रियमाणो व्वायुः पूयमानः शुक्क्रः पूतः शुक्क्रः क्षी-
रश्रीर्म्मन्थी सक्तुश्रीर्व्विश्श्वे देवाः ॥ ५७ ॥ व्विश्श्वे देवाश्चमसेषून्नी-
तोऽसुर्होमायोद्यतो रुद्द्रो हूयमानो व्वातोऽभ्यावृत्तो नृचक्षाः प्प्रतिक्ख्या-

तोभक्षोभक्ष्यमाणꣳपितरौनाराशꣳसाः ॥ ५८ ॥ सन्नःसिन्धुरवभृथा-
योद्यतःꣳसमुद्रोऽभ्यवह्रियमाणꣳसलिलःप्रप्लुतोषयोरोजसास्कभ-
भितारजाꣳसिव्वीर्य्येभिर्व्वीरतमाशविष्ठा । षापत्यैतेऽअप्प्रतीतास-
हौभिर्व्विष्णूऽअगन्वरुणापूर्व्वहूतौ ॥ ५९ ॥ देवान्दिवमगन्यज्ञस्त-
तोमाद्द्रविणमष्टुमनुष्यानन्तरिक्षमगन्यज्ञस्ततोमाद्द्रविणमष्टुपितॄ-
न्पृथिवीमगन्यज्ञस्ततोमाद्द्रविणमष्टुयङ्कञ्चलोकमगन्यज्ञस्ततोमे-
भद्रमभूत् ॥ ६० ॥ चतुस्त्रिꣳशत्तन्तवोयेव्वितत्निरेयऽइमंयज्ञꣳस्व-
धयाददन्ते । तेषाञ्छिन्नꣳसम्वेतद्दधामिस्वाहाघर्म्मोऽअप्येतुदेवान्
॥ ६१ ॥ यज्ञस्यदोहोव्विततःपुरुत्रासोऽअष्टधादिवमन्वाततान । स-

वंशधुक्क्ष्वमहिमेप्प्रजायाᳬंरायस्प्पोषंव्विश्श्वमायुरशीयस्वाहा ॥६२॥
आपवस्वाहिरण्यवदश्श्ववत्सोमव्वीरवत् । व्वाजङ्गोमन्तमाभरस्वाहा
॥ ६३ ॥ इति अष्टमोऽध्यायः ॥ ८ ॥

## ❀ अथ नवमोऽध्यायः ❀

ॐ देवसवितᳬंप्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय । दिव्यो-
गन्धर्व्वः केतपूः केतन्नःपुनातुव्वाचस्प्पतिर्व्वाजन्नःस्वदतुस्वाहा
॥ १ ॥ ध्रुवसदन्त्वानृषदम्मनःसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृ-
ह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् । अप्प्सुषदन्त्वाघृतसदंव्योम-

सदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्ट-
तमम्। पृथिवीसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसदमुपया-
मगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥२॥
अपाᳬरसमुद्द्वयसᳬसूर्य्येसन्तᳬसमाहितम्। अपाᳬरसस्यधोरस-
स्तंव्वोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनि-
रिन्द्रायत्त्वाजुष्टतमम् ॥ ३ ॥ ग्रहाऽऊर्ज्जाहुतयोव्व्यन्तोव्विप्रायम-
तिम्। तेषांव्विशिप्प्रियाणांव्वोहमिषमूर्ज्जᳬसमग्ग्रभमुपयामगृहीतो-
सीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम्। सम्पृचौ-
स्थᳬसम्माभद्द्रेणपृङ्क्तंव्विपृचौस्थोव्विमापाप्मनापृङ्क्तम् ॥ ४ ॥

इन्द्रस्यव्वज्रोसिव्वाजसास्त्वयायंव्वाजꣳसेत् । व्वाजस्यनुप्प्रसवे-
मातरम्महीमदितिन्नामव्वचसाकरामहे । यस्यामिदंव्विश्श्वम्भुवन-
माविवेशतस्यान्नोदेवःसविताधर्म्मसाविषत् ॥ ५ ॥ अप्प्स्वन्तरमृत-
मप्प्सुभेषजमपामुतप्प्रशस्तिष्ष्वश्श्वाभवतव्वाजिनः । देवीरापो-
योवऽऊर्म्मिःप्प्रतूर्तिःककुन्मान्व्वाजसास्तेनायंव्वाजꣳसेत् ॥ ६ ॥
व्वातोव्वामनोव्वागन्धर्व्वाःसप्तविꣳशतिः । तेऽअग्ग्रेश्श्वमयुञ्जँस्तेऽ-
अस्मिञ्जवमादधुः ॥ ७ ॥ व्वातरꣳहाभवव्वाजिन्युज्ज्यमानऽइन्द्र-
स्येवदक्षिणःश्श्रियैधि । युञ्जन्तुत्त्वामरुतोव्विश्श्ववेदसऽआतेत्त्वष्टा-
पत्सुजवन्दधातु ॥ ८ ॥ जवोयस्तेव्वाजिन्निहितोगुहायःश्श्येनेपरी-

त्तोऽअर्चरत्त्वाते। तेन॑नोव्वाजिन्न्बलवान्न्बलेन॑व्वाजजिच्चभवसम॑-
नेचपारयिष्ण्णुः। व्वाजिनोव्वाजजितोव्वाजᳬसरिष्ष्यन्तोबृहस्प-
तेर्ब्भागमवजिग्घ्रत ॥ ९ ॥ देवस्याहᳬसवितुः सवेसत्त्यसवसोबृह-
स्पतेरुत्तमन्नाकᳬरुहेयम्। देवस्याहᳬसवितुः सवेसत्त्यसवसऽइन्द्र-
स्योत्तमन्नाकᳬरुहेयम्। देवस्याहᳬसवितुः सवेसत्त्यप्प्रसवसोबृह-
स्पतेरुत्तमन्नाकमरुहम्। देवस्याहᳬसवितुः सवेसत्त्यप्प्रसवसऽइन्द्र-
स्योत्तमन्नाकमरुहम् ॥ १० ॥ बृहस्प्पतेव्वाजञ्जयबृहस्प्पतयेव्वाचंव्व-
दतबृहस्प्पतिंव्वाजञ्जापयत। इन्द्रव्वाजञ्जयेन्द्रायव्वाचंव्वदतेन्द्रंव्वा-
जञ्जापयत ॥ ११ ॥ एषावःसासत्त्यासंव्वागभूद्ययाबृहस्प्पतिंव्वाज-

मर्ज्जीजपताज्जीजपत बृहस्पतिंव्वाजंव्वनस्प्पतयो व्विमुच्च्यद्ध्वम् । ए-
षावऽंसासत्त्यासंव्वाग्गभूद्द्यथेन्द्रंव्वाजमर्ज्जीजपताज्जीजपतेन्द्रंव्वाजं-
व्वनस्प्पतयो व्विमुच्च्यद्ध्वम् ॥ १२ ॥ देवस्याहꣳसवितुः सवेसत्त्य-
प्प्रसवसो बृहस्प्पतेर्व्वाजजितो व्वाजञ्जेषम् । व्वाजिनो व्वाजजितो-
द्ध्वनस्कब्भ्नुवन्तो योजना मिमानाः काष्ठाङ्गच्छत ॥ १३ ॥ एषस्य-
व्वाजी क्षिपणिन्तुरण्ण्यति ग्रीवायाम्बद्धो ऽअपिकक्ष ऽआसनि । क्रतुन्द-
धिक्रा ऽअनुसꣳसनिष्ष्यदत्पथामङ्काꣳस्यन्न्वापनीफणत्स्वाहा ॥ १४ ॥
उतस्म्मास्य द्द्रवतस्तुरण्यतः पर्ण्णन्नवेरनुवातिप्प्रगर्द्धिनः । श्येनस्येव
द्ध्रजतो ऽअङ्कसम्परि दधिक्क्राव्णः सहोर्ज्जातरित्रतꣳस्वाहा ॥ १५ ॥

शन्नोभवन्तुव्वाजिनोहवेषुदेवतातामितद्रवः स्वर्काः । जम्भयन्तो-
हिंव्वृकꣳरक्षाꣳसिसनेम्यस्मद्युयवन्नमीवाः ॥१६॥ ते नोऽअर्व्वन्तो
हवनश्श्रुतोहवंव्विश्श्वेशृण्वन्तुव्वाजिनोमितद्रवः । सहस्रसामेध
सातासनिष्यवोमहोयेधनꣳसमिथेषुजभ्रिरे ॥१७॥ वाजेवाजेवतव्वा-
जिनोनोधनेषुव्विप्राऽअमृताऽऋतज्ञाः । अस्यमद्ध्वः ÷ पिबतमादय-
द्ध्वन्तृप्तायातपथिभिर्देवयानैः ॥ १८ ॥ आमाव्वाजस्यप्रसवोजग-
म्यादेमेद्यावापृथिवीव्विश्वरूपे । आमागन्तांपितरामातराचामा-
सोमोऽअमृतत्वेनगम्यात् । व्वाजिनोव्वाजजितोव्वाजꣳसस्रवाꣳ-
सोबृहस्पतेर्भागमवजिघ्रतनिमृजानाः ॥ १९ ॥ आपयेस्वाहास्वाप-

येस्वाहापिजायस्वाहाक्क्रतवेस्वाहाव्वसवेस्वाहाहर्प्पतयेस्वाहान्हे-
मुग्धायस्वाहामुग्धायव्वैनꣳशिनायस्वाहाव्विनꣳशिनऽआन्त्यायनाय
स्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहा॥२०॥
आयुर्य्यज्ञेनकल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्य्यज्ञेनकल्पताꣳश्श्रो-
त्रंय्यज्ञेनकल्पताम्पृष्ठंय्यज्ञेनकल्पतांय्यज्ञोयज्ञेनकल्पताम्। प्रजाप-
तेꣳप्प्रजाऽअभूमस्वर्द्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥ अस्मेवोऽअ-
स्त्विन्द्रियमस्मेनृम्णमुतक्क्रतुरस्मेव्वर्च्चाꣳसिसन्तुवः । नमोमा-
त्रेपृथिव्व्यैनमोमात्रेपृथिव्व्याऽइयन्तेराड्यन्तासियमनोध्रुवोसिधरु-
णः । कृष्ष्यैत्वाक्षेमायत्वारय्यैत्त्वापोषायत्त्वा ॥ २२ ॥ व्वाजस्येम-

म्प्रसवः सुषुवेऽग्ने सोमꣳराजानमोषधीष्वप्सु । ताऽअस्मभ्यम्मधु-
मतीर्भवन्तु वयꣳराष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ २३ ॥ वाजस्ये-
मम्प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्स-
न्तन्दापयति प्रजानन्त्स नो रयिꣳसर्ववीरन्नियच्छतु स्वाहा ॥ २४ ॥
वाजस्यनु प्रसवऽआबभूवेमा च विश्वा भुवनानि सर्वतः । सनेमि-
राजा परियाति विद्वान्प्रजाम्पुष्टिं वर्द्धयमानोऽअस्मे स्वाहा ॥२५॥
सोमꣳराजानमवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुꣳसूर्यम्ब्र-
ह्माणञ्च बृहस्पतिꣳस्वाहा ॥ २६ ॥ अर्यमणम्बृहस्पतिमिन्द्रन्दाना-
य चोदय । वाचं विष्णुꣳसरस्वतीꣳसवितारञ्च वाजिनꣳस्वाहा

॥ २७ ॥ अग्नेऽअच्छावदेहनः प्प्रतिनः सुमनाभव । प्रनोयच्छसहस्र-
जित्त्वᳬहिधनदाऽअसिस्वाहा ॥ २८ ॥ प्रनोयच्छत्वर्य्यमाप्प्रपूषाप्प्र-
बृहस्पतिः ॥ प्रवाग्देवीददातुनः स्वाहा ॥ २९ ॥ देवस्यत्त्वासवितुः
प्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताभ्याम् । सरस्वत्यैव्वाचोयन्तु-
र्य्यन्त्रियैदधामिबृहस्पतेष्ट्वासाम्म्राज्ज्येनाभिषिञ्चाम्म्यसौ ॥ ३० ॥
अग्निरेकाक्षरेणप्प्राणमुदजयत्तमुज्जेषमश्विनौद्व्यक्षरेणद्विपदोमनु-
ष्यानुदजयतान्तानुज्जेषंव्विष्णुस्त्र्यक्षरेणत्रीँल्लोकानुदजयत्तानुज्जेषᳬ
सोमश्चतुरक्षरेणचतुष्पदः पशूनुदजयत्तानुज्जेषम्पूषापञ्चाक्षरेण
॥ ३१ ॥ पूषापञ्चाक्षरेणपञ्चदिशऽउदजयत्ताऽउज्जेषᳬसवितापडक्षरे-

णषडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेणसप्तग्राम्यान्पशूनुद-
जयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेणगायत्रीमुदजयत्तामुज्जेषम्मित्रोन-
वाक्षरेण ॥ ३२ ॥ मित्रोनवाक्षरेणत्रिवृतँस्तोममुदजयत्तमुज्जेषंव्व-
रुणोदशाक्षरेणव्विराजमुदजयत्तामुज्जेषमिन्द्रऽएकादशाक्षरेणत्रिष्टु-
भमुदजयत्तामुज्जेषंव्विश्वेदेवाद्द्वादशाक्षरेणजगतीमुदजयँस्तामु-
ज्जेषंव्वसवस्त्रयोदशाक्षरेण ॥ ३३ ॥ व्वसवस्त्रयोदशाक्षरेणत्रयोदशँ
स्तोममुदजयँस्तमुज्जेषँरुद्द्राश्चतुर्दशाक्षरेणचतुर्दशँस्तोममुदज-
यँस्तमुज्जेषमादित्याः पञ्चदशाक्षरेणपञ्चदशँस्तोममुदजयँस्तमुज्जे-
षमदितिः षोडशाक्षरेणषोडशँस्तोममुदजयत्तमुज्जेषम्प्रजापतिः स-

प्तदशाक्षरेणसप्तदशꣳस्तोममुदजयत्तमुज्जेषम् ॥ ३४ ॥ एषतेनिर्ऋते-
तेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यः पुरःसद्भ्यःस्वाहाय-
मनेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यः
पश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यऽ-
उत्तरासद्भ्यःस्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुवस्वद्भ्यः
स्वाहा ॥ ३५ ॥ येदेवाऽअग्निनेत्राःपुरःसदस्तेभ्यःस्वाहायेदेवायम-
नेत्रादक्षिणासदस्तेभ्यःस्वाहायेदेवाविश्वदेवनेत्राःपश्चात्सदस्ते-
भ्यःस्वाहायेदेवामित्रावरुणनेत्रावामरुन्नेत्रावोत्तरासदस्तेभ्यःस्वा-
हायेदेवाःसोमनेत्राऽउपरिसदोदुवस्वन्तस्तेभ्यःस्वाहा ॥ ३६ ॥ अ-

ग्नेसहस्वपृतनाऽअभिमातीरपास्य। दुष्टरस्तरन्नरातीर्व्वर्चोधायज्ञ-
वाहसि ॥ ३७ ॥ देवस्यत्त्वासवितुःप्प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णो-
हस्ताभ्याम्। उपाᳫंशोर्व्वीर्य्येणजुहोमिहतᳫंरक्षःस्वाहारक्षसान्त्वा-
व्वधायावधिष्मरक्षोवधिष्मामुमसौहतः ॥ ३८ ॥ सवितात्त्वासवा-
नाᳫंसुवतामग्निर्ग्गृहपतीनाᳫंसोमोव्वनस्पतीनाम्। बृहस्पतिर्व्वा-
चऽइन्द्रोज्ज्यैष्ठ्यायरुद्रःपशुभ्योमित्रःसत्त्योव्वरुणोधर्म्मपतीनाम्
॥३९॥इमन्देवाऽअसपत्नᳫंसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमह-
तेजानराज्ज्यायेन्द्रस्येन्द्रियाय। इमममुष्यपुत्रममुष्यैपुत्रमस्यैव्विशऽए-
षवोमीराजासोमोस्माकम्ब्राह्मणानाᳫंराजा॥४०॥ इति नवमोऽध्यायः॥

# ❀ अथ दशमोऽध्यायः ❀

ॐ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः। याभि-
र्म्मित्त्रावरुणावभ्यषिञ्चन्न्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ वृष्-
ण्णऽऊर्म्मिरसिराष्ट्रदाराष्ट्रम्मे देहिस्वाहावृष्ण्णऽऊर्म्मिरसिराष्ट्र-
दाराष्ट्रममुष्म्मै देहिवृषसेनोसिराष्ट्रदाराष्ट्रम्मे देहिस्वाहावृषसे-
नोसिराष्ट्रदाराष्ट्रममुष्म्मै देह्यर्त्थेतस्त्थ ॥ २ ॥ अर्त्थेतस्त्थराष्ट्रदा-

इत्यत्र—अव्यवहितोऽपि ( ३।६६ ) संहितायां भकारव्यवहितोऽप्यभेरुत्तरः
सिञ्चतेः सकारः षकारमापद्यते ।

राष्ट्रम्मे दत्त स्वाहार्त्थेतस्थ राष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वतीस्थ रा-
ष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वतीस्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः
परिवाहिणीस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहापः परिवाहिणीस्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्तापाम्पतिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहापा-
म्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपाङ्गर्भोसि राष्ट्रदा राष्ट्रम्मे देहि-
स्वाहापाङ्गर्भोसि राष्ट्रदा राष्ट्रममुष्मै देहि सूर्य्यत्वचसस्थ ॥ २ ॥
सूर्य्यत्वचसस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्य्यत्वचसस्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्त सूर्य्यवर्चसस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्य्य-
वर्चसस्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दास्थ राष्ट्रदा राष्ट्रम्मे द-

त्तस्वाहामान्दास्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तऽव्रजक्षितस्त्थराष्ट्रदा-
राष्ट्रम्मेदत्तस्वाहाऽव्रजक्षितस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तऽवाशास्त्थ-
राष्ट्रदाराष्ट्रम्मेदत्तस्वाहाऽवाशास्थराष्ट्रदाराष्ट्रममुष्मैदत्तश-
विष्ठास्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशविष्ठास्थराष्ट्रदाराष्ट्र-
ममुष्मैदत्तशक्वरीस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्वरीस्त्थरा-
ष्ट्रदाराष्ट्रममुष्मैदत्तजनभृतस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाज-
नभृतस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तविश्वभृतस्त्थराष्ट्रदाराष्ट्र-
म्मेदत्तस्वाहाऽविश्वभृतस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तापः स्वरा-
जस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्त । मधुमतीर्म्मधुमतीभिः पृच्च्यन्ता-

स्मर्हिक्षत्रङ्क्षत्रियायव्वन्वानाऽअनाधृष्टाःसीदतसहौजसोमहिक्षत्र-
ङ्क्षत्रियायदधतीः ॥ ४ ॥ [ शतम् ४०० ] सोमस्यत्त्विषिर-
सितवैवमेत्त्विषिर्ब्भूयात् । अग्नयेस्वाहासोमायस्वाहासवित्रेस्वा-
हासरस्वत्त्यैस्वाहापूष्णेस्वाहाबृहस्पतयेस्वाहेन्द्रायस्वाहाघोषाय-
स्वाहाश्श्लोकायस्वाहाꣳशायस्वाहाभगायस्वाहार्य्यम्णेस्वाहा
॥ ५ ॥ पवित्रेस्त्थोव्वैष्णव्यौसवितुर्व्वः प्प्रसवऽउत्पुनाम्म्यच्छिद्द्रे-
णपवित्रेणसूर्य्यस्यरश्मिभिः । अनिभृष्टमसिव्वाचोबन्धुस्तपो-
जाः सोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्द्युम्निनी-
रापऽएताऽअनाधृष्टाऽअपस्योव्वसानाः । पस्त्यासुचक्क्रेव्वरुणः स-

धस्त्थमपाꣳशिशुम्मातृतमास्वन्तः ॥ ७ ॥ क्षत्रस्योल्ल्वमसिक्षत्र-
स्यजराय्य्वसिक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसीन्द्रस्यव्वार्त्रघ्नमसि
मित्रस्यासिव्वरुणस्यासित्वयायंव्वृत्रंव्वधेत् । दृवासिरुजासिक्षुमा-
सि । पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दिग्भ्यःपात ॥८॥
आविर्म्मर्य्याऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रोव्वृद्धश्रवाऽआ-
वित्तौमित्रावरुणौधृतव्रतावावित्तःपूषाव्विश्ववेदाऽआवित्तेद्या-
वापृथिवीव्विश्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ अवेष्टा-
दन्दशूकाःप्राचीमारोहगायत्रीत्त्वावतुरथन्तरꣳसामत्रिवृत्स्तोमोव्व-
सन्तऽऋतुर्ब्रह्मद्द्रविणन्दक्षिणामारोह ॥ १० ॥ दक्षिणामारो-

हृत्त्रिष्टुप्त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्म ऽऋतुः क्षत्रन्द्रविणम्प्रतीचीमारोह ॥ ११ ॥ प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदशस्तोमो वर्षा ऽऋतुर्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳ सामैकविꣳशस्तोमः शरदृतुः फलन्द्रविणमूर्ध्वामारोह ॥ १३ ॥ ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणम्प्रत्यस्तन्नमुचेः शिरः ॥ १४ ॥ सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात्। मृत्योः पाह्योजोसि सहोस्यमृतमसि ॥ १५ ॥ हिरण्यरूपा ऽउषसो विरोक ऽउभाविन्द्रा ऽउदिथः सूर्यश्च। आरोहतं व-

रुणमित्रगर्तन्ततंश्चक्षाथामदितिन्दितिश्चमित्रोसिव्वरुणोसि ॥ १६ ॥
सोमस्यत्त्वाद्युम्नेनाभिषिञ्चाम्म्यग्नेर्भ्राजसासूर्य्यस्यवर्च्चसेन्द्रस्ये-
न्द्रियेण । क्षत्राणाङ्क्षत्रपतिरेद्ध्यतिदिद्यून्पाहि ॥ १७॥ इमन्देवाऽअ-
सपत्नᳬसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्याये-
न्द्रस्येन्द्रियाय । इमममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैव्विशऽएषवोमीराजा-
सोमोस्म्माकम्ब्राह्मणानाᳬराजा ॥ १८ ॥ प्रपर्व्वतस्यवृषभस्यपृष्ठा-
न्नावश्चरन्तिस्वसिचऽइयानाः । ताऽआववृत्रन्नधरागुदक्ताऽअहिं-
म्बुध्न्यमनुरीयमाणाः । व्विष्ष्णोर्व्विक्क्रमणमसिव्विष्ष्णोर्व्विक्क्रान्त-
मसिव्विष्ष्णोःक्क्रान्तमसि ॥ १९ ॥ प्रजापतेनत्त्वदेतान्न्यन्न्योव्वि-

श्श्वारूपाणिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्य-
पितासावस्यपिताव्वयँस्यामपतयोरयीणाँस्वाहा । रुद्रयत्ते-
क्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसिस्वाहा ॥ २० ॥ इन्द्रस्यव्व-
ज्ज्रोसिमित्रावरुणयोस्त्वाप्प्रशास्त्रोः प्प्रशिषायुनज्ज्मि । अव्व्यथायै-
त्त्वास्वधायैत्त्वारिष्टोऽअर्ज्जुनोमरुताम्प्रसवेनजयापाममनसासमिन्द्रि-
येण ॥ २१ ॥ मातऽइन्द्रतेव्वयन्तुराषाडयुक्तासोऽअब्ब्रह्मताविद-
साम । तिष्ठारथमधियंव्वज्ज्रहस्तारश्मीन्देवयमसेस्वश्वान् ॥२२॥
अग्नयेगृहपतयेस्वाहासोमायव्वनस्पतयेस्वाहामरुतामोजसेस्वाहेन्द्र-
स्येन्द्रियायस्वाहा । पृथिविमातर्म्मामाहिँसीर्म्मोऽअहन्त्वाम् ॥२३॥

हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्दुरोणसत्। नृषद्वर-
रसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥२४॥
इयदस्यायुरस्यायुर्म्मयिधेहियुङ्ङसिव्वर्च्चोसिव्वर्च्चोमयिधेह्यूर्ग्गस्यू-
र्ज्जम्मयिधेहि। इन्द्रस्यवांव्वीर्य्यकृतोबाहूऽअभ्युपावहरामि ॥ २५ ॥
स्योनासिसुषदासिक्षत्रस्ययोनिरसि। स्योनामासीदसुषदामासीदक्ष-
त्रस्ययोनिमासीद ॥ २६ ॥ निषसादधृतव्व्रतोव्वरुणःपस्त्यास्वा। सा-
म्म्राज्ज्यायसुक्रतुः ॥ २७ ॥ अभिभूरस्येतास्तेपञ्चदिशः कल्पन्ता-
म्ब्रह्मँस्त्वम्ब्रह्मासिसवितासिसत्यप्प्रसवोव्वरुणोसिसत्यौजाऽइन्द्रो-
सिव्विशौजारुद्रोसिसुशेवः। बहुकारश्श्रेयस्करभूयस्करेन्द्रस्यव्व-

ज्ज्यौसितेनमेरद्धय ॥ २८ ॥ अग्निःपृथुर्द्धर्म्मणस्पतिर्ज्जुषाणोऽअग्निःपृ-
थुर्द्धर्म्मणस्पतिराज्ज्यस्यव्वेतुस्वाहास्वाहाकृताःसूर्य्यस्यरश्मिभि-
र्व्यतद्ध्वꣳसजातानाम्मद्ध्यमेष्ठ्याय ॥ २९ ॥ सवित्राप्प्रसवित्रा·
सरस्वत्याव्वाचात्वष्ट्रारूपैःपूष्णापशुभिरिन्द्रेणास्मेबृहस्पतिना·
ब्रह्मणाव्वरुणेनौजसाग्निनातेजसासोमेनराज्ञाव्विष्णुनादशम्यादे-
वतयाप्प्रसूतःप्प्रसर्प्पामि ॥ ३० ॥ अश्विभ्याम्पच्च्यस्वसरस्वत्यैप·
च्च्यस्वेन्द्रायसुत्राम्णेपच्च्यस्व । व्वायुःपूतःपवित्रेणप्प्रत्यङ्क्सो·
मोऽअतिस्रुतः । इन्द्रस्ययुज्ज्यःसखा ॥ ३१ ॥ कुविदङ्गयवमन्तोयवं·

श्विद्यथादान्त्यंनुपूर्व्वंव्वियूयं । इहेहैषाङ्कृणुहिभोजनानिषेबर्हिषो-
नमंऽउक्तिंयजन्ति । उपयामगृहीतोस्यश्विभ्यान्त्वासरंस्वत्यै-
त्त्वेन्द्रायत्वासुत्राम्म्णे ॥ ३२ ॥ षुवᳪसुराममश्विनानमुचावासुरे-
सचा । विपिपानाशुभस्पतीऽइन्द्रङ्कर्म्मंस्वावतम् ॥ ३३ ॥ पुत्रमि-
वपितरावश्विनोभेन्द्रावथुᳪकाव्व्यैर्दᳪसनाभिः । यत्सुरामंव्व्यपिबः
शचीभिःसरंस्वतीत्त्वामघवन्नभिष्ण्णक् ॥ ३४ ॥ इति दशमोऽध्यायः ॥

---

१—शाखायां वानरा यद्वन्निपतन्त्युत्पतन्ति च । एवं वर्णाः प्रयोक्तव्याः 'इहेहैषां' निदर्शनम् ॥ ( याज्ञ० शि० श्लो० ६१ ;

# ❀ अथ एकादशोऽध्यायः ❀

ॐ युञ्जानः॑प्रथमम्मनस्तत्त्वायसविताधियं÷। अग्नेर्ज्ज्योतिर्न्नि-
चाय्यपृथिव्व्याऽअध्याभरत् ॥ १ ॥ युक्तेनमनसाव्वयन्देवस्यसवितुः
सवे। स्वर्ग्ग्यायशक्क्त्या ॥ २ ॥ युक्त्वायसवितादेवान्त्स्वर्य्यतोधि-

---

१—'यथा पुत्रवती स्नेहाच्चुम्बते निजमौरसम्। एवं वर्णाः प्रयोक्तव्या 'युञ्जान' इति निदर्शनम्।' ( या. शि. श्लो. ६२ ) अर्थात्-यथा मातुः बालकमुखचुम्बने मुखाकृतिः वर्तुला भवति। तथा चवर्गपञ्चमस्य ञकारस्योच्चारणेऽपि वर्तुलविवृतमुखाऽऽकृत्या सुस्पष्टतया कर्तव्या इत्यर्थः।

यादिवम् । बृहज्ज्योतिः करिष्ष्यतःसविताप्प्रसुवातितान् ॥३॥ युञ्ज-
तेमनऽउतयुञ्जतेधियोव्विप्प्राव्विप्प्रस्यबृहतोव्विपश्चितः । व्विहो-

१—"ज्योतिश्च्यवनः श्येनः श्याम१ँ श्यामाकाः श्येतोज्ज्येष्ठोज्ज्योज्याच्छ्रयति" एते संयोगा एकयकारा भवन्ति । ( शु० य० प्रा० सू० १५३ अ० ४ ) इति एवं प्रचुराण्येवोदाहरणानि संहितायां द्रष्टव्यानि । यथा—दुश्च्यवनः १७।३९ ) इन्दुर्दक्षः (१८।५३) श्यामाकाश्चमे (१८।१२) श्यामंचमे (१८।१३) श्येतोमल्हविः (परशाखीयोदाहरणम्) 'यो ह वै ज्येष्ठयं च श्रैष्ठयं च' (इत्यपि शाखान्तरीयम्) 'ज्योक्तेसन्दृशिजीव्यासम्' ( ३६।१९ ) 'ज्याऽइयठं० समने' ( २९।४० ) 'कस्त्वाऽऽच्छ्रयति' ( २३।३९ ) इदमुदाहरणमिहविहितम् । एकमेव अन्यानुपलंभात् । संहितायान्तु प्रचुराणि कथितानि ।

ध्रादधेव्वयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिः ॥४॥ युजेवाम्ब्र-
ह्मपूर्व्व्यन्नमोभिर्व्विश्श्लोकऽएतुपथ्येवसूरेः । शृण्वन्तुव्विश्श्वेऽअमृ-
तस्यपुत्राऽआयेधामानिदिव्व्यानितस्थुः ॥ ५ ॥ यस्यप्रयाणमन्न्व-
न्न्यऽइद्ययुर्द्देवादेवस्यमहिमानमोजसा । यःपार्थिवानिव्विममेसऽए-
तशोरजाꣳसिदेवःसवितामहित्वना ॥ ६ ॥ देवसवितःप्रसुवयज्ञम्प्र-
सुवयज्ञपतिम्भगाय । दिव्व्योगन्धर्व्वःकेतपूःकेतन्नःपुनातुव्वाचस्प-
तिर्व्वाचन्नःस्वदतु ॥ ७ ॥ इमन्नोदेवसवितर्यज्ञम्प्रणयदेवाव्व्यꣳस-
खिविदꣳसत्राजितन्धनजितꣳस्वर्ज्जितम् । ऋचास्तोमꣳसमर्द्धय-
गायत्रेणरथन्तरम्बृहद्गायत्रवर्त्तनिस्वाहा ॥ ८ ॥ देवस्यत्वासवितुः

प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् । आददेगायत्रेणच्छन्द-
साङ्गिरस्वत्पृथिव्व्याः सधस्थादग्ग्निम्पुरीष्ष्यमङ्गिरस्वदाभरत्त्रैष्टुभेन-
च्छन्दसाङ्गिरस्वत् ॥ ९ ॥ अब्भ्रिरसिनार्य्यसित्त्वयाव्वयमग्ग्निꣳश-
केमखनितुꣳसधस्थऽआ । जागतेनच्छन्दसाङ्गिरस्वत् ॥ १० ॥ हस्तऽ-
आधायसविताबिब्भ्रदब्भ्रिꣳहिरण्ण्ययीम् । अग्ग्नेर्ज्ज्योतिर्न्निचाय्य-
पृथिव्व्याऽअद्ध्याभरदानुष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ११ ॥ प्रतूर्त्तंव्वा
जिन्नाद्द्रवव्वरिष्ठामनुसंव्वतम् । दिवितेजन्न्मपरममन्तरिक्षेतवना-
भिः पृथिव्व्यामधियोनिरित् ॥ १२ ॥ युञ्जाथाꣳरासभंय्युवम-
स्स्मिन्न्यामेव्वृषण्ण्वसू । अग्ग्निम्भरन्तमस्स्मयुम् ॥ १३ ॥ योगे-

योगेतवस्तरंव्वाजेवाजेहवामहे । सखायऽइन्द्रमूतये ॥ १४ ॥ प्रतूर्व्वन्ने-
ह्यवक्क्रामन्नशस्तीरुद्रस्यगाणपत्यम्मयोभूरेहि । उर्व्वन्तरिक्षंव्वीहि-
स्वस्तिगव्यूतिरभयानिकृण्वन्पूष्णासयुजासह ॥१५॥ पृथिव्याःस-
धस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमो-
ऽग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निरुषसामग्रम-
ख्यदन्वहानिप्रथमोजातवेदाः ॥ अनुसूर्य्यस्यपुरुत्राचरश्मीननु-
द्यावापृथिवीऽआततन्थ ॥१७॥ आगत्यव्वाज्यद्ध्वानꣳसर्व्वामृधो-
व्विधूनुते ॥ अग्निꣳसधस्थेमहतिचक्षुषानिचिकीषते ॥ १८ ॥ आ-
क्रम्यव्वाजिन्पृथिवीमग्निमिच्छरुचात्त्वम् । भूम्याव्वृत्वायनोब्रू-

ह्वियतꣳखनेमतंव्वयम् ॥ १९ ॥ द्यौस्तेपृष्ठम्पृथिवीसधस्थमात्मा-
न्तरिक्षꣳसमुद्रोयोनिः । व्विख्यायचक्षुषात्त्वमभितिष्ठपृतन्य-
तः ॥ २० ॥ उत्क्क्राममहतेसौभगायास्मादास्थानाद्द्रविणोदाव्वा-
जिन् । व्वयꣳस्यामसुमतौपृथिव्व्याऽअग्निङ्खनन्तऽउपस्थेऽअस्याः
॥ २१ ॥ उदक्क्रमीद्द्रविणोदाव्वाज्ज्यर्व्वाकꣳसुलोकꣳसुकृतम्पृथि-
व्व्याम् । ततः खनेमसुप्प्रतीकमग्निꣳस्वोरुहाणाऽअधिनाकमुत्तमम्
॥ २२ ॥ आत्त्वाजिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिव्विश्श्वा ।
पृथुन्तिरश्चाव्वयसाबृहन्तंव्व्यचिष्ठमन्नैरभसन्दृशानम् ॥ २३ ॥ आ-
व्विश्श्वतः प्प्रत्यञ्चञ्जिघर्म्म्यरक्षसामनसातज्जुषेत । मर्य्यश्श्रीस्पृह-

यद्द्वर्णोऽअग्निर्न्नाभिमृशैतन्न्वाजब्भुराणꣳ ॥ २४ ॥ परिवाजपतिः
कविरग्निर्हव्व्यान्न्यक्रमीत् । दधद्रत्नानिदाशुषे ॥ २५ ॥ परित्वा-
ग्नेपुरँव्वयंव्विप्प्रꣳसहस्यधीमहि । धृषद्वर्णन्दिवेदिवेहन्तारम्भङ्गुरा-
वताम् ॥ २६ ॥ त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मन-
स्परि । त्वंव्वनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपतेजायसेशुचिः
॥ २७ ॥ देवस्यत्त्वासवितुः प्रसवेश्श्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्या-
म् । पृथिव्व्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि । ज्योति-
ष्मन्तन्त्वाग्नेसुप्प्रतीकमजस्रेणभानुनादीद्यतम् । शिवम्प्रजाभ्यो-
हिꣳसन्तम्पृथिव्व्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः ॥ २८ ॥

अपाम्पृष्ठमसि योनिरग्ग्नेः समुद्रमभितः पिन्न्वमानम्। व्वर्द्धमानो-
महाँ२ऽआ च पुष्क्करे दिवो मात्त्रया व्वरिम्म्णा प्प्रथस्व॥२९॥ शर्म्म च स्त्थो
व्वर्म्म च स्त्थोच्छिद्द्रे बहुले ऽउभे। व्व्यचस्वती संव्वसाथाम्भृतमग्निम्पु-
रीष्ष्यम् ॥ ३० ॥ संव्वसाथाᳫँ स्वर्व्विदा समीची ऽउरसा त्त्मना। अ-
ग्ग्निमन्तर्ब्भरिष्ष्यन्ती ज्ज्योतिष्ष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्ष्योसि
व्विश्श्वभरा ऽअथर्व्वा त्त्वा प्प्रथमो निरमन्थदग्ग्ने ॥ त्त्वामग्ग्ने पुष्क्करा द-
द्ध्यथर्व्वा निरमन्थत। मूर्ध्नो व्विश्श्वस्य व्वाघतः ॥ ३२ ॥ तमु त्त्वा-
दद्ध्यङ्ङृषिः पुत्त्र ऽईधे ऽअथर्व्वणः। व्वृत्त्रहणम्पुरन्दरम् ॥ ३३ ॥
तमु त्त्वा पात्थ्यो व्वृषा समीधे दस्युहन्तमम्। धनञ्जयᳪँ रणेरणे ॥ ३४ ॥

सीदहोतꣳस्वऽउलोकेचिकित्वान्त्सादयायज्ञꣳसुकृतस्ययोनौ । देवा-
वीर्देवान्हविषायजास्यग्नेबृहद्यजमानेव्वयोधाꣳ ॥ ३५ ॥ निहोता-
होतृषदनेव्विदानस्त्वेषोदीदिवाँ२ऽअसदत्सुदक्षः । अदब्धव्व्रतप्प्र-
मतिर्व्वसिष्ठꣳसहस्रम्भरःशुचिजिह्वोऽअग्निः ॥ ३६ ॥ सꣳसीद-
स्वमहाँ२ऽअसिशोचस्वदेववीतमः । व्विधूममग्नेऽअरुषम्मियेध्यसृज-
प्प्रशस्तदर्शतम् ॥३७॥ अपोदेवीरुपसृजमधुमतोरयक्ष्मायप्प्रजाब्भ्यः ।
तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः ॥ ३८ ॥ सन्तैव्वायु-
र्म्मातरिश्श्वादधातूत्तानायाहृदयंय्यद्विकस्तम् । योदेवानाञ्चरसि-
प्प्राणथैनकस्मैदेवव्वषडस्तुतुब्भ्यम् ॥ ३९ ॥ सुजातोज्ज्योतिषासह-

शर्म्मँव्वरूथमासदत्स्व ÷ । व्वासोऽअग्ने व्विश्वरूपꣳ संव्ययस्व व्वि-
भावसो ॥ ४० ॥ उदु तिष्ठ स्वद्ध्वरावा नो देव्व्या धिया । दृशे च भासा
बृहता सुशुक्क्वनिराग्ने याहि सुशस्तिभि ÷ ॥ ४१ ॥ ऊर्द्ध्वऽऊ षु णऽऊ-
तये तिष्ठा देवो न सविता । ऊर्द्ध्वो व्वाजस्य सनिता यदञ्जिभिर्व्वाघद्भि-
र्व्विह्वयामहे ॥ ४२ ॥ स जातो गर्ब्भोऽअसि रोदस्योरग्ने चारुर्व्विभृत-
ऽओषधीषु । चित्र÷ शिशु÷ परि तमाꣳस्यक्तून्प्र मातृब्भ्योऽअधि कनि-
क्रदद्गा÷ ॥ ४३ ॥ स्थिरो भव व्वीड्वङ्गऽआशुर्भव व्वाज्ज्यर्व्वन् । पृ-
थुर्ब्भव सुषदस्त्वमग्नेः पुरीषवाहण÷ ॥ ४४ ॥ शिवो भव प्प्रजाब्भ्यो मा-
नुषीब्भ्यस्त्वमङ्गिर÷ । मा द्यावापृथिवीऽअभि शोचीर्म्मान्तरिक्षम्मा-

व्वनस्प्पतीन् ॥ ४५ ॥ प्रैतुंव्वाजीकनिक्रदन्नानदद्रासभःपत्वा ।
भरन्नग्निम्पुरीष्यम्मापाद्यायुषःपुरा । व्वृषाग्निव्वृषणम्भरन्नपाङ्ग-
र्भꣳसमुद्रियम् । अग्नऽआयाहिव्वीतये ॥ ४६ ॥ ऋतꣳसत्यमृतꣳस-
त्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः । ओषधयःप्रतिमोदध्वमग्निमे-
तꣳशिवमायन्तमभ्यत्रयुष्माः । व्यस्यन्विश्वाऽअनिराऽअमीवा-
निषीदन्नोऽअपदुर्म्मतिञ्जहि ॥ ४७ ॥ ओषधयःप्रतिगृभ्णीतपुष्पव-
तीःसुपिप्पलाः । अयंव्वोगर्भऽऋत्वियःप्रत्नꣳसधस्थमासदत्
॥ ४८ ॥ व्विपाजसापृथुनाशोशुचानोबाधस्वद्द्विषोरक्षसोऽअमीवाः ।
सुशर्म्मणोबृहतःशर्म्मणिस्यामग्नेरहꣳसुहवस्यप्रणीतौ ॥ ४९ ॥ आपो-

हिष्ठामयोभुवस्तानऽऊर्जन्दधातन । महेरणायचक्षसे ॥ ५० ॥ योवः
शिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥ ५१ ॥
तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ । आपोजनयथाचनः ॥ ५२ ॥
मित्रः सꣳसृज्यपृथिवीम्भूमिञ्चज्ज्योतिषासह । सुजातञ्जातवेद-
समयक्ष्मायत्वासꣳसृजामिप्रजाभ्यः ॥ ५३ ॥ रुद्राः सꣳसृज्य
पृथिवीम्बृहज्ज्योतिः समीधिरे । तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषु
रोचते ॥ ५४ ॥ सꣳसृष्टांव्वसुभीरुद्रैर्धीरैःकर्म्मण्याम्मृदम् । हस्ता-
भ्याम्मृद्वीङ्कृत्वासिनीवालीकृणोतुताम् ॥ ५५ ॥ सिनीवालीसुकप-
र्दासुकुरीरास्वौपशा । सातुभ्यमदितेमह्योखान्दधातुहस्तयोः ॥ ५६ ॥

उषाङ्कृणोतुशक्त्त्याबाहुब्भ्यामदितिर्द्धिया । मातापुत्रंय्यथोपस्त्थे
साग्निम्बिभर्त्तुगर्ब्भऽआ । मखस्यशिरोसि ॥ ५७ ॥ व्वसवस्त्वाकृ-
ण्ण्वन्तुगायत्त्रेणच्छन्दसाङ्गिरस्वद्ध्रुवासिपृथिव्व्यसिधारयामयिप्प्र-
जाꣳरायस्प्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्न्यजमानायरुद्द्रास्त्वाकृ-
ण्ण्वन्तुत्त्रैष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्प्र-
जाꣳरायस्प्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्न्यजमानायादित्यास्त्वा-
कृण्ण्वन्तुजागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्प्र-
जाꣳरायस्प्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्न्यजमानायव्विश्श्वेत्त्वा-
देवाव्वैश्श्वानराऽआकृण्ण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशो·

सिध्यास्यामर्थिम्प्रजाꣳरायस्पोषङ्गौपत्यꣳसुवीर्य्यꣳसजातान्न्यजमा-
नाय ॥ ५८ ॥ अदित्यैरास्नास्यदितिष्टेबिलङ्गृभ्णातु । कृत्वायसाम-
हीमुखाम्मृन्मयीँयोनिमग्नये । पुत्रेभ्यःप्रायच्छददितिःश्रपयानिति
॥ ५९ ॥ वसवस्त्वाधूपयन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वाधू-
पयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाधूपयन्तुजागतेनच्छन्द -
साङ्गिरस्वद्विश्वेत्वादेवावैश्वानराधूपयन्त्वानुष्टुभेनच्छन्दसाङ्गि-
रस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतुविष्णुस्त्वाधूपयतु ॥ ६० ॥
अदितिष्ट्वादेवीविश्वदेव्यावतीपृथिव्याःसधस्थेऽअङ्गिरस्वत्खन-
त्ववटदेवानान्त्वापत्नीर्देवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽ-

अङ्गिरस्वद्दधतूखेधिषणास्त्वादेवीर्व्विश्वदेव्यावतींपृथिव्याऽसध-
स्थेऽअङ्गिरस्वदभीन्धतामुखेव्वरूत्रीष्ट्वादेवीर्व्विश्वदेव्यावतींपृथि-
व्याऽसधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखेग्नास्त्वादेवीर्व्विश्वदेव्यावतीं
पृथिव्याऽसधस्थेऽअङ्गिरस्वत्पचन्तूखेजनयस्त्वाच्छिन्नपत्त्रादेवीर्व्वि-
श्वदेव्यावतींपृथिव्याऽसधस्थेऽअङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥ मि-
त्रस्यचर्षणीधृतोवोदेवस्यसानसि । द्युम्नञ्चित्रश्रवस्तमम् ॥६२॥
देवस्त्वासवितोद्वपतुसुपाणिऽस्वङ्गुरिऽसुबाहुरुतशक्त्या । अव्यथ-
मानापृथिव्यामाशादिशऽआपृण ॥ ६३ ॥ उत्थायबृहतीभवोदुत्ति-
ष्ठध्रुवात्त्वम् । मित्रैतान्तऽउखाम्परिददाम्यभित्त्याऽएषामाभेदि

॥ ६४ ॥ व्वसवस्त्वाच्छृन्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वा-
च्छृन्दन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तुजागतेनच्छ-
न्दसाङ्गिरस्वद्विश्श्वेत्वादेवाव्वैश्श्वानराऽआच्छृन्दन्त्वानुष्टुभेनच्छ-
न्दसाङ्गिरस्वत् ॥६५॥ आकूतिमग्निम्प्रयुजꣳस्वाहामनोमेधामग्निम्प्र-
युजꣳस्वाहाचित्तंविज्ञातमग्निम्प्रयुजꣳस्वाहाव्वाचोव्विधृतिमग्नि-
म्प्रयुजꣳस्वाहाप्प्रजापतयेमनवेस्वाहाग्नयेव्वैश्श्वानरायस्वाहा ॥६६॥
व्विश्श्वोदेवस्यनेतुर्म्मर्तोव्वुरीतसख्यम्। व्विश्श्वोरायऽइषुद्ध्यतिद्द्यु-
म्नंव्वृणीतपुष्ष्यसेस्वाहा ॥६७॥ मासुभित्थामासुरिषोम्बधृष्ष्णुव्वीर-
यस्वसु। अग्निश्चेदङ्करिष्ष्यथ ॥६८॥ दृꣳहस्वदेविपृथिविस्वस्तयऽ-

आसुरीमायास्वधयाकृतासि। जुष्टन्देवेभ्यऽइदमस्तुहव्यमरिष्टात्व-
मुदिहियज्ञेऽअस्मिन् ॥ ६९ ॥ दृन्नःसर्प्पिरासुतिःप्रत्नोहोतावरे-
ण्यः। सहसस्पुत्रोऽअद्भुतः ॥७०॥ [शतम् १००] परस्याऽअधिसंव-
तोवराँ२ऽअभ्यातर। यत्राहमस्मितां२ऽअव ॥ ७१ ॥ परमस्याःपरा-
वतोरोहिदश्वऽइहागहि। पुरीष्यः पुरुप्रियोग्नेत्वन्तरामृधः
॥ ७२ ॥ यदग्नेकानिकानिचिदातेदारूणिदध्मसि। सर्व्वन्तदस्तु-
तेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥ यदत्त्युपजिह्विकायद्वम्रोऽअति-
सर्प्पति। सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७४ ॥ अहरहर-
प्रयावम्भरन्तोश्वायेवतिष्ठतेघासमस्मै। रायस्पोषेणसमिषाम-

दन्तोऽग्ग्नेमातेप्प्रतिवेशारिषाम ॥ ७५ ॥ नाभापृथिव्व्याᳪसमिधानेऽअ-
ग्ग्नौरायस्प्पोषायबृहतेहवामहे । इरम्मदम्बृहदुक्क्थंयजत्रञ्जेता-
रमग्ग्निम्पृतनासुसासहिम् ॥ ७६ ॥ याᳪसेनाऽअभीत्त्वरीराव्व्याधि-
नीरुगणाऽउत । येस्तेनायेचतस्कराস्ताँस्तेऽअग्ग्नेपिदधाम्म्यास्ये
॥ ७७ ॥ दᳪष्ट्राब्भ्यामलिम्म्लूञ्जम्भ्यैस्तस्कराँ२ऽउत । हनुब्भ्याᳪ-
स्तेनान्भगवस्ताँस्त्वङ्खादसुखादितान् ॥ ७८ ॥ येजनेषुमलिम्म्लव-
स्तेनासस्तस्कराव्वने । येकक्षेष्वघायवस्ताँस्तेदधामिजम्भयोः ॥ ७९ ॥
योऽअस्म्मब्भ्यमरातीयाद्यश्चनोद्द्वेषतेजनः । निन्दाद्योऽअस्म्मा-
न्धिप्प्साच्चसर्वंन्तम्मस्मसाकुरु ॥ ८० ॥ सᳪशितम्मेब्रह्मसᳪशि-

तंव्वीर्य्यम्बलम्। सᳬशितङ्क्षत्रञ्जिष्णुयस्याहमस्म्मिपुरोहितः॥८१॥
उदेषाम्बाहू ऽअतिरमुदूर्च्चो ऽअथोबलम्। क्षिणोम्मिब्ब्रह्मणामित्रानु-
न्नयामिस्वाँ२ऽअहम्॥८२॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्म्मि-
णः। प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे॥८३॥
इति संहितायां एकादशोऽध्यायः॥

## ❀ अथ द्वादशोऽध्यायः ❀

ॐ दृशानोरुक्मऽउर्व्याव्यद्यौदुर्म्मर्षमायुः श्रियेरुचानः।
अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः॥ १ ॥

नक्तोषासासमनसाव्विरूपेधापयेतेशिशुमेकꣳसमीची । द्यावा-
क्षामारुक्मोऽअन्तर्व्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः ॥ २ ॥
व्विश्वारूपाणिप्प्रतिमुञ्चतेकविःप्प्रासावीद्भद्द्रंद्विपदेचतुष्प्पदे ॥
व्विनाकमख्ख्यत्सविताव्वरेण्योनुप्प्रयाणमुषसोव्विराजति ॥ ३ ॥
सुपर्णोसिगरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ । स्तोम-
ऽआत्माच्छन्दाꣳस्यङ्गानियजूꣳषिनाम । सामतेतनूर्व्वामदेव्व्यंय-
ज्ञायज्ञियम्पुच्छन्धिष्ण्ण्याᳵशफाः । सुपर्णोसिगरुत्मान्दिवङ्गच्छस्वः
पत ॥ ४ ॥ विष्ण्णोᳵक्क्रमोसिसपत्त्नहागायत्त्रञ्छन्दऽआरोहपृ-
थिवीमनुविक्क्रमस्वविष्ण्णोᳵक्क्रमोस्यभिमातिहात्त्रैष्टुभञ्छन्दऽआ-

रोहान्तरिक्षमनुविक्क्रमस्वविष्णोः क्क्रमोस्यरातीयतोहन्ताजागत-
च्छन्दऽआरोहदिवमनुविक्क्रमस्वविष्णोः क्क्रमोसिशत्रूयतोहन्ता-
नुष्टुभञ्छन्दऽआरोहदिशोनुविक्क्रमस्व ॥ ५ ॥ अक्क्रन्ददग्नि-
स्तनयन्निवद्यौः क्षामारेरिहद्वीरुधः समञ्जन्। सद्योजज्ञानोवि-
हीमिद्धोऽअक्ख्यदारोदसीभानुनाभात्यन्तः ॥ ६ ॥ अग्नेभ्यावर्त्तिन्न-
भिमानिवर्तस्वायुषावर्चसाप्रजयाधनेन । सन्न्यामेधयारय्यापोषे-
ण ॥ ७ ॥ अग्नेऽअङ्गिरः शतन्तेसन्त्वावृतः सहस्रन्तऽउपावृतः ।
अधापोषस्यपोषेणपुनर्न्नोनष्टमाकृधिपुनर्न्नोरयिमाकृधि ॥ ८ ॥ पुन-
रूर्ज्जानिवर्त्तस्वपुनरग्नऽइषायुषा । पुनर्न्नः पाह्यहंसः ॥ ९ ॥ सहर-

य्या निवर्त्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि-
॥ १० ॥ आत्वाहार्षमन्तरभूर्द्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा-
सर्व्वा व्वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥ ११ ॥ उदुत्तमं व्वरुणपा-
शमस्मदवाधमं व्विमध्यमꣳ श्रथाय । अथा व्वयमादित्यव्रते त-
वानागसोऽअदितये स्याम ॥ १२ ॥ अग्ग्रे बृहन्नुषसामूर्द्ध्वोऽअ-
स्थान्निर्ज्जगन्वान्तमसो ज्ज्योतिषागात् । अग्निर्ब्भानुना रुश-
ता स्वङ्गऽआजातो व्विश्वा सद्मान्यप्प्राः ॥ १३ ॥ हꣳसः शुचिषद्वसुर-
न्तरिक्षसद्धोता व्वेदिषदतिथिर्द्दुरोणसत् । नृषद्वरसदृतसद्व्योमस-
दब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥ १४ ॥ सीद त्वम्मातुर-

स्याऽउपस्थेव्विश्श्वान्न्यग्ग्नेव्वयुनानिव्विद्द्वान् । मैनान्तपसामार्च्चि-
षाभिशोचीरन्तरस्याᳬंशुक्रज्ज्योतिर्व्विभाहि ॥ १५ ॥ अन्तरग्ग्नेरु-
चात्त्वमुखायाᳬंसदने स्वे । तस्यास्त्वᳬंहरसातपञ्जातवेदःशिवोभव
॥ १६ ॥ शिवोभूत्त्वामह्यमग्ग्नेअथोसीदशिवस्त्वम् । शिवाःकृत्त्वादिशः
सर्व्वाःस्वंय्योनिमिहासदः ॥ १७ ॥ दिवस्प्परिप्प्रथमञ्जज्ञेऽअग्निर-
स्मद्द्वितीयम्परिजातवेदाः । तृतीयमप्प्सुनृमणाऽअजस्रमिन्धानऽ-
एनञ्जरतेस्वाधीः ॥ १८ ॥ विद्माते ऽअग्ग्नेऽत्रेधात्त्रयाणिव्विद्मातेधाम-

१—इत्यत्र 'विद्माऽत्रेत्रामण्याम्' (३।१२६) सौत्रामणीमन्त्रमुक्त्वा विद्म इत्ययं ह्रस्वो दीर्घमाप्यते ।

व्विभृता पुरुत्रा । व्विद्मा ते नाम परमङ्गुहा यद्विद्मा तमुत्सँयतऽआ-
जगन्थ ॥ १९ ॥ समुद्रे त्त्वा नृमणाऽअप्स्वन्तर्नृचक्षाऽईधे दिवोऽअ-
ग्नऽऊधन् । तृतीये त्त्वा रजसि तस्थिवाꣳसमपामुपस्थे महिषाऽअव-
र्द्धन् ॥ २० ॥ अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः
समञ्जन् । सद्यो जज्ञानो व्वि हीमिद्धोऽअख्यदा रोदसी भानुना भा-
त्यन्तः ॥ २१ ॥ श्रीणामुदारो धरुणो रयीणाम्मनीषाणाम्प्रार्पणः सोम-
गोपाः । व्वसुः सूनुः सहसोऽअप्सु राजा व्विभात्यग्रऽउषसामिधा-
नः ॥ २२ ॥ व्विश्वस्य केतुर्भुवनस्य गर्भऽआ रोदसीऽअपृणाज्जाय-
मानः । व्वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥२३॥

उशिक्क्पावकोऽअरतिःसुमेधामर्त्त्येष्वग्निरमृतोनिधायि । इयर्त्तिधूम-
मरुषम्भरिभ्रदुच्छुक्क्रेणशोचिषाद्यामिनक्षन् ॥ २४ ॥ दृशानोरु-
क्क्मऽउर्व्याव्व्यद्यौद्दुर्म्मर्षमायुः श्रियेरुचानः । अग्निरमृतोऽअ-
भवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्तेऽअद्यकृणवद्-
भद्रशोचेऽपूपन्देवघृतवन्तमग्ने । प्रतन्नयप्प्रतरंव्वस्योऽअच्छाभि-
सुम्नन्देवभक्तंय्यविष्ठ ॥२६॥ आतम्भजसौश्रवसेष्वग्नऽउक्क्थऽ-
उक्क्थऽआभजशस्यमाने । प्रियःसूर्य्येप्प्रियोऽअग्नाभवात्युज्जाते-
नभिनदुज्जनित्वैः ॥ २७ ॥ त्वामग्नेयजमानाऽअनुद्यून्विश्श्वाव्व-
सुदधिरेव्वार्य्याणि । त्वयासहद्द्रविणमिच्छमानाव्व्रजङ्गोमन्तमुशि-

जोव्विवंव्वसुं ॥ २८ ॥ अस्ताव्यग्निन्नरां ᳪ सुशेवो व्वैश्वानरऽऋषि-
भिंᳬ सोमंगोपाः । अद्वेषेद्यावापृथिवीहुवेमदेवाधत्तरयिमस्मेसुवी-
रम् ॥ २९ ॥ समिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम् । आस्मिन्हव्या-
क्याजुंहोतन ॥ ३० ॥ उदुंत्वाव्विश्वेंदेवाऽअग्नेभरन्तुचित्तिभिः ।
सनोंभवशिवस्त्वᳪसुप्रतीकोव्विभावसुः ॥ ३१ ॥ प्रेदंग्नेज्ज्योतिं-
ष्मान्याहिशिवेभिंरर्चिभिष्ट्वम् । बृहद्भिर्भानुभिर्भासन्मा हिᳪ-
सीस्तन्वाप्रजाः ॥ ३२ ॥ अक्रंन्ददग्निस्तनयन्निवद्यौः क्षामारे-
रिहद्वीरुधः समञ्जन् । सद्योजज्ञानोव्विहीमिद्धोऽअख्यदारोदसी-
भानुनाभात्यन्तः ॥ ३३ ॥ प्रप्रायमग्निर्भरतस्यंशृण्वेव्वियत्सूर्योन-

रोचतेबृहद्भाः। अभियःपूरुम्पृतनासुतस्थौदीदायदैव्योऽअतिथिꣳ
शिवोनः ॥३४॥ आपोदेवीःप्रतिगृभ्णीतभस्मैतत्स्योनेकृणुध्वꣳ
सुरभाऽउलोके। तस्मैनमन्ताञ्जनयꣳसुपत्नीर्म्मातेवपुत्रम्बिभृताप्स्वे-
नत् ॥३५॥ अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे। गर्भेसञ्जायसेपु-
नः ॥३६॥ गर्भोऽअस्योषधीनाङ्गर्भोवनस्पतीनाम्। गर्भोविश्वस्य-
स्यभूतस्याग्नेगर्भोऽअपामसि ॥३७॥ प्रसद्यभस्मनायोनिमपश्चपृ-

---

१—इत्यत्र 'सधिरꣳशुरदितिः' (३।७६) इत्यनेन सधिः, अꣳशुः, अदितिः एतेषां विसर्जनीयः सकारः षकारमापद्यते संहितायाम्। एवम्—अꣳशुष्टे (५।७) अदितिष्ट्वा (११।६१) इत्यादिषु ज्ञेयम्।

थिवीमग्ग्ने। सᳩसृज्ज्यमातृभिष्ट्वञ्ज्योतिष्म्मान्पुनरासदᳬ॥३८॥ पुन-
रासद्ध्यसदनमपश्श्चपृथिवीमग्ग्ने। शेषेमातुर्य्यथोपस्त्थेन्तरस्याᳫंशि-
वतमᳬ॥३९॥ पुनरूर्ज्जानिवर्त्तस्वपुनरग्ग्नऽइषायुषा। पुनर्न्नᳬपाह्यᳩ-
हसᳬ॥४०॥ सहरय्यानिवर्त्तस्वाग्ग्नेपिन्न्वस्वधारया। व्विश्श्वप्स्न्या-
व्विश्श्वतस्प्परि॥४१॥ बोधामेऽअस्यव्वचसोयविष्ठमᳩहिष्ठस्यप्प्रभृ-
तस्यस्वधावᳬ। पीयतित्त्वोऽअनुत्त्वोगृणातिव्वन्दारुष्टेतन्न्वंव्वन्देऽअ-
ग्ग्ने॥४२॥ सबोधिसूरिर्म्मघवाव्वसुपतेव्वसुदावन्। युयोद्ध्यस्म्मद्द्वे-
षाᳫंसिव्विश्श्वकर्म्मणेस्वाहा॥४३॥ पुनस्त्त्वादित्यारुद्द्राव्वसवᳬसमि-
न्धताम्पुनर्ब्ब्रह्म्माणोव्वसुनीथयज्ञैः। घृतेनत्त्वन्तन्न्वंव्वर्द्धयस्वसत्त्याः

सन्तुयजमानस्यकामाः ॥४४॥ अपेतव्वीतव्विचसर्पतातोयेत्रस्स्थपुराणायेचनूतनाः। अदाद्यमोवसानम्पृथिव्याऽअक्रन्निमम्पितरोलोकमस्म्मै ॥४५॥ सञ्ज्ञानमसिकामधरणम्मयितेकामधरणम्भूयात्। अग्नेर्भस्म्मास्यग्ग्नेः पुरीषमसिचितस्त्थपरिचितऽऊर्द्ध्वचितः श्रयद्ध्वम्

---

१—इत्यादावपि तथाविधमुखाकृत्या उच्चारणेन वैदिकानां सञ्ज्ञानेति श्रुतिर्भवति। तथा च जिह्वाग्रेण आधोदन्तमूलं स्पृष्ट्वा जिह्वामध्येन च तालुं स्पृष्ट्वा अकारे उच्चारिते मुखस्य वर्तुलविवर्तनं भवति। अत एव तत्र नकारञकाराभ्यां मिलितेव श्रुतिः श्रूयते इति भावः। एतेन य (ज्ञ) ज्ञ शब्दे यग्येति यद्गेति वोच्चारणं निरस्तम्। केचन (यज्यँ) इत्युच्चारयन्ति तेऽपि परास्ताः।

॥४६॥ अयᳬ सोऽअग्निर्य्यस्मिन्त्सोममिन्द्रः सुतन्दधे जठरे व्वावशानः।
सहस्रियं व्वाजमत्यन्न सप्तिᳬ ससवान्त्सन्स्तूयसे जातवेदः ॥ ४७ ॥
अग्ने यत्ते दिवि व्वर्च्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र । येनान्तरि-
क्षमुर्व्वाततन्थ त्वेषः स भानुरर्ण्णवो नृचक्षाः ॥ ४८ ॥ अग्ने दिवोऽअर्ण्ण-
मच्छा जिगास्यच्छा देवाँ२॥ऽऊचिषे धिष्ण्या ये । या रोचने परस्तात्सू-
र्य्यस्य याश्चावस्तादुपतिष्ठन्तऽआपः ॥४९॥ पुरीष्यासोऽअग्नयः
प्रावणेभिः सजोषसः जुषन्तां यज्ञमद्रुहोऽनमीवाऽइषो महीः ॥ ५० ॥
इडामग्ने पुरुदᳬसᳬ सनिङ्गोः शश्वत्तमᳬ हवमानाय साध । स्यान्नः सूनु-
स्तनयो व्विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ५१ ॥ अयन्ते योनिर्ऋत्वि-

योषतोजातोऽअरोचथाः । तआनन्नग्नऽआरोहाथानोव्वर्द्धयारयिम्
॥ ५२ ॥ चिदसितयादेवतयाङ्गिरस्वद्ध्रुवासीदपरिचिदसितयादेवत-
याङ्गिरस्वद्ध्रुवासीद ॥ ५३ ॥ लोकम्पृणच्छिद्रम्पृणाथोसीदद्ध्रुवात्त्व-
म् । इन्द्राग्नीत्वाबृहस्पतिरस्मिन्न्योनावसीषदन् ॥ ५४ ॥ ताऽअ-
स्यसूददोहसः सोमंश्रीणन्तिपृश्नयः । जन्मन्देवानांविशस्त्रिष्वा-
रोचनेदिवः ॥ ५५ ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्द्रव्यचसङ्गिरः ।
रथीतमः रथीनांव्वाजानांसत्पतिम्पतिम् ॥ ५६ ॥ समितः सङ्कल्पे-
थांसम्प्रियौरोचिष्णूसुमनस्यमानौ । इषमूर्ज्जमभिसंव्वसानौ ॥५७॥
संव्वाम्मनांसिसंव्व्रतासमुचित्तान्याकरम् । अग्नेपुरीष्याधिपा-

भवत्त्वन्नऽइषमूर्जंयजमानायधेहि ॥ ५८ ॥ अग्नेस्त्रम्पुरीष्ष्योरयिमा-
न्पुष्टिमाँ२ऽअसि । शिवाः कृत्त्वादिशः सर्व्वाः स्वंयोनिमिहासदः
॥ ५९ ॥ भवतन्नः समनसौसचैतसावरेपसौ । माषज्ञ हि सिष्टम्मा-
यज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ६० ॥ मातेवपुत्रम्पृथि-
वीपुरीष्यमग्निᳯस्वेयोनावभारुखा । तांव्विश्वैर्देवैर्ऋतुभिः संव्विदा-
नः प्रजापतिर्व्विश्वकर्म्माव्विमुञ्चतु ॥ ६१ ॥ असुन्न्वन्तमयजमान-
मिच्छस्तेनस्येत्यामन्न्विहितस्करस्य । अन्न्यमस्मदिच्छसातऽइत्त्या-
नमोदेविनिर्ऋतेतुब्भ्यमस्तु ॥ ६२ ॥ नमः सुतेनिर्ऋतेतिग्मतेजोयस्म-
यंव्विचृतावन्धमेतम् । यमेनत्त्वंयमस्यासंव्विदानोत्तमेनाकेऽअधिरो-

हयैनम् ॥ ६३ ॥ यस्यास्ते घोरऽआसञ्जुहोम्येषाम्बन्धानामवसर्ज्जनाय । यान्त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिन्त्वाहम्परिवेद विश्वतः ॥ ६४ ॥ यन्ते देवी निर्ऋतिराबबन्ध पाशङ्ग्रीवास्वविचृत्यम् । तन्ते विष्याम्यायुषो न मद्ध्यादथैतम्पितुमद्धि प्रसूतः । नमो भूत्यै येदञ्चकार ॥ ६५ ॥ निवेशनः सङ्गमनो वसूनां विश्वा रूपाभि चष्टे शचीभिः । देवऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनाम् ॥ ६६ ॥ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया ॥ ६७ ॥ युनक्त सीरा वियुगा तनुध्वङ्कृते योनौ वपतेह बीजम् ॥ गिरा च श्रुष्टिः सभराऽअसन्नो नेदीयऽइत्सृण्यः पक्वमे-

यात् ॥ ६८ ॥ शुनꣳसुफालाव्विकृषन्तुभूमिꣳशुनङ्कीनाशाऽअभियं-
न्तुव्वाहैः । शुनासीराहविषातोशमानासुपिप्पलाऽओषधीः कर्त्तना-
स्म्मे ॥६९॥ घृतेनसीतामधुनासमज्ज्यतांव्विश्वैर्द्देवैरनुमतामरुद्भिः।
ऊर्ज्जस्वतीपयसापिन्न्वमानास्म्मान्त्सीतेपयसाभ्याववृत्स्व ॥ ७० ॥
लाङ्गलम्पवीरवत्सुशेवꣳसोमपित्सरु ॥ तदुद्वपतिगामविम्प्रफर्व्यं-
ञ्चपीवरीम्प्रस्त्थावद्रथवाहणम् ॥ ७१ ॥ कामङ्कामदुघेधुक्ष्वमित्रा-
यव्वरुणायच । इन्द्रायाश्विभ्यांपूष्णेप्रजाभ्यऽओषधीभ्यः ॥७२॥
व्विमुच्यध्वमघ्न्यादेवयानाऽअगन्मतमसस्पारमस्य । ज्ज्योतिरा-
पाम ॥ ७३ ॥ सजूरब्दोऽअयवोभिःसजूरुषाऽअरुणीभिः । सजोष-

सावशिश्वनादꣳसौभिꣳसजूꣳसूरऽएतशेनसजूर्वैश्वानरऽइडयाघृतेन-
स्वाहा ॥ ७४ ॥ याऽओषधीꣳपूर्व्वाजातादेवेब्भ्यस्त्रियुगम्पुरा । मनैनु-
बब्भ्रूणामहꣳशतन्धामानिसप्तच्च ॥ ७५ ॥ शतंव्वोऽअम्बधामानिस-
हस्रमुतवोरुहः । अधाशतक्रत्वोयूयमिमम्मेऽअगदङ्कृत ॥ ७६ ॥
ओषधीꣳप्रतिमोदद्ध्वम्पुष्प्पवतीꣳप्रसूवरीꣳ । अश्वाऽइवसजित्वरी-
र्व्वीरुधः पारयिष्ण्वः ॥ ७७ ॥ ओषधीरितिमातरस्तद्वोदेवीरुप-
ब्रुवे । सनेयमश्वङ्गांव्वासऽआत्मानन्तवपूरुष ॥ ७८ ॥ अश्वत्थे

१ —'अश्वात्स्थे तकारठ०सञ्ज्ञायाम्'।४।९९।अश्वशब्दादुत्तरःसकारःतकारमापद्यते संज्ञायां स्थे प्रत्यये इति । अश्वः—अशनव्यापारोऽग्निरस्मिंस्तिष्ठतीत्यश्वत्थो वृक्षः ।

वोनिषदनम्पर्णेवोवसतिष्कृता । गोभाजऽइत्किलासथषत्सनवथपूरु-
षम् ॥ ७९ ॥ षत्रौषधीःसमग्मतराजानःसमिताविव । विप्रःसऽ-
उच्यतेभिषग्रक्षोहामीवचातनः ॥ ८० ॥ अश्वावतीᳬंसोमावतीमू-
र्ज्जयन्तीमुदोजसम् । आवित्सिसर्वाऽओषधीरस्माऽअरिष्टतातये
॥८१॥ उच्छुष्माऽओषधीनाङ्गावोगोष्ठादिवेरते । धनᳬंसनिष्यन्तीना-
मात्मानन्तवपूरुष ॥८२॥ इष्कृतिर्नामवोमाताथोषूयᳬंस्थनिष्कृतीः ।
सीराःपतत्रिणीस्थनषदामयतिनिष्कृथ ॥८३॥ अतिविश्वाः परिष्ठा-
स्तेनऽइवव्रजमक्रमुः । ओषधीःप्राचुच्यवुर्षत्किञ्चतन्वोरपः ॥८४॥
षदिमावाजयन्नहमोषधीर्हस्तऽआदधे । आत्माषक्ष्मस्यनश्यतिपुरा-

जीवगृभोषथा ॥८५॥ यस्यौषधीः प्रसर्प्पथाङ्गमङ्गम्परुंष्परुः । ततो य-
क्ष्मंविबाधद्ध्वऽउग्ग्रोमद्ध्यमशीरिंव ॥ ८६ ॥ साकंयक्ष्मप्रपंतचाषे-
णकिकिदीविना। साकंव्वातंस्यद्ध्राज्ज्यासाकन्नंश्यनिहाकंया ॥८७॥
अन्न्यावोऽअन्न्यामंवत्त्वन्न्यान्न्यस्याऽउपावत । ताःसर्व्वाःसंव्वि-
दानाऽइदम्मेप्रावंताव्वचंः ॥ ८८ ॥ याःफलिनीर्याऽअंफलाऽअ-
पुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वᳬहंसः
॥ ८९ ॥ मुञ्चन्तुमाशपत्थ्यादथौव्वरुण्यादुत । अथोयमस्यपड्वीशात्स-
र्व्वस्माद्देवकिल्बिषात् ॥ ९० ॥ अवपतंन्तीरवदन्दिवऽओषधयस्प-
रि । यञ्जीवमश्नवामहैनसरिष्यातिपूरुषः ॥ ९१ ॥ याऽओषधीः सो-

मराज्ञीर्बह्वीः शतविचक्षणाः। तासामसित्त्वमुत्तमारङ्कामायशꣳहृदे
॥ ९२ ॥ याऽओषधीः सोमराज्ञीर्व्विष्ठिताः पृथिवीमनु । बृहस्पति-
प्प्रसूताऽअस्यै सन्दत्तव्वीर्य्यम् ॥ ९३ ॥ याश्चेदमुपशृण्वन्तियाश्च-
दूरम्परागताः । सर्व्वाः सङ्गत्यव्वीरुधोस्यै सन्दत्तव्वीर्य्यम् ॥ ९४ ॥
मावोरिषत्खनितायस्मैचाहङ्खनामिवः ॥ द्विपाच्चतुष्पादस्माकꣳ
सर्व्वमस्त्वनातुरम् ॥ ९५ ॥ ओषधयः समवदन्तसोमेनसहराज्ञा ।
यस्मैकृणोतिब्ब्राह्मणस्तꣳराजन्पारयामसि ॥ ९६ ॥ नाशयित्रीब-
लासस्यार्शसऽउपचितामसि । अथोशतस्ययक्ष्माणाम्पाकारोरसिना-
शनी ॥ ९७ ॥ त्वाङ्गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः । त्वां-

मोषधेसोमोराजाव्विद्द्वान्न्यक्ष्मादमुच्च्यत ॥९८॥ सहस्वमेऽअरा-
तीः सहस्वपृतनायतः । सहस्वसर्व्वम्पाप्मानꣳ सहमानास्योषधे
॥९९॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्वाखनाम्म्यहम् । अथो-
त्वन्दीर्घायुर्ब्भूत्त्वाशतवल्शाव्विरोहतात् ॥ १०० ॥ त्वमुत्तमा-
स्योषधेतववृक्षाऽउपस्तयः । उपस्तिरस्तुसोस्म्माकंय्योऽअस्म्माँ२ऽ-
अभिदासति ॥ १०१ ॥ मामाहिꣳसीज्जनितायः पृथिव्व्यायोवादिवꣳ
सत्यधर्म्माव्व्यानट् । यश्चापश्चन्द्राः प्प्रथमोजजानकस्मैदेवायहवि-
षाव्विधेम ॥ १०२ ॥ अब्भ्यावर्त्तस्वपृथिवियज्ञेनपयसासह । व्वपा-
न्तेऽअग्निरिषितोऽअरोहत् ॥ १०३ ॥ अग्नेयत्तेशुक्क्रंयच्चन्द्रंयत्-

त्पूतंठश्चर्च्चषङ्गियंम् । तद्देवेब्भ्योंभरामसि ॥ १०४ ॥ इषमूर्ज्जमहमित-
ऽआदंमृतस्यषोनिम्महिषस्यधाराम् । आमागोषुंव्विशत्त्वातनूषुजहा-
मिसेदिमनिरामममीवाम् ॥ १०५ ॥ अग्ग्नेतवश्श्रवोव्वयोमहिब्भ्राजन्ते-
ऽअर्च्चयोंव्विभावसो । बृहद्भानोशवंसाव्वाजमुक्क्थ्यन्दधासिदा-
शुषेंकवे ॥ १०६ ॥ पावकवंर्च्चाॅंशुक्क्रवंर्च्चाऽअनूंनवर्च्चाऽउदियर्षिभानु-
ना । पुत्रोमातराव्विचरन्नुपावसिपृणक्षिरोदंसीऽउभे ॥ १०७ ॥ ऊर्ज्जो-
नपाज्जातवेदॅसुशस्तिभिर्म्मन्दंस्वधीतिभिर्हितः । त्वेऽइषॅसन्दधु-
र्ब्भूरिवर्प्पसश्चित्रोतयोव्वामजाताॅ ॥ १०८ ॥ इरज्ज्यन्नग्ग्नेप्प्रथय-
स्वजन्तुभिरस्म्मेरायोंऽअमर्त्त्य । सदर्शतस्यव्वपुषोव्विराजसिपृण-

द्दिसानसिङ्क्रतुम् ॥ १०९ ॥ इष्क्कर्त्तारमद्ध्वरस्यप्प्रचेतसङ्क्षयन्तꣳरा-
धꣳसोमहः। रातिंव्वामस्यसुभगाम्महीमिषन्दधासिसानसिꣳरयिम्
॥ ११० ॥ ऋतावानम्महिषंव्विश्वदर्शतमग्निꣳसुम्नायदधिरेपुरोज-
नाः। श्रुत्कर्णꣳसप्प्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा ॥ १११ ॥
आप्यायस्वसमेतुतेव्विश्वतः सोमव्वृष्ण्यम्। भवाव्वाजस्यसङ्गथे
॥ ११२ ॥ सन्तेपयाꣳसिसमुयन्तुव्वाजाःसंव्वृष्ण्यान्यभिमातिषा-
हः। आप्यायमानोऽअमृतायसोमदिविश्रवाꣳस्युत्तमानिधिष्व
॥ ११३ ॥ आप्यायस्वमदिन्तमसोमव्विश्वेभिरꣳशुभिः। भवानः
सप्प्रथस्तमःसखाव्वृधे ॥ ११४ ॥ आतेव्वत्सोमनोयमत्परमाच्चित्स

घस्त्थात् । अग्नेत्त्वाङ्कामयागिरा ॥ ११५ ॥ तुब्भ्यन्ताऽअङ्गिरस्तम-
व्विश्श्वाः सुक्षितयःपृथक् । अग्ने कामायचेमिरे ॥ ११६ ॥ अग्निः
प्प्रियेषुधामसुकामोभूतस्यभव्यस्यसम्म्राडेकोव्विराजति ॥ ११७ ॥
इति संहितायां द्वादशोऽध्यायः ॥

## ❀ अथ त्रयोदशोऽध्यायः ❀

ॐ मयिगृह्णाम्म्यग्ग्रेऽअग्निᳪरायस्प्पोषायसुप्प्रजास्त्वायसुवी-
र्य्याय । मामुदेवताःसचन्ताम् ॥ १ ॥ अपाम्पृष्ठमसियोनिरग्नेःस-
मुद्रमभितःपिन्न्वमानम् । व्वर्द्धमानोमहाँ२ऽआचपुष्क्करेदिवोमात्र-

याव्वरिम्मणाप्प्रथस्व ॥ २ ॥ ब्रह्मज्ज्ञानम्प्रथमम्पुरस्ताद्विसीमतः
सुरुचोव्वेनऽआवः । सबुध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्चयोनिम-
सतश्चव्विवः ॥ ३ ॥ हिरण्यगर्भः समवर्त्तताग्ग्रेभूतस्यजातःपतिरे-
कऽआसीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्म्मै देवायहविषाव्वि-
धेम ॥ ४ ॥ द्रप्सश्चस्कन्दपृथिवीमनुद्द्यामिमञ्चयोनिमनु-
यश्चपूर्व्वः समानंय्योनिमनुसञ्चरन्तन्द्रप्सञ्जुहोम्म्यनुसप्तहोत्राः
॥ ५ ॥ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यः
सर्प्पेभ्योनमः ॥ ६ ॥ याऽइषवोयातुधानानांय्येवाव्वनस्पतीं१-
रनु । येवावटेषुशेरतेतेभ्यः सर्प्पेभ्योनमः ॥ ७ ॥ येवामीरोचने-

दिवोयेवासूर्य्यस्यरश्मिषु। येषामप्सुसदस्कृतन्तेब्भ्यः सर्प्पेब्भ्योन-
मः ॥ ८ ॥ कृणुष्ष्वपाजः प्प्रसितिन्नपृत्थ्वीँय्याहिराजेवामवाँ२ऽइ-
भेन। तृष्ष्वीमनुप्प्रसितिन्द्द्रूणानोस्तासिव्विद्ध्यरक्षसस्तपिष्ठैः ॥ ९ ॥
तवब्भ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः। तपूँ᳖ष्ष्यग्ग्नेजु-
ह्वापतङ्गानसन्दितोव्विसृजविष्ष्वगुल्काः॥ १० ॥ प्रतिस्प्पशोव्विसृज-
तूर्ण्णितमोभवापायुर्व्विशोऽअस्याऽअदब्धः। योनोदूरेऽअघशꣳसोयो-
ऽअन्त्यग्ग्नेमाकिष्ट्टेव्व्यथिरादधर्षीत् ॥ ११ ॥ उदग्ग्नेतिष्ठप्प्रत्यातनु-
ष्ष्वन्न्यमित्त्राँ२ऽओषतात्तिग्ग्महेते। योनोऽअरातिꣳसमिधानचक्क्रे-
नीचातन्धक्ष्यतसन्नशुष्क्कम् ॥ १२ ॥ ऊर्द्ध्वोभवप्प्रतिविद्ध्याद्ध्यस्म-

दाविष्कृणुष्वदैव्व्यान्यग्ने । अवस्थिरातनुहियातुजूनाञ्जामिमजा-
मिम्प्रमृणीहिशत्रून्। अग्नेष्ट्वातेजसासादयामि ॥ १३ ॥ अग्निर्म्मूर्द्धा-
दिवःककुत्पतिः पृथिव्व्याऽअयम् । अपाꣳरेताꣳसिजिन्वति ।
इन्द्रस्यत्त्वौजसासादयामि ॥ १४ ॥ भुवोयज्ञस्यरजसश्चनेतायत्रानि-
युद्भिःसचसेशिवाभिः । दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्ने-
चकृषेहव्व्यवाहम् ॥ १५ ॥ ध्रुवासिधरुणास्तृताविश्वकर्म्मणा । मा-
त्त्वासमुद्रऽउद्वधीन्मासुपर्ण्णोव्व्यथमानापृथिवीन्दृꣳह ॥ १६ ॥
प्रजापतिष्ट्वासादयत्त्वपाम्पृष्ठेसमुद्रस्येमन्। व्यचस्वतीम्प्रथस्वतीम्प्र-
थस्वपृथिव्व्यसि ॥ १७ ॥ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्व-

श्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीः
॥ १८ ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरि-
त्राय। अग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गि-
रस्वद् ध्रुवा सीद ॥ १९॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि।
एवा नो दूर्वे प्र तनु सहस्रेण शतेन च ॥ २० ॥ या शतेन प्रतनोषि सहस्रे-
ण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥२१॥ यास्ते ऽ-
अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः । ताभिर्नो ऽअद्य सर्वा-
भी रुचे जनाय नस्कृधि ॥ २२ ॥ या वो देवाः सूर्ये रुचो गोष्वश्वेषु या
रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥ २३ ॥ विरा-

ड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् । प्रजापतिष्ट्वासादयतुपृ
ष्ठेपृथिव्व्याज्ज्योतिष्म्मतीम् । व्विश्श्वस्म्मैप्प्राणायापानायव्व्यानाय·
व्विश्श्वञ्ज्योतिर्य्यच्छ । अग्निष्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवा·
सीद ॥ २४ ॥ मधुश्श्चमाधवश्श्चवासन्तिकावृतूऽअग्नेरन्तꣳश्लेषोसि
कल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयꣳकल्प्पन्तामग्नयꣳपृथ·
ङ्ममज्ज्यैष्ठ्यायसव्व्रताꣳ । येऽअग्नयꣳसमनसोन्तराद्यावापृथिवीऽ·
इमे । व्वासन्तिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभिसंव्विश·
न्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २५ ॥ अषाढासिसहमानास·
हस्वारातीꣳसहस्वपृतनायतः । सहस्रवीर्य्यासिसामाजिन्व ॥ २६ ॥

मधुव्वाताऽऋतायतेमधुंक्षरन्तिसिन्धवः । माद्ध्वीर्न्नःसन्त्वोष-
धीः ॥ २७ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः । मधुद्यौर-
स्तुनःपिता ॥ २८ ॥ मधुमान्नोव्वनस्पतिर्म्मधुमाँ२अस्तुसूर्य्यः ।
माद्ध्वीर्गावोभवन्तुनः ॥२९॥ अपाङ्गम्भन्त्सीदमात्त्वासूर्य्योभिताप्सी-
न्माग्निर्व्वैश्वानरः । अच्छिन्नपत्राःप्रजाऽअनुवीक्षस्वानुत्त्वादि-
व्याव्वृष्टिः सचताम् ॥ ३० ॥ त्रीन्त्समुद्द्रान्त्समसृपत्स्वर्ग्गानपा-
म्पतिर्व्वृषभऽइष्टकानाम् । पुरीषंव्वसानःसुकृतस्यलोकेतत्रगच्छयत्र-
पूर्व्वेपरेताः ॥ ३१ ॥ महीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ।
पिपृतान्नोभरीमभिः ॥ ३२ ॥ विष्णोःकर्म्माणिपश्यतयतोव्व्रतानि

पस्पशे । इन्द्रस्य युज्यः सखा ॥ ३३ ॥ ध्रुवासि धरुणेतो जज्ञे प्रथमम् एभ्यो योनिभ्यो अधि जातवेदाः । स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥ ३४ ॥ इषे राये रमस्व सहसे द्युम्न ऊर्जे अपत्याय । सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावताम् ॥ ३५ ॥ अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥ ३६ ॥ युक्ष्वा हि देवहूतमाँ२ऽअश्वाँ२ऽअग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ ३७ ॥ सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।

---

१—'असस्थाने मुदि द्वितीयं० शौनकस्य' (४।१२०) शौनकाचार्यमते असमानस्थाने मुत्संज्ञके प्रत्यये स्पर्शोऽपञ्चमो द्वितीयमापद्यते । सम्यक् स्रवन्ति । सम्यक्स्रव-

घृतस्यधाराऽअभिचाकशीमिहिरण्ययोव्वेतसोमद्ध्यैऽअग्ग्नेः ॥ ३८ ॥
ऋचेत्त्वारुचेत्त्वाभासेत्वाज्ज्योतिषेत्वा । अभूदिदंव्विश्श्वस्यभुवनस्य
व्वाजिनमग्ग्नेर्व्वैश्श्वानरस्यच ॥ ३९ ॥ अग्ग्निर्ज्ज्योतिषाज्ज्योतिष्म्मा-
न्रुक्क्मोव्वर्च्चसाव्वर्च्चस्वान् । सहस्रदाऽअसिसहस्रायत्त्वा ॥ ४० ॥
आदित्यङ्गर्ब्भम्पयसासमङ्ग्धिसहस्रस्यप्रतिमांव्विश्श्वरूपम् । परि-
वृङ्ग्धिहरसामाभिमंᳫस्थाःशतायुषङ्कृणुहिचीयमानः ॥ ४१ ॥ व्वा-
तस्यजूतिंव्वरुणस्यनाभिमश्श्वञ्जज्ञानᳫसरिरस्यमध्ये । शिशुन्नदीनाᳫ

न्ति । एवमनुष्टुप्शारदी अनुष्टुफशारदी ( १३।५७ ) इत्यादि । केचिदत्र तृतीय 'मव-
सानेचे'त्येतत्सूत्रं पठन्ति सोऽपपाठः ।

हरिमद्द्रबुध्नमग्ने मा हिꣳसीः परमे व्व्योमन् ॥ ४२ ॥ अजस्रमिन्दु-
मरुषम्भुरण्युमग्निमीडे पूर्व्वचित्तिन्नमोभिः । सपर्व्वभिर्ऋतुशः कल्प-
मानो गाम्मा हिꣳसीरदितिं व्विराजम् ॥ ४३ ॥ व्वरूत्रीन्त्वष्टुर्व्वरुण-
स्य नाभिमविञ्ञ्जज्ञानाꣳ रजसः परस्मात् । महीꣳसाहस्रीमसुरस्य
मायामग्ने मा हिꣳसीः परमे व्व्योमन् ॥ ४४ ॥ योऽअग्निरग्नेरद्ध्य-
जायत शोकात्पृथिव्व्याऽउत वा दिवस्परि । येन प्रजा व्विश्श्वकर्म्मा ज-
जान तमग्ने हेडः परि ते व्वृणक्तु ॥ ४५ ॥ चित्रन्देवानामुदगादनीकञ्च-
क्षुर्म्मित्रस्य व्वरुणस्याग्नेः । आप्प्रा द्यावापृथिवीऽअन्तरिक्षꣳ सू-
र्य्यऽआत्मा जगतस्तस्थुषश्च ॥ ४६ ॥ इमम्मा हिꣳसीर्द्विपादम्पशुꣳ

सहस्रान्तोमेधायचीयमानं । मयुम्पशुम्मेधमग्नेजुषस्वतेनचिन्न्वान-
स्तन्न्वोनिषीद । मयुन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥४७॥ इम-
म्माहिꣳसीरेकशफम्पशुङ्कनिक्रदंव्वाजिनंव्वाजिनेषु । गौरमारण्य-
मनु तेदिशामितेनचिन्न्वानस्तन्न्वोनिषीद । गौरन्तेशुगृच्छतुयन्द्विष्म-
स्तन्तेशुगृच्छतु ॥४८॥ इमꣳसाहस्रꣳशतधारमुत्संव्व्यच्यमानꣳसरिर-
स्यमध्ये । घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीः परमेव्व्योमन् ॥
गवयमारण्यमनुतेदिशामितेनचिन्न्वानस्तन्न्वोनिषीद । गवयन्तेशु-
गृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४९ ॥ इममूर्णायुंव्वरुणस्यनाभि-
न्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम् । त्वष्टुः प्रजानाम्प्रथमञ्जनित्रम-

ग्नेमाहिᳫंसीःपरमेव्योमन्। उष्ट्रमारण्यमनुतेदिशामितेनचिन्वा-
नस्तन्वोनिषीद। उष्ट्रन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु॥ ५०॥
अजोह्य॒ग्नेरजनिष्टशोकात्सोऽअपश्यज्जनितारमग्ने। तेनदेवादेवता-
मग्ग्रमायँस्तेनरोहमायन्नुपमेध्यासः। शरभमारण्यमनुतेदिशामि
तेनचिन्वानस्तन्वोनिषीद। शरभन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृ-

१—'स्वरात्स्वरे समानपदे जोयत्नतु ऋकारे' (शु. प्रा. सू. १६४) वा शब्दो विक-ल्पार्थः, 'स्फोटनं च ककारवर्गौ वा स्पर्शात्' (१६३) इति पूर्वसूत्रात् इहानुवर्तते। स्व-परास्परो जकारो वा यकारमापद्यते स्वरे परभूते समानपदे न तु ऋकारे परे। यथा 'अजोह्यग्नेरजनिष्ट' 'अजोय्ग्नेरजनिष्ट'।

च्छतु ॥ ५१ ॥ त्वंव्वविष्णुदाशुषोनॄँ॒ःपाहिशृणुधीगिरः॑ । रक्षातोक-
मुतत्क्मना ॥ ५२ ॥ अपान्त्वेमन्त्सादयाम्म्यपान्त्वोद्मन्त्सादया-
म्म्यपान्त्वाभस्मन्त्सादयाम्म्यपान्त्वाज्ज्योतिषिसादयाम्म्यपान्त्वाय-
नेसादयाम्म्यर्ण्णवेत्त्वासदनेसादयामिसमुद्रेत्त्वासदनेसादयामिसरि-
रेत्त्वासदनेसादयाम्म्यपान्त्वाक्षयेसादयाम्म्यपान्त्वासधिषिसादया-
म्म्यपान्त्वासदनेसादयाम्म्यपान्त्वासधस्थेसादयाम्म्यपान्त्वायोनौ-
सादयाम्म्यपान्त्वापुरीषेसादयाम्म्यपान्त्वापाथसिसादयामिगायत्त्रेण
त्वाच्छन्दसासादयामित्त्रैष्टुभेनत्त्वाच्छन्दसासादयामिजागतेनत्त्वाच्छ-
न्दसासादयाम्म्यानुष्टुभेनत्त्वाच्छन्दसासादयामिपाङ्क्तेनत्त्वाच्छन्द-

सासादयामि ॥ ५३ ॥ अयम्पुरोभुवस्तस्यप्प्राणोभौवायनोव्वसन्तः
प्प्राणायनोगायत्त्रीव्वासन्तीगायत्त्र्यैगायत्त्रङ्गायत्त्रादुपाᳪंशुरुपाᳪं-
शोस्त्रिवृत्त्रिवृतोरथन्तरंव्वसिष्ठऽऋषिः प्प्रजापतिगृहीतयात्त्वयाप्प्रा-
णङ्गृह्णामिप्प्रजाब्भ्यः ॥ ५४ ॥ अयन्दक्षिणाव्विश्श्वकर्म्मातस्यम-
नोव्वैश्श्वकर्म्मणङ्ग्रीष्मोमानसस्त्रिष्टुब्ग्रैष्मीत्रिष्टुभःस्वारᳪंस्वारा-
दन्तर्य्यामोन्तर्य्यामात्पञ्चदशःपञ्चदशाद्बृहद्भरद्वाजऽऋषिः प्प्र-
जापतिगृहीतयात्त्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥ ५५ ॥ अयम्पश्चाद्विश्श्व-
श्श्वव्व्यचास्तस्यचक्षुर्व्वैश्श्वव्व्यचसंव्वर्षाश्चाक्षुष्य्योजगतीव्वार्षीज-

गंत्याऽऋक्सममृक्साँमाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरू-
पञ्जमदग्निर्ऋषि ÷ प्रजापतिगृहीतयात्त्वयाचक्षुर्गृह्णामिप्रजाभ्य ÷
॥ ५६ ॥ इदमुत्तरात्स्वस्तस्यश्श्रोत्रँसौवँशरच्छ्रौत्र्यनुष्टुप्शारद्य-
नुष्टुभऽऐडमैडान्मन्थीमन्थिनऽएकविँशऽएकविँशाद्वैराजंव्वि-
श्श्वामित्रऋषि ÷ प्रजापतिगृहीतयात्त्वयाश्श्रोत्रंङ्गृह्णामिप्रजाभ्य ÷
॥ ५७ ॥ इयमुपरिमतिस्तस्यैव्वाङ्मात्याहैमन्तोव्वाच्यः पङ्क्ति-
हैमन्तीपङ्क्त्यैनिधनवन्निधनवत ऽ आग्रयण ऽ आग्रयणात्त्रिणवत्रय-
स्त्रिँशौत्रिणवत्रयस्त्रिँशाभ्याँ शाक्वररैवतेव्विश्वकर्म्माऽ-

ऋषि ÷ प्रजापतिगृहीतयात्त्वयात्राचंक्कृह्यामिप्रजाभ्यौलोकन्ताऽ-
इन्द्रम् ॥ ५८ ॥ इति संहितायां त्रयोदशोऽध्यायः ॥

## ❀ अथ चतुर्दशोऽध्यायः ❀

ॐ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवंयोनिमासीदसाधुया ।
उख्यस्यकेतुम्प्रथमञ्जुषाणाअश्विनाध्वर्यूसादयतामिहत्वा ॥ १ ॥
कुलायिनीघृतवतीपुरन्धिःस्योनेसीदसदनेपृथिव्याः । अभित्वारुद्-

१—लोकम्पृण० ताऽअस्य; इन्द्रं विश्वा० ( अ० १२ म० ५४-५६ ) प्रतीकोक्ता
मन्त्राः पठनीयाः ।

द्राव्वसंवोगृणन्त्विमाब्ब्रह्म्मपीपिहिसौभगायाशिश्वनाद्ध्वर्य्यूसाद-
यतामिहत्वा ॥ २ ॥ स्वैर्द्दक्षैर्द्दक्षपितेहसींददेवाना ॐ सुम्म्नेबृहतेर-
णाय । पितेवैधिसूनवऽआसुशेवास्वावेशातन्न्वासंव्विशस्वाशिश्वना-
द्ध्वर्य्यूसादयतामिहत्वा ॥३॥ पृथिव्व्याःपुरीषमस्यप्प्सोनामतान्त्वा-
व्विश्श्वेऽअभिगृणन्तुदेवाः । स्तोमपृष्ठाघृतवतीहसीदप्प्रजावदस्म्मे-
द्द्रविणायजस्वाशिश्वनाद्ध्वर्य्यूसादयतामिहत्वा ॥४॥ आदित्यास्त्वा-
पृष्ठेसादयाम्म्यन्तरिक्षस्यधर्त्रींव्विष्ट्टम्भनीन्दिशामधिपत्क्नीम्भुवना-
नाम् । ऊर्म्मिर्द्द्रप्प्सोऽअपामसिव्विश्श्वकर्म्मातऽऋषिरशिश्वनाद्ध्व-
र्य्यूसादयतामिहत्वा ॥ ५ ॥ शुक्रश्चशुचिश्चग्ग्रैष्म्मावृतूऽअग्ने-

रन्तर्ꣳश्लेषोसिकल्पैतान्द्यावापृथिवीकल्पन्तामापऽओषधयꣳकल्प-
न्तामग्नयꣳपृथङ्ममज्यैष्ठ्यायसव्व्रताꣳ । येऽअग्नयꣳसमनसोन्तरा-
द्यावापृथिवीऽइमे । ग्रैष्मावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभि-
संव्विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६ ॥ सजूर्ऋतुभि꞉
सजूर्व्विधाभि꞉ सजूर्देवै꞉सजूर्देवैर्व्वयोनाधैरग्नयेत्वावैश्वानराया-
श्विनाद्ध्वर्यूसादयतामिहत्वासजूर्ऋतुभि꞉ सजूर्व्विधाभि꞉सजूर्व्व-
सुभिꣳसजूर्देवैर्व्वयोनाधैरग्नयेत्वाव्वैश्वानरायाश्विनाद्ध्वर्यूसाद-
यतामिहत्वासजूर्ऋतुभि꞉सजूर्व्विधाभि꞉सजूरुद्द्रै꞉सजूर्देवैर्व्वयोना-
धैरग्नयेत्वाव्वैश्वानरायाश्विनाद्ध्वर्यूसादयतामिहत्वासजूर्ऋतु-

भिः सजूर्व्विधाभिः सजूरादित्यैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा व्वै-
श्वानरायाश्विनाद्ध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधा-
भिः सजूर्व्विश्वैर्द्देवैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा व्वैश्वानरायाश्वि-
नाद्ध्वर्यू सादयतामिह त्वा ॥ ७ ॥ प्राणम्मे पाह्यपानम्मे पाहि व्व्या-
नम्मे पाहि चक्षुर्म्म ऽउर्व्व्या व्विभाहि श्रोत्रम्मे श्लोकय । अपः पिन्वौष-
धीर्ज्जिन्व द्विपादव चतुष्पात्पाहि दिवो व्वृष्टिमेरय ॥ ८ ॥ मूर्द्धा व्व-
यः प्रजापतिश्छन्दः क्षत्रं व्वयो मयन्दं छन्दो व्विष्टम्भो व्वयोऽधिप-
तिश्छन्दो व्विश्वकर्म्मा व्वयः परमेष्ठी छन्दो बस्तो व्वयो व्विवलं छन्दो
व्वृष्णिर्व्वयो व्विशालं छन्दः पुरुषो व्वयस्तन्द्रं छन्दो व्याघ्रो व्वयो ऽना-

घृष्टृञ्छन्दः सिꣳहोव्वयश्छदिश्छन्दः पष्ठवाड्वयो बृहती छन्दऽउ-
क्षाव्वयः ककुप्छन्दऽऋषभोव्वयः सतोबृहती छन्दः ॥ ९ ॥ अ-
नड्वान्व्वयः पङ्क्तिश्छन्दो धेनुर्व्वयो जगती छन्दस्त्र्यविर्व्वयस्त्रिष्टुप्छ-
न्दो दित्यवाड्वयो व्विराट्छन्दः पञ्चाविर्व्वयो गायत्री छन्दस्त्रिवत्सो व्व-
यंऽउष्णिक्छन्दस्तुर्यवाड्वयोनुष्टुप्छन्दो लोकन्ताऽइन्द्रम्[1] ॥१०॥
इन्द्राग्नीऽअव्व्यथमानामिष्टकान्दृꣳहतंयुवम् । पृष्ठेनद्यावापृथि-
वीऽअन्तरिक्षञ्चव्विबाधसे ॥ ११ ॥ व्विश्वकर्म्मात्वासादयत्वन्तरि-
क्षस्यपृष्ठेव्यचस्वतीम्प्रथस्वतीमन्तरिक्षंयच्छान्तरिक्षन्दृꣳहान्तरि-

१—अ० १२ मं. ५४-५६, इत्यत्रापि पठनीयाः ।

क्षम्माहिᳬंसीः । विश्श्वस्मैप्प्राणायापानायव्व्यानायोदानायप्प्रति-
ष्ठायैचरित्त्राय । व्वायुष्ट्वाभिपातुमह्यास्वस्त्याच्छर्द्दिषाशन्तमेनत-
यादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥ [ शतम् ७०० ] राज्ञ्यसिप्प्रा-
चीदिग्विराडसिदक्षिणादिक्सम्म्राडसिप्प्रतीचीदिक्स्वराडस्युदीची-
दिगधिपत्न्यसिबृहतीदिक् ॥ १३ ॥ व्विश्श्वकर्म्मात्त्वासादयत्वन्तरि-
क्षस्यपृष्ठेज्ज्योतिष्म्मतीम् । व्विश्श्वस्मैप्प्राणायापानायव्व्यानाय
व्विश्श्वञ्ज्योतिर्य्यच्छ । व्वायुष्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवा-
सीद ॥ १४ ॥ नभश्चनभस्यश्चवार्षिकावृतूऽअग्नेरन्तःश्श्लेषोसिक-
ल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयःकल्प्पन्तामग्नयःपृथङ्म-

मज्ज्यैष्ठ्यायसव्व्रताᳪं । येऽअग्नयᳪंसमनसोन्तराद्द्यावापृथिवीऽइ-
मे । व्वार्षिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअभिसंव्विशन्तु-
तयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्चोर्ज्जश्चशारदावृतूऽ-
अग्नेरन्तᳪंश्लेषोसिकल्प्पेतान्द्यावापृथिवीऽकल्प्पन्तामापऽओषधयᳪं-
कल्प्पन्तामग्नयᳪंपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताᳪं । येऽअग्नयᳪंसमनसो-
न्तराद्द्यावापृथिवीऽइमे । शारदावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदे-
वाऽअभिसंव्विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥१६॥ आयुर्म्मे
पाहिप्प्राणम्मेपाह्यपानम्मेपाहिव्व्यानम्मेपाहिचक्षुर्म्मेपाहिश्श्रोत्रम्मेपा-
हिव्वाचम्मेपिन्न्वमनोमेजिन्न्वात्मानम्मेपाहिज्ज्योतिर्म्मेयच्छ ॥१७॥

माच्छन्दः प्रमाच्छन्दः प्रतिमाच्छन्दोऽअस्रीवयश्छन्दः पङ्क्तिश्छन्दऽ-
उष्णिक्छन्दो बृहतीच्छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्रीच्छन्दस्त्रि-
ष्टुप्छन्दो जगतीच्छन्दः ॥ १८ ॥ पृथिवीच्छन्दोऽन्तरिक्षञ्छन्दो द्यौ-
श्छन्दः समाश्छन्दो नक्षत्राणिच्छन्दो वाक्छन्दो मनश्छन्दः कृषिश्छ-
न्दो हिरण्यञ्छन्दो गौश्छन्दोऽजाच्छन्दोऽश्वश्छन्दः ॥ १९ ॥ अग्निर्देवता
वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवताऽदि-
त्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरु-
णो देवता ॥२०॥ मूर्द्धासि राड्ध्रुवासि धरुणा धर्त्र्यसि धरणी । आयुषे
त्वा वर्च्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥२१॥ यन्त्री राड् यन्त्र्यसि यमनी-

ध्रुवासिधरित्री। इषेत्त्वोर्जेत्त्वा रय्यैत्त्वापोषायत्त्वालोकन्ताऽइन्द्रम्॥२२॥
आशुस्त्रिवृद्भान्तःपञ्चदशोव्योमासप्तदशोधरुणऽएकविꣳशःप्रतू-
र्तिरष्टादशस्तपोनवदशोभीवर्तःसविꣳशोवर्च्चोद्वाविꣳशःसम्भर-
णस्त्रयोविꣳशोयोनिश्चतुर्विꣳशोगर्भाःपञ्चविꣳशऽओजस्त्रिणवः
क्क्रतुरेकत्रिꣳशःप्रतिष्ठात्रयस्त्रिꣳशोब्रध्नस्यव्विष्टपञ्चतुस्त्रिꣳ-
शोनाकःषट्त्रिꣳशोव्विवर्तोष्टाचत्वारिꣳशोधर्त्रञ्चतुष्टोमः॥२३॥
अग्नेर्भागोसिदीक्षायाऽआधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमऽइन्द्रस्यभा-
गोसिव्विष्णोराधिपत्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्तोमोनृचक्षसाम्भागो-

१—अ. १२ म. ५४-५६ अत्रापि प्रतीकोक्ताः पठनीयाः।

सिधातुराधिपत्यञ्जनित्रꣳस्पृतꣳसप्तदशस्तोमोमित्रस्यभागोसिव-
रुणस्याधिपत्यन्दिवोवृष्टिर्वातस्पृतऽएकविꣳशस्तोमः ॥ २४ ॥
वसूनाम्भागोसिरुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳशस्तोमऽ
आदित्यानाम्भागोसिमरुतामाधिपत्यङ्गर्भास्पृताःपञ्चविꣳशस्तोमो-
दित्यैभागोसिपूष्णऽआधिपत्यमोजस्पृतन्त्रिणवस्तोमोदेवस्यसवितु-
र्भागोसिबृहस्पतेराधिपत्यꣳसमीचीर्दिशस्पृताश्चतुष्टोमस्तोमः
॥ २५ ॥ यवानाम्भागोस्ययवानामाधिपत्यम्प्रजास्पृताश्चतुश्चत्वा-
रिꣳशस्तोमऽऋभूणाम्भागोसिविश्वेषान्देवानामाधिपत्यम्भूतꣳस्पृ-
तन्त्रयस्त्रिꣳशस्तोमः ॥ २६ ॥ सहश्चसहस्यश्चहैमन्तिकावृतूऽअ-

ग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्प-
न्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः। येऽअग्नयःसमनसोन्तरा-
द्यावापृथिवीऽइमे। हैमन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽ-
अभिसंव्विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २७ ॥ एकयास्तु-
वतप्रजाऽअधीयन्तप्रजापतिरधिपतिरासीत्तिसृभिरस्तुवतब्रह्मा-
सृज्ज्यतब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवतभूतान्यसृज्ज्य-
न्तभूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तुवतसप्तऽऋषयोसृज्ज्यन्त-
धाताधिपतिरासीत् ॥ २८ ॥ नवभिरस्तुवतपितरोसृज्ज्यन्तादि-
तिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोसृज्ज्यन्तार्त्तवाऽअधि-

पतयऽआसँस्त्रयोदशभिरस्तुवतमासाऽअसृज्ज्यन्तसंव्वत्सरोधिपति-
रासीत्पञ्चदशभिरस्तुवतक्षत्त्रमसृज्ज्यतेन्द्रोधिपतिरासीत्सप्तदश-
भिरस्तुवतग्राम्म्याः पशवोसृज्ज्यन्तबृहस्पतिरधिपतिरासीत् ॥ २९ ॥
नवदशभिरस्तुवतशूद्द्रार्थ्यावसृज्ज्येतामहोरात्त्रेऽअधिपत्नीऽआस्ता-
मेकविꣳशत्यास्तुवतैकशफाः पशवोसृज्ज्यन्तव्वरुणोधिपतिरासीत्त्र-
योविꣳशत्यास्तुवतक्षुद्द्राः पशवोसृज्ज्यन्तपूषाधिपतिरासीत्पञ्चविꣳश-
शत्यास्तुवतारण्याः पशवोसृज्ज्यन्तव्वायुरधिपतिरासीत्सप्तविꣳश-
त्यास्तुवतद्द्यावापृथिवी व्व्यैतांव्वसवोरुद्द्राऽआदित्याऽअनुव्व्यायँ-
स्तऽएवाधिपतयऽआसन् ॥ ३० ॥ नवविꣳशत्यास्तुवतव्वनस्पतयो

सृज्ज्यन्त सोमोधिपतिरासीदेकत्रिᳬशतास्तुवत प्रजाऽअसृज्ज्यन्त ब-
वाश्चार्यवाश्चाधिपतयऽआसँस्त्रयस्त्रिᳬशतास्तुवतभूतान्न्यशाम्म्य-
न्प्रजापतिᳬपरमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥ ३१ ॥ इति
चतुर्द्दशोऽध्यायः ।

## ❀ अथ पञ्चदशोऽध्यायः ❀

ॐ अग्ग्नेजातान्न्प्रणुदानᳬसपत्त्नान्न्प्रत्त्यजातान्नुदजातवेदᳬ ।
अधिनोब्ब्रूहिसुमनाऽअहेडँस्तवस्यामशर्म्मत्रिवरूथऽउद्भौ ॥ १ ॥

१—इलोकम्पृण० ताऽअस्य० इन्द्रं विश्वा० ( अ० १२ मन्त्र ५४-५६ ) सति स-
म्भवे पठनीयाः ।

सहँसाजातान्प्रणुदानःँसपत्क्नान्प्रत्यजाताञ्जातवेदोनुदस्व । अधि-
नोब्रूहिसुमनस्यमानोव्वयꣳस्यामप्रणुदानःँसपत्क्नान् ॥ २ ॥ षो-
डशीस्तोमऽओजोद्द्रविणञ्चतुश्चत्वारिꣳशस्तोमोव्वर्च्चोद्द्रविणम् ।
अग्नेःपुरीषमस्यप्सोनामतान्त्वाव्विश्श्वेऽअभिगृणन्तुदेवाः । स्तोम-
पृष्ठाघृतवतीहसीदप्रजावदस्स्मेद्द्रविणायजस्व ॥ ३ ॥ एवश्छन्दोव्व-
रिवश्छन्दःशम्भूश्छन्दःपरिभूश्छन्दऽआच्छच्छन्दोमनश्छन्दोव्यच-
श्छन्दःँसिन्धुश्छन्दः समुद्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रि-
ककुप्छन्दः काव्यञ्छन्दोऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छ-
न्दोव्विष्टारपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दः ॥ ४ ॥ आच्छच्छन्दः प्र-

च्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकाय-
श्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप्छन्दोऽनुष्टुप्छ-
न्दऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो
विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दोऽअङ्काङ्कश्छन्दः
॥ ५ ॥ रश्मिना सत्याय सत्यञ्जिन्व प्रेतिना धर्म्मणा धर्म्मञ्जिन्वान्वि-
त्या दिवा दिवञ्जिन्व सन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व प्रतिधिना पृथि-
व्या पृथिवीञ्जिन्व विष्टम्भेन वृष्ट्या वृष्टिञ्जिन्व प्रवयाह्नाहर्ज्जिन्वा-
नुया रात्र्या रात्रीञ्जिन्वोशिजा वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्ये-
भ्यऽआदित्याञ्जिन्व ॥ ६ ॥ तन्तुना रायस्पोषेण रायस्पोषञ्जि-

न्वसꣳसप्पँणश्श्रुतायश्श्रुतञ्जिन्न्वैडेनौषधीभिरोषधीर्ज्जिन्न्वोत्तमेन-
तनूभिस्तनूर्ज्जिन्न्वव्वयोधसाधीतेनाधीतञ्जिन्न्वाभिजितातेजसाते-
जोजिन्न्व ॥ ७ ॥ प्रतिपदसिप्प्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसि
सम्पदेत्वातेजोसितेजसेत्वा ॥ ८ ॥ त्रिवृदसित्रिवृतेत्वाप्प्रवृदसिप्प्र-
वृतेत्वाव्विवृदसिव्विवृतेत्वासवृदसिसवृतेत्वाक्क्रमोस्याक्क्रमायत्वा-
सङ्क्रमोसिसङ्क्रमायत्वोत्क्क्रमोस्युत्क्क्रमायत्वोत्क्क्रान्तिरस्युत्क्क्रा-
न्त्यैत्वाधिपतिनोर्ज्जोर्ज्जञ्जिन्न्व ॥ ९ ॥ राज्ञ्यसिप्प्राचीदिग्ग्वसवस्ते
देवाऽअधिपतयोग्ग्निर्हेतीनाम्प्रतिधर्त्तात्रिवृत्त्वास्तोमः पृथिव्व्याꣳ-
श्रयत्त्वाज्ज्यमुक्क्थमव्व्यथायैस्तब्भ्नातुरथन्तरꣳसामप्प्रतिष्ठित्याऽ-

अन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तु
व्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोके-
यजमानञ्चसादयन्तु ॥ १० ॥ व्विराडसिदक्षिणादिग्रुद्द्रास्तेदेवाऽ-
अधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्तापञ्चदशस्त्वास्तोम ÷ पृथिव्याꣳ-
श्रयतुप्प्रउगमुक्थमव्यथायैस्तभ्नातुबृहत्सामप्प्रतिष्ठित्याऽअन्त-
रिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ता
चायमधिपतिश्चतेत्त्वासर्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमा-
नञ्चसादयन्तु ॥ ११ ॥ सम्म्राडसिप्प्रतीचीदिगादित्यास्तेदेवाऽअ-
धिपतयोव्वरुणोहेतीनाम्प्रतिधर्त्तासप्तदशस्त्वास्तोम ÷ पृथिव्याꣳ-

श्रयन्तु मरुत्त्वतीयमुक्क्थमव्व्यथायै स्तभ्नातु वैरूपꣳ साम प्प्रतिष्ठि·
त्या ऽअन्तरिक्ष ऽऋषयस्त्वा प्प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्प्र·
थन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्व्वे संव्विदाना नाकस्य पृष्ठे स्व·
र्ग्गे लोके यजमानञ्च सादयन्तु ॥१२॥ स्वराडस्युदीची दिङ्मरुतस्ते देवा ऽ·
अधिपतयः सोमो हेतीनाम्प्रतिधर्त्तैकव्विꣳशस्त्वा स्तोमः पृथिव्याꣳ·
श्रयतु निष्क्केवल्यमुक्क्थमव्व्यथायै स्तभ्नातु वैराजꣳ साम प्प्रतिष्ठि·
त्या ऽअन्तरिक्ष ऽऋषयस्त्वा प्प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्प्र·
थन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्व्वे संव्विदाना नाकस्य पृष्ठे स्व·
र्ग्गे लोके यजमानञ्च सादयन्तु ॥ १३ ॥ अधिपत्न्यसि बृहती दि·

ग्विश्श्वेतेदेवाऽअधिपतयोबृहस्पतिर्हेतीनाम्प्रतिधर्त्तात्त्रिणवत्त्रय-
स्त्रिꣳशौत्त्वास्तोमौपृथिव्व्याꣳश्रयतांव्वैश्श्वदेवाग्निमारुतेऽउक्थेऽअ-
व्व्यथायैस्तभ्नीताꣳशाक्वररैवतेसामनीप्प्रतिष्ठित्याऽअन्तरिक्षऽऋष-
यस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्णाप्प्रथन्तुविधर्त्ताचायमधि-
पतिश्चतेत्त्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसाद-
यन्तु ॥ १४ ॥ अयम्पुरोहरिकेशःसूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौ-
जाश्चसेनानीग्ग्रामण्ण्यौ । पुञ्जिकस्थलाचक्क्रतुस्थलाचाप्सरसौ-
दङ्क्ष्णवः पशवोहेतिःपौरुषेयोव्वधःप्प्रहेतिस्तेभ्योनमोऽअस्तुतेनो-
व्वन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १५ ॥

अयन्दक्षिणाविश्वकर्म्मातस्यरथस्वनश्चरथेचित्रश्चसेनानीग्राम-
ण्ण्यौ । मेनकाचसहजन्याचाप्सरसौषातुधानाहेतीरक्षांᳬसिप्रहे-
तिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेषन्द्विष्मोषश्चनोद्द्वे-
ष्टितमेषाञ्जम्भेदध्मः ॥१६॥ अयम्पश्चाद्विश्वव्यचास्तस्यरथप्रोत-
श्चासमरथश्चसेनानीग्रामण्ण्यौ । प्रम्लोचन्तीचानुम्लोचन्तीचा-
प्सरसौव्याघ्राहेतिःसर्प्पाःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनो-
मृडयन्तुतेषन्द्विष्मोषश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ १७ ॥ अ-
षमुत्तरात्संयद्वसुस्तस्यताक्ष्यश्चारिष्टनेमिश्चसेनानीग्रामण्ण्यौ ।
विश्वाचीचघृताचीचाप्सरसावापोहेतिर्व्वातःप्रहेतिस्तेभ्योनमोऽ-

अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भे
दध्मः ॥ १८ ॥ अयमुपर्य्यर्व्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानी-
ग्रामण्यौ । उर्व्वशीचपूर्व्वचित्तिश्चाप्सरसौवस्फूर्जन्हेतिर्व्वि-
द्युत्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोय-
श्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १९ ॥ अग्निर्म्मूर्द्धादिवःककु-
त्पतिःपृथिव्याऽअयम् । अपाᳬरेताᳬसिजिन्वति ॥ २० ॥ अयम-
ग्निःसहस्रिणोव्वाजस्यशतिनस्पतिः । मूर्द्धाकवीरयीणाम् ॥२१॥
त्वामग्नेपुष्करादध्यथर्व्वानिरमन्थत । मूर्द्ध्नोव्विश्वस्यव्वा-
घतः ॥ २२ ॥ भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशि-

वाभिः÷ । दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्व्यवाहम्
॥ २३ ॥ अबोद्ध्यग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ।
यह्वाऽइवप्प्रवयामुज्जिहानाःप्प्रभानवः÷ सिस्रतेनाकमच्छ ॥ २४ ॥
अवोचामकव्वयेमेद्ध्यायव्वचोव्वन्दारुव्वृषभायव्वृष्णे । गविष्ठिरोन-
मसास्तोममग्नौदिवीवरुक्ममुरुव्व्यञ्चमश्श्रेत् ॥ २५ ॥ अयमिहप्प्रथ-
मोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्वीड्यः÷ । यमप्नवानोभृग-
वोव्विरुरुचुर्व्वनेषुचित्रंव्विभ्वंव्विशेविशे ॥ २६ ॥ जनस्यगोपाऽअज-
निष्टजागृविरग्निःसुदक्षः÷ सुवितायनव्व्यसे । घृतप्प्रतीकोबृहतादि-
विस्पृशाद्द्युमद्विभातिभरतेब्भ्यःशुचिः÷ ॥ २७ ॥ त्वामग्नेऽअङ्गि-

रक्षोगूह्वाहितमन्न्वविन्दच्छिश्रियाणंव्वनेवने । सजायसेमत्थ्यमानः
सहोमहत्त्वामाहुःसहसस्पुत्रमङ्गिरः ॥ २८ ॥ सखायःसंव्वः सम्य-
ञ्चमिषःस्तोमञ्चाग्नये । व्वर्षिष्ठायक्षितीनामूर्ज्जोनप्त्रेसहस्वते
॥ २९ ॥ सःसमिद्युवसेव्वृषन्नग्नेव्विश्वान्न्यर्य्यऽआ । इडस्पदेस-
मिद्ध्यसेसनोव्वसून्न्याभर ॥ ३० ॥ त्वाञ्चित्रश्रवस्तमहवन्तेव्विक्षुज-
न्तवः । शोचिष्ष्केशम्पुरुप्प्रियाग्नेहव्व्यायव्वोढवे ॥ ३१ ॥ एनावोऽ-
ग्निन्नमसोर्ज्जोनपातमाहुवे । प्रियञ्चेतिष्ठमरतिःस्वद्ध्वरंव्विश्वस्य
दूतममृतम् ॥३२॥ व्विश्वस्यदूतममृतंव्विश्वस्यदूतममृतम् । सयोजतेऽ-
अरुषाव्विश्वभोजसासदुद्रवत्स्वाहुतः ॥३३॥ सदुद्रवत्स्वाहुतःसदु-

द्रूद्रवत्स्वाहुतꣳ । सुब्रह्मायज्ञः सुशमीव्वसूनान्देवꣳराधोजनानाम्
॥ ३४ ॥ अग्नेव्वाजस्यगोमतऽईशानꣳसहसोयहो । अस्मेधेहिजातवे-
दोमहिश्श्रवः ॥ ३५ ॥ सऽइधानोव्वसुष्कविरग्निरीडेन्योगिरा ।
रेवदस्मभ्यम्पुर्व्वणीकदीदिहि ॥ ३६ ॥ क्षपोराजन्नुतत्मनाग्नेव्व-
स्तोरुतोषसः । सतिग्मजम्भरक्षसोदहप्प्रति ॥ ३७ ॥ भद्रोनोऽअ-
ग्निराहुतोभद्राराति सुभगभद्रोऽअध्वरः । भद्राऽउतप्प्रशस्तयꣳ
॥ ३८ ॥ भद्राऽउतप्प्रशस्तयोभद्रम्मनः कृणुष्वव्वृत्रतूर्य्ये । येना·
समत्सुसासहः ॥ ३९ ॥ येनासमत्सुसासहोवस्थिरातनुहिभूरिशा-
र्द्धताम् । व्वनेमातेऽअभिष्टिभिꣳ ॥ ४० ॥ अग्निन्तम्मन्न्येयोव्वसुर-

स्तंयंयन्तिधेनवंः । अस्तमर्वन्तऽआशवोस्तन्नित्यासोव्वाजिनऽ-
इषंᳯस्तोतृभ्यऽआभर ॥४१॥ सोअग्निर्य्योंव्वसुर्गृणेसंयमायन्तिधे-
नवंः । समर्वन्तोरघुद्रुवःसᳯसुजातासंः सूरयऽइषंᳯस्तोतृभ्यऽ-
आभर ॥ ४२ ॥ उभेसुंश्चन्द्रसर्प्पिषोदर्व्वीश्रीणीषऽआसनि । उतो-
नऽउत्पुंपूर्य्याऽउक्थेषुशवसस्पतऽइषंᳯस्तोतृभ्यऽआभर ॥ ४३ ॥
अग्नेतमद्याश्श्वन्नस्तोमैःक्क्रतुन्नभद्रᳯहृदिस्पृशम् । ऋद्ध्यामात-
ऽओहैः ॥ ४४ ॥ अधाह्यग्नेक्क्रतोर्भद्रस्यदक्षस्यसाधोः । रथी-
ऋतस्यबृहतोबभूर्थ ॥ ४५ ॥ एभिर्न्नोऽअर्क्कैर्भवानोऽअर्व्वाङ्क्स्व-
र्ण्णज्ज्योतिः । अग्नेव्विश्श्वेभिःसुमनाऽअनीकैः ॥ ४६ ॥ अग्निᳯ

होतारम्मन्न्येदास्वन्तंव्वसुꣳसूनुꣳसहसोजातवेदसंव्विप्प्रन्नजातवेद-
सम्। यऽऊर्द्ध्वयास्वद्ध्वरोदेवोदेवाच्च्याकृपा। घृतस्यव्विब्भ्राष्ट्टि-
मनुवष्ट्टिशोचिषाजुह्ह्वानस्यसर्प्पिषः॥ ४७॥ अग्ग्नेत्त्वन्नोऽअन्तमऽ-
उतत्त्राताशिवोभवाव्वरूत्थ्यः। व्वसुरग्निर्व्वसुश्रवाऽअच्छानक्षि-
द्युमत्तमꣳरयिन्दाः। तन्त्वाशोचिष्ठदीदिवꣳसुम्नायनूनमीमहेसखि-
भ्भ्यः॥ ४८॥ येनऽऋषयस्तपसासत्त्रमायन्निन्धानाऽअग्निꣳस्वराभ-
रन्तः। तस्मिन्नहन्निदधेनाकेऽअग्निꣳयमाहुर्म्मनवस्तीर्णबर्हिषम्॥४९॥
तम्पत्नीभिरनुगच्छेमदेवाःपुत्त्रैर्ब्भ्रातृभिरुतवाहिरण्ण्यैः। नाकङ्गृ-
भ्णानाःसुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः॥ ५०॥ आवाचो-

मद्धर्व्यंमरुहद्भुरण्युरयमग्निःसत्पतिश्चेकितानः । पृष्ठेपृथिव्या-
निहितोदविद्युतदधस्पदङ्कृणुतांयेपृतन्न्यवः ॥ ५१ ॥ अयमग्नि-
र्व्वीरतमोव्वयोधाःसहस्रियोद्योततामप्प्रयुच्छन् । विभ्राजमानः
सरिरस्यमद्ध्यऽउपप्प्रयाहिदिव्व्यानिधाम ॥ ५२ ॥ सम्प्रच्च्यवद्ध्व-
मुपसम्प्रयाताग्नेपथोदेवयानान्कृणुद्ध्वम् । पुनः कृण्ण्वानापितरा-
युवानान्वाताꣳसीत्त्वयितन्तुमेतम् ॥ ५३ ॥ उद्बुद्ध्यस्वाग्नेप्प्रति-
जागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च । अस्मिन्त्सधस्थेऽअद्ध्युत्त-
रस्मिन्विश्श्वेदेवायजमानश्चसीदत ॥ ५४ ॥ येनव्वहसिसहस्रंयेना-
ग्नेसर्व्ववेदसम् । तेनेमंयज्ञन्नोनयस्वर्देवेषुगन्तवे ॥ ५५ ॥ अयन्ते

योनिर्ऋत्वियोयतोजातोऽअरोचथाः । तञ्जानन्नग्नऽआरोहाथानोवर्-
द्धयारयिम् ॥ ५६ ॥ तपश्चतपस्यश्चशैशिरावृतूऽअग्नेरन्तःश्लेषो-
सिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयः
पृथङ्ममज्यैष्ठ्यायसव्रताः । येऽअग्नयःसमनसोन्तराद्यावापृ-
थिवीऽइमे । शैशिरावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंवि-
शन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ५७ ॥ परमेष्ठीत्वासादयतु
दिवस्पृष्ठेज्योतिष्मतीम् । विश्वस्मैप्राणायापानायव्यानाय-
विश्वञ्ज्योतिर्य्यच्छ । सूर्य्यस्तेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवा-
सीद ॥ ५८ ॥ लोकम्पृणछिद्रम्पृणाथोसीदध्रुवात्वम् । इन्द्राग्नी-

त्वाबृहस्प्पतिरस्मिन्न्योनावसीषदन् ॥ ५९ ॥ ताऽअस्यसूददोहसः
सोमंश्रीणन्तिपृश्नयः । जन्मन्देवानांव्विशस्त्रिष्ष्वारोचनेदिवः
॥ ६० ॥ इन्द्रंव्विश्श्वाऽअवीवृधन्त्समुद्रव्व्यचसङ्गिरः । रथीतमᳪरथीनांव्वाजानाᳪसत्पतिम्पतिम् ॥ ६१ ॥ प्रोथदश्श्वोनयवसेविष्ष्यन्यदामहःसंव्वरणाद्व्यस्त्थात् । आदस्यव्वातोऽअनुवातिशोचिरधस्म्मतेव्व्रजनङ्कृष्ष्णमस्ति ॥ ६२ ॥ आयोष्ट्वासदनेसादयाम्यवतश्छायायाᳪसमुद्रस्यहृदये । रश्मीवतीम्भास्वतीमायाद्यांम्भास्यापृथिवीमोर्व्वन्तरिक्षम् ॥ ६३ ॥ परमेष्ठीत्वासादयतुदिवस्पृष्ठेव्व्यचस्वतीम्प्रथस्वतीन्दिवंयच्छदिवन्दृᳪहदिवम्माहिᳪसीः । व्विश्श्व-

स्मै॑प्राणाया॑पानाय॑व्यानायो॑दानाय॑प्रतिष्ठायै॑चरित्राय । सूर्य॑-
स्त्वाभिपा॑तुमह्या॑स्वस्त्याच्छर्दिषा॑शन्त॑मेनतयादे॑वत॑याङ्गिर॑स्वद्ध्रुवे-
सीदतम् ॥ ६४ ॥ सहस्र॑स्यप्रमा॑सिसहस्र॑स्यप्रतिमा॑सिसहस्र॑स्यो-
न्मा॑सिसाहस्रो॑सिसहस्रा॑यत्त्वा ॥ ६५ ॥ इति पञ्चदशोऽध्यायः ।

## ❀ अथ षोडशोऽध्यायः ❀

ॐ नम॑स्तेरुद्रमन्न्यव॑ऽउतोत॑ऽइष॑वेनम॑ः । बाहुभ्या॑मुततेनम॑ः
॥ १ ॥ यातेरुद्रशिवा॑तनूरघोरा॑पापकाशिनी । तयान॑स्तन्न्वाशन्त॑-
मयागिरि॑शन्ताभिचा॑कशीहि ॥ २ ॥ यामिषुं॑गिरिशन्तहस्ते॑बिभर्ष्य॑-

स्तवे । शि॒वाङ्गि॑रित्र॒ ताङ्कु॑रु॒ मा हि॑ꣳसी॒: पुरु॑षं॒ जग॑त् ॥ ३ ॥ शि॒वेन॒ त्वा॒ व॒च॑सा॒ त्वा॒ गिरि॒शाच्छा॑ वदामसि । यथा॑ नः॒ सर्व॒मिज्जग॑दय॒क्ष्मꣳ सु॒मना॒ऽअस॑त् ॥ ४ ॥ अध्य॑वोचदधिव॒क्ता प्र॑थ॒मो दैव्यो॑ भि॒षक् । अहीँ॑श्च

---

१—'ककारान्ते टकारान्ते ङणे तर्जनिकां नमेत् । पञ्चाङ्गुल्यस्पकारे च तकारे कुण्डलाकृतिः । ( या० शि० श्लो० ६२ ) 'अध्यवोच० षक्' ( शु० य० सं० १६।५ ) इत्यादिस्थले । टकारे—'सꣳ सत्रव त्राट्' ( २।१८ ) इत्यादौ । ङणयोस्तूदाहरणे पदपाठवतो ज्ञेये । तथाहि—ङकारे—'दध्यङ्' ( ११।२० ) इत्यादौ । णकारे—'वृषण्वसू इति' वृषण् ( ११।११ ) इत्यादौ । पकारे—'गायत्री त्रिष्टुप्' ( २३।३३ ) इति प्रतीकोदाहरणम् । तकारे—'सह० पात्' ( ३।१ ) इत्यादिस्थले ।

२—'अहीन् च' अत्र 'चछयोः शम्' इत्यनेन चकारछकारयोः प्रत्यययोः ( परयोः )

सर्व्वाँञ्जम्भयन्त्सर्व्वाँश्चयातुधान्न्योधराचीः परासुव ॥ ५ ॥ असौ-
यस्ताम्म्रोऽअरुणऽउतबब्भ्रुः सुमङ्गलः । येचैनꣳरुद्द्राऽअभितोदि-
क्षुश्रिताः सहस्रशोवैषाꣳहेडऽईमहे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्ग्री-
वोव्विलोहितः । उतैनङ्गोपाऽअदृश्श्रन्नदृश्श्रन्नुदहार्य्यः सदृष्टोमृड-
यातिनः ॥ ७ ॥ नमोस्तुनीलग्ग्रीवायसहस्राक्षायमीढुषे । अथोयेऽअ-
स्यसत्वानोहन्तेब्भ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्न्वनस्त्वमुभयोरा-
र्त्न्योर्ज्ज्याम् । याश्चतेहस्तऽइषवः परातभगवोव्वप ॥ ९ ॥ वि-

---

नकारमापद्यते उपधाचानुस्वारेण व्यवधीयते । छकारोदाहरणे तु मूलं मृग्यम् । किन्तु रूपोदाहरणं विद्यते विद्वान् छकारः, विद्वाँश्छकारः ।

ज्ज्यन्धनुं÷कपर्द्दिनोव्विशल्ल्योबाणवाँ २ उत । अनेशन्नस्ययाऽइषवऽ-
आभुरस्यनिषङ्गधिः॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवतेधनुः ।
तयास्म्मान्न्विश्श्वतस्त्वमयक्ष्म्मयापरिभुज ॥ ११ ॥ परितेधन्न्वनो-
हेतिरस्म्मान्न्वृणक्क्तुव्विश्श्वतं÷ । अथोयऽइषुधिस्तवारेऽअस्म्मन्नि-
धेहितम् ॥ १२ ॥ अवतत्त्यधनुष्ट्वꣳसहस्राक्षशतेषुधे । निशीर्य्यशल्ल्या-
नाम्मुखाशिवोनं÷सुमनाभव ॥ १३ ॥ नमस्तऽआयुधायानाततायधृ-
ष्ण्णवे । उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥ १४ ॥ मानोमहा-
न्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् । मानोव्वधीꣳ-
पितरम्मोतमातरम्मानं÷प्प्रियास्तन्न्वोरुद्द्ररीरिषꣳ ॥ १५ ॥ मानं-

स्तोके। तन्नयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः। मानो-
व्वीरान्न्रुद्द्रभामिनोव्वधीर्हविष्म्मन्तःसदमित्त्वाहवामहे ॥ १६ ॥
[ शतम् ८०० ] नमोहिरण्ण्यबाहवेसेनान्न्येदिशाञ्चपतयेनमोनमो-
वृक्षेब्भ्योहरिकेशेब्भ्यःपशूनाम्पतयेनमोनमः शष्प्पिञ्जरायत्त्विषीम-
तेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्ट्टानाम्पतयेनमः ॥१७॥
नमोबब्भ्लुशायव्व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्त्यैजगताम्पत-
येनमोनमोरुद्द्रायाततायिनेक्षेत्त्राणाम्पतयेनमोनमः सूतायाहन्त्यैव्व-
नानाम्पतयेनमः ॥ १८ ॥ नमोरोहितायस्त्थपतयेव्वृक्षाणाम्पतयेन-
मोनमोभुवन्तयेव्वारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेव्वाणि-

जायकक्षाणाम्पतयेनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतये-
नमः ॥ १९ ॥ नमः कृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमोनमः सह-
मानायनिव्याधिनऽआव्याधिनीनाम्पतयेनमोनमोनिषङ्गिणेककुभा-
यस्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्यानाम्पतयेनमः॥२०॥
नमोवञ्चतेपरिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणऽइषुधिमतेत-
स्कराणाम्पतयेनमोनमः सृकायिभ्योजिघांसद्भ्योमुष्णताम्पत-
येनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः ॥ २१ ॥
नमऽउष्णीषिणेगिरिचरायकुलुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वा
यिभ्यश्चवोनमोनमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमोन-

मंऽआयच्छुद्भ्योस्यंद्भ्यश्च्चवोनमोनमं÷ ॥ २२ ॥ नमोंव्विसृजद्भ्यो-
व्विद्ध्यद्भ्यश्च्चवोनमोनमं÷ स्वपद्भ्योजाग्ग्रद्भ्यश्च्चवोनमोनमंःश-
यानेभ्यऽआसीनेभ्यश्श्चवोनमोनमस्तिष्ठंद्भ्योधावंद्भ्यश्च्चवोनमं÷
॥ २३ ॥ नमं÷ सभाब्भ्यं÷ सभापंतिभ्यश्च्चवोनमोनमोश्श्वेब्भ्योश्श्वं-
पतिभ्यश्च्चवोनमोनमंऽआव्याधिनीब्भ्योव्विविद्ध्यंन्तीभ्यश्श्चवोन-
मोनमऽउगंणाब्भ्यस्तृꣳहतीब्भ्यंश्च्चवोनमं÷ ॥ २४ ॥ नमोंगणेब्भ्यो
गणपंतिभ्यश्च्चवोनमोनमोव्व्रातेब्भ्योव्व्रातंपतिभ्यश्च्चवोनमोनमोगृ-
त्सेब्भ्योगृत्संपतिभ्यश्च्चवोनमोनमोंव्विरूपेब्भ्योव्विश्श्वरूंपेभ्यश्च्च-
वोनमं÷ ॥ २५ ॥ नमꣳसेनाब्भ्यꣳसेनानिब्भ्यंश्च्चवोनमोनमोंरथिब्भ्यो-

ऽअरथेब्भ्यश्चवोनमोनमः क्षत्तृब्भ्यः सङ्ग्रहीतृब्भ्यश्चवोनमोनमोम-
हद्भ्योऽअर्ब्भकेब्भ्यश्चवोनमः ॥ २६ ॥ नमस्तक्षब्भ्योरथकारेब्भ्य-
श्चवोनमोनमꣳ कुलालेब्भ्यꣳ कर्म्मारेब्भ्यश्चवोनमोनमोनिषादेब्भ्यः पु-
ञ्जिष्ठेब्भ्यश्चवोनमोनमः श्वनिब्भ्योमृगयुब्भ्यश्चवोनमः ॥ २७ ॥
नमꣳ श्वब्भ्यꣳ श्वपतिब्भ्यश्चवोनमोनमोभवायचरुद्द्रायचनमः शर्व्वा-
यचपशुपतयेचनमोनीलग्ग्रीवायचशितिकण्ठायच ॥ २८ ॥ नमः क-
पर्द्दिनेचव्व्युप्तकेशायचनमः सहस्राक्षायचशतधन्न्वनेचनमोगिरिश-
यायचशिपिविष्टायचनमोमीढुष्टमायचेषुमतेच ॥ २९ ॥ नमोह्र-
स्वायचव्वामनायचनमोबृहतेचव्वर्षीयसेचनमोव्वृद्धायचसव्वृधेचनः

मोऽग्र्यायचप्रथमायच ॥ ३० ॥ नमऽआशवेचाजिरायचनमः शी-
घ्र्यायचशीभ्यायचनमऽऊर्म्म्यायचावस्वन्यायचनमो नादेयायच-
द्वीप्यायच ॥ ३१ ॥ नमो ज्ज्येष्ठायचकनिष्ठायचनमः पूर्व्वजाय-
चापरजायचनमोमध्यमायचापगल्भायचनमो जघन्यायचबुध्न्या-
यच ॥ ३२ ॥ नमः सोभ्यायचप्रतिसर्य्यायचनमोयाम्म्यायचक्षे-
म्म्यायचनमः श्लोक्यायचावसान्यायचनमऽउर्व्वर्य्यायचखल्यायच
॥ ३३ ॥ नमोवन्यायचकक्ष्यायचनमः श्रवायचप्रतिश्रवायचनमऽ-
आशुषेणायचाशुरथायचनमः शूरायचावभेदिनेच ॥ ३४ ॥ नमो बि-
ल्मिनेचकवचिनेचनमोवर्म्मिणेचवरूथिनेचनमः श्रुतायचश्रुतसे-

नायचनमोदुन्दुभ्यायचाहनन्यायच ॥ ३५ ॥ नमोधृष्णवेचप्रमृशा-
यचनमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमः स्वायु-
धायचसुधन्वनेच ॥३६॥ नमःस्रुत्यायचपथ्यायचनमःकाट्यायचनी-
प्यायचनमःकुल्यायचसरस्यायचनमोनादेयायचवैशन्तायच ॥३७॥
नमःकूप्यायचावट्यायचनमोवीध्र्यायचातप्यायचनमोमेघ्याय-
चविद्युत्यायचनमोवर्ष्यायचावर्ष्यायच ॥ ३८ ॥ नमोवात्याय-
चरेष्म्यायचनमोवास्तव्यायचवास्तुपायचनमःसोमायचरुद्रा-

---

१—'भवे छन्दसि' ४।४।११० । इति सूत्रेण यत्प्रत्यये ।

यंचनमस्ताम्म्रायंवारुणायच ॥ ३९ ॥ नमः शङ्गवेच पशुपतयेचनमऽ-
उग्रायंचभीमायंचनमोऽग्रेवधायंचदूरेवधायंचनमोहन्त्रेचहनीयसेच-
नमोवृक्षेभ्योहरिकेशेभ्योनमस्तारायं ॥४०॥ नमः शम्भवायंचमयोभ-
वायंचनमः शङ्करायंचमयस्करायंचनमः शिवायंचशिवतरायच ॥ ४१ ॥
नमः पार्य्यायचावार्य्यायचनमः प्रतरणायचोत्तरणायचनमस्तीर्थ्या-
यचकूल्ल्यायचनमः शष्प्यायचफेन्न्यायच ॥४२॥ नमः सिकत्यायचप्र-
वाह्यायचनमः किंशिलायंचक्षयणायंचनमः कपर्द्दिनेचपुलस्तयेचन-
मऽइरिण्यायचप्रपथ्यायच ॥ ४३ ॥ नमोव्रज्यायचगोष्ठ्यायचनम-
स्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवेष्प्यायचनमः काट्यायच-

गह्वरेष्ठाय च ॥४४॥ नमः शुष्क्याय च हरित्याय च नमः पाᳬसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ ४५ ॥ नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाᳬहृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥४६॥ द्रापे अन्धसस्पते दरिद्र नीललोहित । आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किञ्चनाममत् ॥४७॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ४८ ॥

यातेरुद्द्रशिवातनूःशिवाव्विश्श्वाहाभेषजी । शिवारुतस्यभेषजीत-
यानोमृडजीवसे ॥ ४९ ॥ परिनोरुद्द्रस्यहेतिर्व्वृणक्तुपरित्वेषस्यदुर्म्म-
तिरघायोः । अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृ-
ड ॥ ५० ॥ मीढुष्टमशिवतमशिवोनः सुमनाभव । परमेव्वृक्षऽआ-
युंधन्निधायकृत्तिंव्वसानऽआचरपिनाकम्बिभ्भ्रदागहि ॥ ५१ ॥ व्वि-
किरिद्द्रव्विलोहितनमस्तेऽअस्तुभगवः । यास्तेसहस्रꣳहेतयोन्न्यम-

---

१—इत्यत्र शाकटायनमते 'परिणऽइतिशाकटायनः' (३।८८) इत्यनेन परिण इति निपात्यते । सोऽपि व्यवस्थितः काण्वादेर्भवति न माध्यन्दिनीनाम् । वाजसनेयिनां तु णत्वरहितः पाठः ।

स्म्मन्निवपन्तु ता॒ऽ॑ ॥ ५२ ॥ स॒हस्त्रा॑णि सहस्त्र॒शो बा॒ह्वोस्त॑व हे॒तय॑ः ।
ता॒सा॒मीशा॑नो भगवः परा॒ची॒ना मु॒खा कृ॑धि ॥ ५३ ॥ अ॒सं॒ख्या॒ता स॒ह॒-
स्त्रा॑णि॒ ये रु॒द्रा॒ऽअधि॒ भूम्या॑म् । ते॒षा॑ᳫं सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्म॒-
सि ॥५४॥ अ॒स्मिन्म॑ह॒त्य॑र्ण॒वे॒न्तरि॑क्षे भ॒वा॒ऽअधि॑ । तेषा॑ᳫं सहस्रयो-
ज॒ने॒ऽव॒ धन्वा॑नि तन्मसि ॥ ५५ ॥ नील॑ग्रीवाः शिति॒कण्ठा॒ दिव॑ᳫं रु॒द्रा॒-
ऽउप॑श्रिताः । तेषा॑ᳫं सहस्रयोजनेऽव धन्वा॑नि तन्मसि ॥ ५६ ॥ नील॑-
ग्रीवाः शिति॒कण्ठाः॑ श॒र्वा॒ऽअ॒धः क्ष॑माच॒राः । तेषा॑ᳫं सहस्रयोजनेऽव॒ध-
न्वा॑नि तन्मसि ॥ ५७ ॥ ये वृ॒क्षेषु॑ श॒ष्पिञ्ज॑रा॒ नील॑ग्रीवा॒ विलो॑हि-
ताः । तेषा॑ᳫं सहस्रयोज॒नेऽव॒ धन्वा॑नि तन्मसि ॥ ५८ ॥ ये भू॒ताना॒म॒-

धिपतयोव्विशिखासं÷ कपर्द्दिन÷। तेषाᳬसहस्रयोजनेवधन्न्वानि-
तन्न्मसि ॥ ५९ ॥ येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्य्युध÷। तेषाᳬ
सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६० ॥ येतीर्त्थानिप्प्रचरन्तिसृका-
हस्तानिषङ्गिण÷। तेषाᳬसहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६१ ॥ ये-
न्नेषुव्विविद्ध्यन्तिपात्रेषुपिबतोजनान्। तेषाᳬसहस्रयोजनेवधन्न्वानि-
तन्न्मसि ॥६२॥ यऽएतावन्तश्चभूयाᳬसश्चदिशोरुद्द्रावितस्त्थिरे।
तेषाᳬसहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६३ ॥ नमोस्तुरुद्द्रेब्भ्यो
येदिवियेषांव्वर्षमिषवं। तेब्भ्योदशप्प्राचीर्द्दशदक्षिणादशप्प्रतीचीर्द्द-
शोदीचीर्द्दशोर्द्ध्वा÷। तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेय-

न्द्विष्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥ नमोऽस्तुरुद्द्रेभ्यो
येन्तरिक्षेयेषांवातऽइषवः । तेभ्योदशप्राचीर्द्दशदक्षिणादशप्रती-
चीर्द्दशोदीचीर्द्दशोर्द्ध्वाः । तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुते-
यन्द्विष्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ नमोऽस्तुरुद्द्रे-
भ्योयेपृथिव्यांयेषामन्नमिषवः । तेभ्योदशप्राचीर्द्दशदक्षिणादश-
प्रतीचीर्द्दशोदीचीर्द्दशोर्द्ध्वाः । तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृड-
यन्तुतेयन्द्विष्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥ इति
संहितायां षोडशोऽध्यायः ।

# ❀ अथ सप्तदशोऽध्यायः ❀

ॐ अश्मन्नूर्जम्पर्वते शिश्रियाणामद्भ्यऽओषधीभ्यो वनस्पतिभ्यो अधिसम्भृतम्पयः। ताम्नऽइषमूर्जन्धत्त मरुतः सᳬरराणाऽअश्मँस्ते क्षुन्मयि तऽऊर्ग्यन्द्विष्मस्तन्ते शुगृच्छन्तु ॥ १ ॥ इमा मेऽअग्नऽइष्टकाधेनवः सन्त्वेका च दश च दश च शतञ्च शतञ्च सहस्रञ्च सहस्रञ्चायुतञ्चायुतञ्च नियुतञ्च नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्द्धश्चैता मेऽअग्नऽइष्टकाधेनवः सन्त्वमुत्रामुष्मिंल्लोके ॥ २ ॥ ऋतवस्स्थऽऋतावृधऽऋतुष्ठास्स्थऽऋतावृधः ।

घृतश्च्चुतोमधुश्च्चुतोव्विराजोनामकामदुघाऽअक्षीयमाणाः ॥ ३ ॥
समुद्रस्यत्वावकयाग्नेपरिव्ययामसि । पावकोऽअस्म्मब्भ्यँशिवो-
भव ॥ ४ ॥ हिमस्यत्त्वाजरायुणाग्नेपरिव्ययामसि । पावकोऽअस्म्म-
ब्भ्यँशिवोभव ॥ ५ ॥ उपज्ज्मन्नुपवेतसेवतरनदीष्ष्वा । अग्नेपित्त-
मपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञम्पावकवर्णँशिवङ्कृधि
॥ ६ ॥ अपामिदन्न्ययनँसमुद्रस्यनिवेशनम् । अन्न्याँस्तेऽअस्म्मत्त-
पन्तुहेतयः पावकोऽअस्म्मब्भ्यँशिवोभव ॥ ७ ॥ अग्नेपावकरोचि-
षामन्द्रयादेवजिह्व्वया । आदेवान्न्वक्षियक्षिच ॥ ८ ॥ सनः पावक-
दीदिवोग्नेदेवाँ२ऽइहावह । उपयज्ञँहविश्चनः ॥ ९ ॥ पावकयाय-

श्चितयंन्त्याकृपात्त्वामंन्नुरुचऽउषसोनभानुना । तूर्व्वन्नयामन्नेतंशस्य-
नूरणऽआयोघृणेनंततृषाणोऽअजरं ÷ ॥ १० ॥ नमंस्तेहरंसेशोचिषेन-
मंस्तेऽअस्त्वर्च्चिषे । अन्न्याँस्तेऽअस्म्मत्तंपन्तुहेतयं ÷ पावकोऽअस्म्म-
ब्भ्यंᳪशिवोभंव ॥ ११ ॥ नृषदेव्वेडंप्सुषदेव्वेड्ड्वर्हिषदेव्वेड्ड्वंनसदे-
व्वेट्स्वर्व्विदेव्वेट् ॥ १२ ॥ येदेवादेवानांय्यज्ञियायज्ञियानाᳪसंव्वत्स-
रीणमुपंभागमासंते । अहुतादोंहविषोंयज्ञेऽअस्म्मिन्त्स्वयम्पिबन्तुम-
धुंनोघृतस्यं ॥१३॥ येदेवादेवेष्ष्वधिंदेवत्त्वमायन्न्येब्रह्मंणᳪपुरऽएतारोंऽ-
अस्य । येब्भ्योनऽऋतेपवंतेधामकिञ्चननतेदिवोनपृंथिव्व्याऽअधिस्नु-
षुं ॥ १४ ॥ प्राणदाऽअंपानदाव्व्यानदाव्वंर्च्चोदाव्वंरिवोदाः । अन्न्याँ-

स्तेऽअस्मत्त्तपन्तुहेतयः पावकोऽअस्मभ्यंᳫशिवोभव ॥ १५ ॥ अ-
ग्निस्तिग्ग्मेनशोचिषायासद्विश्श्वन्न्यत्त्रिणम् । अग्निर्न्नोव्वनतेरयिम्
॥ १६ ॥ यऽइमाव्विश्श्वाभुवनानिजुह्वदृषिर्होतान्न्यसीदत्पितानः ।
सऽआशिषाद्रविणमिच्छमानःप्रथमच्छदवराँ२ऽआविवेश ॥ १७ ॥
किᳫंस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वित्कथासीत् । यतोभूमिं-
ञ्जनयन्न्विश्श्वकर्म्माव्विद्यामौर्णोन्महिनाव्विश्श्वचक्षाः ॥ १८ ॥
व्विश्श्वतश्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वतस्पात् ।
सम्बाहुब्भ्यान्धमतिसम्पतत्त्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १९ ॥
किᳫंस्विद्वनङ्कऽउसव्वृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः । मनी-

षिणोमनसापृच्छतेदुतद्यदद्ध्यतिष्ठद्भुवनानिधारयन् ॥ २० ॥ या-
तेधामानिपरमाणियावमायामध्यमाव्विश्वकर्म्मन्नुतेमा । शि-
क्षासखिभ्योहविषिस्वधावःस्वयंयजस्वतन्न्वंव्वृधानः ॥ २१ ॥
व्विश्वकर्म्मन्न्हविषाव्वावृधानःस्वयंयजस्वपृथिवीमुतद्याम् ।
मुह्यन्त्वन्न्येऽअभितःसपत्नाऽइहास्माकम्मघवासूरिरस्तु ॥ २२ ॥
व्वाचस्पतिंव्विश्वकर्म्माणमूतयेमनोजुवंव्वाजेऽअद्याहुवेम । स-
नोव्विश्वानिहवनानिजोषद्विश्वशम्भूरवसेसाधुकर्म्मा ॥ २३ ॥ व्वि-
श्वकर्म्मन्न्हविषाव्वर्द्धनेनत्रातारमिन्द्रमकृणोरवध्यम् । तस्मैव्विशः
समनमन्तपूर्व्वीरयमुग्ग्रोव्विहव्व्योयथासत् ॥ २४ ॥ चक्षुषःपिता-

मनसाहिधीरोघृतमेनेऽअजनन्नम्नमाने । यदेदन्ताऽअदहन्तपूर्व्वऽ-
आदिद्द्यावापृथिवीऽअप्रथेताम् ॥ २५ ॥ विश्वकर्म्माविमनाऽआ-
द्विहायाधाताविधातापरमोतसन्दृक् । तेषामिष्टानिसमिषामदन्तियत्रा-
सप्तऽऋषीन्परऽएकमाहुः ॥ २६ ॥ योनः पिताजनितायोविधा-
ताधामानिव्वेदभुवनानिविश्वा । योदेवानान्नामधाऽएकऽएवतᳯं-
सम्प्रश्नम्भुवनायन्त्यन्या ॥ २७ ॥ तऽआयजन्तद्रविणᳯंसमस्माऽ-
ऋषयᳯंपूर्व्वेजरितारोनभूना । असूर्त्तेसूर्त्तेरजसिनिषत्तेयेभूतानिसम-
कृण्ण्वन्निमानि ॥२८॥ परोदिवापरऽएनापृथिव्यापरोदेवेभिरसुरैर्यद-
स्ति । कᳯंस्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमपश्यन्तपूर्व्वे

॥ २९ ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥ ३० ॥ न तं विदाथ यऽइमा जजानान्यद्युष्माकमन्तरम्बभूव। नीहारेण प्रावृता जल्प्या चासुतृपऽउक्थशासश्चरन्ति ॥ ३१ ॥ विश्वकर्मा ह्यजनिष्ट देवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः। तृतीयः पिता जनितौषधीनामपाङ्गर्भं व्यदधात्पुरुत्रा ॥ ३२ ॥ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनो-

---

१—आशुः शिशानो २—अदितिः षोडशाक्षरेण ९।३४। देवो वः सविता १।१) इत्यादिस्थलेषु शाकटायनमते—'प्रत्ययसर्वेषाम्मुदिशाकटायनः' (३।९)'इति सूत्रेण

निमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः ॥ ३३ ॥ सङ्क्रन्दनेनानिमिषेण । जिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना । तदिन्द्रेणजयततत्सहद्ध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥ ३४ ॥ सऽइषुहस्तैः सनिषङ्गिभिर्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन । सꣳसृष्टजित्सोमपाबाहुशर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ३५ ॥ बृहस्पतेपरिदीया-

---

शषसामुत्संज्ञकेषु परभूतेषु विसर्जनीयः परसवर्णमापद्यते' इत्यनेन विकल्पमेव स्पष्टयति । 'अविकारं॰ शाकल्यः शषसेषु' ( ३।१० ) शषसेषु परभूतेषु विसर्जनीयस्य विकारन्न मन्यते । अर्थात्—विसर्जनीयो नान्य इत्यर्थः । तथापि अत्र यथासंप्रदायं पाठव्यवस्था । अत्रैकैकप्रयोगलेखनयुक्तम् ।

रथेनरक्षोहामित्राँ२ऽअपबाधमानः । प्रभञ्जन्त्सेनाःप्रमृणोयुधाज-
यन्नस्माकमेद्ध्यविता रथानाम् ॥ ३६ ॥ बलविज्ञायस्थविरःप्रवी-
रःसहस्वान्वाजीसहमानऽउग्रः । अभिवीरोऽअभिसत्त्वासहोजाजै-
त्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदङ्गोविदंवज्रबाहुञ्जय-
न्तमज्ज्मप्रमृणन्तमोजसा । इमꣳसजाताऽअनुवीरयद्ध्वमिन्द्रꣳस-
खायोऽअनुसꣳरभद्ध्वम् ॥ ३८ ॥ अभिगोत्राणिसहसागाहमानोदयो-
व्वीरःशतमन्युरिन्द्रः । दुश्च्यवनःपृतनाषाडयुद्ध्योस्माकꣳसे-
नाऽअवतुप्रयुत्सु ॥ ३९ ॥ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपु-
रऽएतुसोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्व-

ग्ग्रम् ॥ ४० ॥ इन्द्रस्यव्वृष्णोव्वरुणस्यराज्ञऽआदित्यानाम्मरुताꣳ-
शर्द्धऽउग्ग्रम् । महामनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयतामुद-
स्थात् ॥ ४१ ॥ उद्धर्षयमघवन्नायुधान्न्युत्सत्त्वनाम्मामकानाम्म-
नाꣳसि । उद्वृत्रहन्वाजिनांव्वाजिनान्न्युद्रथानाञ्जयताम्यन्तुघो-
षाः ॥ ४२ ॥ अस्म्माकमिन्द्रः समृतेषुद्ध्वजेष्ष्वस्म्माकंया॒ऽइषवस्ता-
जयन्तु । अस्म्माकंव्वीराऽउत्तरेभवन्त्वस्म्माँ२ऽउदेवाऽअवताहवेषु
॥ ४३ ॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्न्यप्प्वेपरेहि । अभि-
प्प्रेहिनिर्द्दहहृत्सुशोकैरन्धेनामित्त्रास्तमसासचन्ताम् ॥ ४४ ॥ अवसृ-
ष्टापरापतशरव्व्येब्रह्मसꣳशिते । गच्छामित्त्रान्न्प्रपद्यस्वमामी-

षाङ्क्ष्वनोच्छिषः ॥ ४५ ॥ प्रेताजयतानरऽइन्द्रोवःशर्म्मयच्छतु ।
उग्राव ÷ सन्तुबाहवोनाधृष्याथथासथ ॥ ४६ ॥ असौयासेनामरु-
तःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना । ताङ्गूहततमसापंव्रतेनय-
थामीऽअन्योऽअन्यन्नजानन् ॥ ४७ ॥ यत्रबाणाःसम्पतन्तिकुमारा-
विशिखाऽइव । तन्नऽइन्द्रोबृहस्पतिरदितिःशर्म्मयच्छतुविश्वाहा-
शर्म्मयच्छतु ॥४८॥ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृते-

---

१—'शकारे च' (४।९६) इत्यनेन शकारे च प्रत्यये परे तकारवर्गश्चकारवर्गमा-
पद्यते । एवम्—तच्छकेयम् (१।५) स्वधावान्छुक्रः (२३।५) आदित्यान्छ्मश्रुभिः
(२५।१) इत्यादौ ।

नानुवस्ताम् । उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु
॥४९॥ उदेनमुत्तरान्नयाग्नेघृतेनाहुत। रायस्पोषेणसᳪं सृजप्रजयाच-
बहुङ्कृधि ॥५०॥ [शतम् ९००] इन्द्रेमम्प्रतरान्नयसजातानामसद्वृ-
शी । समेनंव्वर्च्चसासृजदेवानाम्भागदाऽअसत् ॥ ५१ ॥ यस्य-
कुर्म्मोगृहेहविस्तमग्नेव्वर्द्धयात्वम् । तस्मै देवाऽअधिब्रुवन्नयञ्च-
ब्रह्मणस्पतिः ॥ ५२ ॥ उदुत्वाव्विश्वेदेवाऽअग्नेभरन्तुचित्ति-
भिः । सनोभवशिवस्त्वᳪं सुप्रतीकोव्विभावसुः ॥ ५३ ॥ पञ्चदिशो-
दैवीर्यज्ञमवन्तुदेवीरपामतिन्दुर्म्मतिम्बाधमानाः । रायस्पोषेयज्ञ-
पतिमाभजन्तीरायस्पोषेऽअधियज्ञोऽअस्त्थात् ॥ ५४ ॥ समिद्धेऽअ-

ग्रावधिमामहानऽउक्थपत्रऽईड्ड्योगृभीतः । तप्तङ्घर्म्मम्परिगृह्यायज-
न्तोर्ज्जायद्यज्ञमयजन्तदेवाः ॥ ५५ ॥ दैव्व्यायधर्त्रेजोष्ट्रेदेवश्श्रीः-
श्श्री[1]मनाꣳशतपयाꣳ । परिगृह्यदेवायज्ञमायन्देवादेवेब्भ्योऽअद्ध्वर्य्य-
न्तोऽअस्त्थुꣳ ॥ ५६ ॥ व्वीतꣳहविः । शमितꣳशमितायजद्ध्यैतुरी-
योयज्ञोयत्रहव्व्यमेति । ततोव्वाकाऽआशिषोनोजुषन्ताम् ॥ ५७ ॥
सूर्य्यरश्मिर्हरिकेशःपुरस्तात्सविताज्ज्योतिरुदयाँ२ऽअजस्रम् । तस्य-

---

१ इत्यत्र 'श्रीमनाऽइत्येके' (३।९२) एकेषामाचार्याणां मतेन अयं च नकारः प्रकृत्या भवति । अयं भावः—चरणानां पाठव्यवस्था काण्वशाखायां णत्वं, माध्यन्दिन-शाखायां नत्वं, इति ।

पूषाप्प्रसवेयातिव्विद्वान्त्सम्पश्यन्न्विश्श्वाभुवनानिगोपाः ॥ ५८ ॥
व्विमानऽएषदिवोमद्ध्यऽआस्तऽआपप्रिवान्रोदसीऽअन्तरिक्षम् ।
सव्विश्श्वाचीरभिचष्ट्टेघृताचीरन्तरापूर्व्वमपरञ्चकेतुम् ॥ ५९ ॥ उक्षा-
समुद्रोऽअरुणःसुपर्ण्णः पूर्व्वस्ययोनिम्पितुराविवेश । मद्ध्येदिवो-
निहितःपृश्निरश्म्माव्विचक्क्रमेरजसस्प्पात्यन्तौ ॥ ६० ॥ इन्द्रं-
व्विश्श्वाऽअवीवृधन्त्समुद्रव्व्यचसङ्गिरः । रथीतमꣳरथीनांव्वाजा-
नाꣳसत्पतिम्पतिम् ॥ ६१ ॥ देवहूर्यज्ञऽआचव्वक्षत्सुम्नहूर्यज्ञऽ-
आचव्वक्षत् । यक्षदग्निर्देवोदेवाँ२आचव्वक्षत् ॥ ६२ ॥ व्वाजस्यमा-
प्प्रसवऽउदग्ग्राभेणोदग्ग्रभीत् । अधासपत्त्नानिन्द्रोमेनिग्ग्राभेणाध-

राँ२अकः ॥ ६३ ॥ उद्ग्राभञ्चनिग्ग्राभञ्चब्रह्मदेवाऽअवीवृधन् ।
अधासपत्नानिन्द्राग्नीमेव्विषूचीनान्व्यस्यताम् ॥ ६४ ॥ क्रम-
द्ध्वमग्निनानाकमुख्यᳪहस्तेषुबिभ्रतः । दिवस्पृष्ठᳪस्वर्ग्गत्वामि-
श्रादेवेभिराद्ध्वम् ॥ ६५ ॥ प्राचीमनुप्रदिशम्प्रेहिव्विद्वानग्नेरग्नेपुरोऽ-
अग्निर्भवेह । व्विश्वाऽआशादीद्यानोव्विभाह्यूर्ज्जन्नोधेहिद्विपदे-
चतुष्पदे ॥ ६६ ॥ पृथिव्याऽअहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमा-
रुहम । दिवोनाकस्यपृष्ठात्स्वर्ज्ज्योतिरगामहम् ॥ ६७ ॥ स्वर्य्यन्तो-
नापेक्षन्तऽआद्याᳪरोहन्तिरोदसी । यज्ञंयेव्विश्वतोधारᳪसुवि-
द्वाᳪसोव्वितेनिरे ॥ ६८ ॥ अग्नेप्रेहिप्रथमोदेवयताञ्चक्षुर्देवानामुतम-

र्य्यौनाम् । इ॒यक्षमाणा॒भृगु॑भिः॒सजो॑षाः॒स्व॒र्व॑न्तुय॒जमा॑नाः॒स्व॒स्ति ॥६९॥
नक्तो॒षासा॒सम॑नसा॒विरू॑पेधा॒पये॑ते॒शिशु॒मेक॑ᳬ समी॒ची । द्या॒वा॒क्षा-
मा॒रु॒क्मोऽअ॒न्तर्वि॑भा॑ति दे॒वाऽअ॒ग्निन्धा॑रयन्द्रविणो॒दाः ॥ ७० ॥ अ-
ग्नेस॑हस्राक्षशतमूर्द्धञ्छ॒तन्ते॑प्रा॒णाः स॒हस्रं॑व्या॒नाः । त्वᳬ सा॒हस्र॑स्य॒-
रा॒यऽई॑शिषे॒तस्मै॑ते॒विधेम॒वाजा॑य॒स्वाहा॑ ॥ ७१ ॥ सु॒प॒र्णो॑सि॒गरु॑-
त्मा॒न्पृ॒ष्ठेपृ॑थि॒व्याःसी॑द । भा॒सा॒न्तरि॑क्ष॒मापृ॑ण॒ज्ज्योति॑षा॒दिव॒मुत्त॑-
भा॒नतेज॑सा॒दिश॒ऽउद्दृᳬह ॥ ७२ ॥ आ॒जुह्वा॑नःसु॒प्रती॑कः॒पु॒रस्ता॑द॒-
ग्नेस्वंयोनि॒मासी॑दसाधु॒या । अ॒स्मिन्त्स॒धस्थे॒ऽअध्युत्त॑रस्मि॒न्वि-

१—'उदस्तभाने लोपम्'(४।९८) उद् उपसर्गात्परस्तभाने प्रत्यये सकारो लोपमापद्यते ।

श्वैर्देवायजमानश्चसीदत ॥ ७३ ॥ ताꣳसवितुर्व्वरेण्यस्यचित्रामाहं-
व्वृणेसुमतिंव्विश्वजन्याम् । यामस्यकण्वोऽअदुहत्प्रपीनाꣳसहस्र-
धाराम्पयसामहीङ्गाम् ॥ ७४ ॥ व्विधेमतेपरमेजन्मन्नग्नेव्विधेमस्तो-
मैरवरेसधस्थे । यस्माद्योनेरुदारिथायजेतम्प्रत्वेहवीꣳषिजुहुरेस-
मिद्धे ॥ ७५ ॥ प्रेद्धोऽअग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ । त्वाꣳ
शश्वन्तऽउपयन्तिव्वाजाः ॥ ७६ ॥ अग्नेतमद्याश्वन्नस्तोमैः क्रतु-
न्नभद्रꣳहृदिस्पृशम् । ऋध्यामातऽओहैः ॥ ७७ ॥ चित्तिञ्जुहो-
मिमनसाघृतेनयथादेवाऽइहागमन्वीतिहोत्राऽऋतावृधः । पत्ये-
व्विश्वस्यभूमनोजुहोमिव्विश्वकर्मणेव्विश्वाहादाभ्यꣳहविः ॥ ७८ ॥

सप्त ते ऽअग्ने समिधः सप्त जिह्वाः सप्त ऽऋषयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्व घृतेन स्वाहा ॥७९॥
शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च ।
शुक्रश्च ऽऋतपाश्चात्यंहाः ॥८०॥ ईदृङ् चान्यादृङ् च सदृङ् च
प्रतिसदृङ् च । मितश्च सम्मितश्च सभराः ॥८१॥ ऋतश्च सत्य-
श्च ध्रुवश्च धरुणश्च । धर्त्ता च विधर्त्ता च विधारयः ॥ ८२ ॥ ऋ-
तजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्च दूरे ऽअमित्रश्च
गणः ॥ ८३ ॥ ईदृक्षास ऽएतादृक्षास ऽऊ षु णः सदृक्षासः प्रतिसदृ-
क्षास ऽएतन । मितासश्च सम्मितासो नो ऽअद्य सभरसो मरुतो यज्ञे ऽअ-

स्स्मिन् ॥ ८४ ॥ स्वतवाँश्च प्रघासी च सान्तपनश्च गृहमेधी च । क्रीडी च शाकी चोज्जेषी ॥ ८५ ॥ इन्द्रन्दैवीर्विशो मरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशो मरुतोनुवर्त्मानोभवन् । एवमिमं यजमानन्दैवीश्च विशो मानुषीश्चानुवर्त्मानोभवन्तु ॥ ८६ ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्ने सरिरस्य मद्ध्ये । उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ ८८ ॥ समुद्राद् दूर्मिर्मधुमाँ २ उदारदुपाꣳशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा दे-

वानाममृतस्यनाभिः ॥ ८९ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्य-
ज्ञेधारयामानमोभिः । उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमी-
द्गौरएतत् ॥ ९० ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तह-
स्तासोऽअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआवि-
वेश ॥ ९१ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्ववि-
न्दन् । इन्द्रऽएकꣳसूर्यऽएकञ्जजानवेनादेकꣳस्वधयानिष्टतक्षुः
॥ ९२ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ।
घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ९३ ॥
सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः । ए-

तेऽअर्षन्त्यूर्मयो॑घृतस्य॑मृगाऽइ॑वक्षिपणोरीष॑माणाः ॥ ९४ ॥
सिन्धोरिवप्प्राद्ध्वनेशूघनासोव्वात॑प्प्रमियःपतयन्तियह्वाः । घृत-
स्यधाराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्व॑मानः ॥ ९५ ॥
अभिप्रव॑न्तसम॑नेवयोषाःकल्याण्ण्यःस्मय॑मानासोऽअग्निम् । घृत
स्यधाराःसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः ॥ ९६ ॥ कन्न्या-
ऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि । यत्रसोम॑÷सू-
यतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९७ ॥ अभ्यर्षतसुष्टुतिङ्ग-
व्यमाजिमस्मासुभद्द्राद्द्रविणानिधत्त । इमंयज्ञन्नयतदेवतानोघृ-
तस्यधारामधुमत्पवन्ते ॥ ९८ ॥ धाम॑न्तेव्विश्श्वम्भुवनमधिश्श्रितम-

न्तः॒श्वेसमुद्रेहृद्य्न्तरायुषि । अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्मिम् ॥ ९९ ॥ इति संहितायां सप्तदशोऽध्यायः ॥

## ❀ अथ अष्टादशोऽध्यायः ❀

ॐ वाजश्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रवश्चमेश्रुतिश्चमेज्ज्योतिश्चमेस्वश्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥ प्राणश्चमेपानश्चमेव्यानश्चमेसुश्चमे-

---

१—'चछयोः शम्'(प्रा० ३।७) चकारछकारयोः परयोः विसर्जनीयः शकारमापद्यते। चकारोदाहरणं यथा 'वाजश्चमे' छकारोदाहरणे—'भस्त्रीत्रयश्छन्दः' ( १४।१८ ) इति ।

चित्तञ्चमेऽआधीतञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमेदक्षश्च-
मेबलञ्चमेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्चमेसहश्चमऽआत्माच-
मेतनूश्चमेशर्म्मचमेवर्म्मचमेङ्गानिचमेस्थीनिचमेपरूᳬषिचमेशरीरा-
णिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यञ्चमऽआ-
धिपत्यञ्चमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाचमे-
वरिमाचमेप्रथिमाचमेवर्षिमाचमेद्राघिमाचमेवृद्धञ्चमेवृद्धिश्च-
मेयज्ञेनकल्पन्ताम् ॥ ४ ॥ सत्यञ्चमेश्रद्धाचमेजगच्चमेधनञ्चमे-
विश्वञ्चमेमहश्चमेक्रीडाचमेमोदश्चमेजातञ्चमेजनिष्यमाणञ्च
मेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ॥ ५ ॥ ऋतञ्चमेमृतञ्च-

मेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वञ्चमेनमित्रञ्चमेभं-
यञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेयज्ञेनकल्पन्ताम् ॥ ६ ॥
यन्ताचमेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वञ्चमेमहश्चमेसंविच्चमे-
ज्ञात्रञ्चमेसूश्चमेप्रसूश्चमेसीरञ्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥
शञ्चमेमयश्चमेप्रियञ्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्च-
मेद्रविणञ्चमेभद्रञ्चमेश्रेयश्चमेवसीयश्चमेयशश्चमेयज्ञेनकल्प-
न्ताम् ॥ ८ ॥ ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृतञ्चमेमधुचमे-
सग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽऔद्भिद्यञ्च-

१—भद्रनं भिधः भदेः क्किनि धस्कादेशो 'घसिभसोर्हलि च' इत्युपधालोपे 'झलो-

मेयज्ञेनंकल्पन्ताम् ॥ ९ ॥ रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभु-
भुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञे-
नंकल्पन्ताम् ॥ १० ॥ व्वित्तञ्चमेव्वेद्यञ्चमेभूतञ्चमेभविष्यच्चमेसु-
गञ्चमेसुपथ्यञ्चमऽऋद्धञ्चमऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमेम-
तिश्चमेसुमतिश्चमेयज्ञेनंकल्पन्ताम् ॥ ११ ॥ व्व्रीहयश्चमेयवा-
श्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्गवश्च-
मेणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमे-

---

झलि' इति सलोपः। 'झषस्तथोर्धोऽधः' इति धत्वम्। धस्य जस्त्वम्। न च जश्त्वेक-
र्तव्येऽल्लोपस्य स्थानिवत्त्वम्। न पदान्त० इति सूत्रेण निषेधात्।

यज्ञेनकल्पन्ताम् ॥ १२ ॥ अश्माचमेमृत्तिकाचमेगिरयश्चमेपर्वता-
श्चमेसिकताश्चमेव्वनस्पतयश्चमेहिरण्यञ्चमेयश्चमेश्यामञ्चमेलो-
हञ्चमेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ताम् ॥ १३ ॥ अग्निश्चमऽआ-
पश्चमेव्वीरुधश्चमऽओषधयश्चमेकृष्टपच्याश्चमेकृष्टपच्याश्चमे-
ग्राम्याश्चमेपशवऽआरण्याश्चमेव्वित्तञ्चमेव्वित्तिश्चमेभूतञ्चमेभू-
तिश्चमेयज्ञेनकल्पन्ताम् ॥ १४ ॥ व्वसुचमेव्वसतिश्चमेकर्मचमेश-
क्तिश्चमेर्थश्चमऽएमश्चमऽइत्याचमेगतिश्चमेयज्ञेनकल्पन्ताम्
॥१५॥ अग्निश्चमऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमेसविताचमऽइन्द्रश्च-
मेसरस्वतीचमऽइन्द्रश्चमेपूषाचमऽइन्द्रश्चमेबृहस्पतिश्चमऽइन्द्रश्च-

मेयज्ञेनकल्पन्ताम् ॥ १६ ॥ मित्रश्चमऽइन्द्रश्चमेवरुणश्चमऽइन्द्रश्च-
मेधाताचमऽइन्द्रश्चमेत्वष्टाचमऽइन्द्रश्चमेमरुतश्चमऽइन्द्रश्चमेविश्वे-
श्वेचमेदेवाऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥ १७ ॥ पृथिवीचमऽइन्द्र-
श्चमेन्तरिक्षञ्चमऽइन्द्रश्चमेद्यौश्चमइन्द्रश्चमेसमाश्चमइन्द्रश्चमेन-
क्षत्राणिचमऽइन्द्रश्चमेदिशश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥ १८ ॥
अꣳशुश्चमेरश्मिश्चमेदाभ्यश्चमेधिपतिश्चमउपाꣳशुश्चमेन्त-
र्यामश्चमऽऐन्द्रवायवश्चमेमैत्रावरुणश्चमऽआश्विनश्चमेप्रति-
प्रस्थानश्चमेशुक्रश्चमेमन्थीचमेयज्ञेनकल्पन्ताम् ॥ १९ ॥ आ-
ग्रयणश्चमेवैश्वदेवश्चमेध्रुवश्चमेवैश्वानरश्चमऽऐन्द्राग्न-

श्च्चं मे महावैश्वदेवश्च्चं मे मरुत्वतीयाश्च्च मे निष्क्कैवल्ल्यश्च्च मे सावि-
त्त्रश्च्च मे सारस्वतश्च्च मे पात्क्नीवतश्च्च मे हारियोजनश्च्च मे यज्ञेन कल्पन्ता-
म् ॥ २० ॥ स्रुचश्च्च मे चमसाश्च्च मे व्वायव्व्यानि च मे द्रोणकलशश्च्च
मे ग्ग्रावाणश्च्च मे धिषवणे च मे पूतभृच्च्च मऽआधवनीयश्च्च मे व्वेदिश्च्च मे
बर्हिश्च्च मेऽवभृथश्च्च मे स्वगाकारश्च्च मे यज्ञेन कल्पन्ताम् ॥ २१ ॥
अग्निश्च्च मे घर्म्मश्च्च मेऽर्क्कश्च्च मे सूर्य्यश्च्च मे प्प्राणश्च्च मेऽश्वमेधश्च्च मे
पृथिवी च मेऽदितिश्च्च मे दितिश्च्च मे द्यौश्च्च मेऽङ्गुलयः शक्क्वरयो दिशश्
च्च मे यज्ञेन कल्पन्ताम् ॥ २२ ॥ व्व्रतञ्च्च मऽऋतवश्च्च मे तपश्च्च मे संव्व-
त्सरश्च्च मेऽहोरात्त्रेऽऊर्व्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥२३॥

एकाचमेतिस्रश्चमेतिस्रश्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमेन·
वचमेनवचमऽएकादशचमऽएकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्च-
दशचमेपञ्चदशचमेसप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमऽ·
एकविꣳशतिश्चमऽएकविꣳशतिश्चमेत्रयोविꣳशतिश्चमेत्रयोविꣳशा-
तिश्चमेपञ्चविꣳशतिश्चमेपञ्चविꣳशतिश्चमेसप्तविꣳशतिश्चमे-
सप्तविꣳशतिश्चमेनवविꣳशतिश्चमेनवविꣳशतिश्चमऽएकत्रिꣳ-
शच्चमऽएकत्रिꣳशच्चमेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २४ ॥
चतस्रश्चमेष्टौचमेष्टौचमेद्वादशचमेद्वादशचमेषोडशचमेषोडशचमे·
विꣳशतिश्चमेविꣳशतिश्चमेचतुर्विꣳशतिश्चमेचतुर्विꣳशतिश्च-

मेष्टाविꣳशतिश्चमेष्टाविꣳशतिश्चमेद्वात्त्रिꣳशच्चमेद्वात्त्रिꣳशच्चमे-
षट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳशच्चंमेचत्वारिꣳशच्चंमेचतु-
श्चत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेष्टाचत्वारिꣳशच्चमेयज्ञे-
नकल्पन्ताम् ॥ २५ ॥ ऽत्र्यविश्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौ-
हीचमेपञ्चाविश्चमेपञ्चावीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्यवाट्च-
मेतुर्यौहीचमेयज्ञेनकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्चमेपष्ठौहीचमऽ-
उक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञेनक-
ल्पन्ताम् ॥ २७ ॥ वाजायस्वाहाप्रसवायस्वाहापिजायस्वाहाक्र-
तवेस्वाहावसवेस्वाहाहर्पतयेस्वाहाह्नेमुग्धायस्वाहामुग्धायवै-

नꣳशिनायस्वाहा व्विनꣳशिनऽआन्त्यायनायस्वाहान्त्यायभौवनाय-
स्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्रजापतयेस्वाहा । इयन्ते-
राण्मित्रायँयन्तासियमनऽऊर्ज्जेत्वावृष्ट्यैत्वाप्रजानान्त्वाधिपत्याय
॥ २८ ॥ आयुर्य्यज्ञेनकल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्य्यज्ञेनकल्प-
ताꣳश्रोत्रंयज्ञेनकल्पताम्वाग्यज्ञेनकल्पताम्मनोयज्ञेनकल्पतामा-
त्माऽयज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्पताञ्ज्योतिर्य्यज्ञेनकल्पन्ताꣳ
स्वर्य्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्पताँयज्ञोयज्ञेनकल्पताम् । स्तोम-
श्चयजुश्चऋक्चसामचबृहच्चरथन्तरञ्च । स्वर्देवाऽअगन्मामृताऽ-
अभूमप्रजापतेःप्रजाऽअभूमव्वेट्स्वाहा ॥ २९ ॥ व्वाजस्यनुप्रसवे-

मातरम्महीमदितिन्नामव्वर्चसाकरामहे । यस्यामिदंव्विश्श्वम्भुवन-
माविवेशतस्यान्नोदेवः सविताधर्मसाविषत् ॥ ३० ॥ विश्श्वेऽअद्यमरु-
तोव्विश्श्वऽऊतीव्विश्श्वेभवन्त्वग्नयः समिद्धाः । व्विश्श्वेनोदेवाऽअव-
सागमन्तुव्विश्श्वमस्तुद्रविणंव्वाजोऽअस्मे ॥ ३१ ॥ व्वाजोनः सप्तप्र-
दिशश्चतस्रोवापरावतः । व्वाजोनोव्विश्श्वैर्देवैर्द्धनसाताविहावतु
॥ ३२ ॥ व्वाजोनोऽअद्यप्रसुवातिदानंव्वाजोदेवाँ२ऽऋतुभिः कल्प-
याति । व्वाजोहिमासर्व्ववीरञ्जजानव्विश्श्वाऽआशाव्वाजपतिर्ज्जयेे-
यम् ॥ ३३ ॥ व्वाजः पुरस्तादुतमद्ध्यतोनोव्वाजोदेवान्हविषाव्व-
र्द्धयाति । व्वाजोहिमासर्व्ववीरञ्चकारसर्व्वाऽआशाव्वाजपतिर्ब्भवे-

यम् ॥ ३४ ॥ सम्मासृजामिपयसापृथिव्व्याऽसम्मासृजाम्म्यद्भिरो-
षधीभिः । सोहंव्वाजᳬसनेयमग्ने ॥ ३५ ॥ पयः पृथिव्व्याम्पयऽओ-
षधीषुपयोदिव्व्यन्तरिक्षेपयोधाः । पयस्वतीःप्रदिशः सन्तुमह्यम्
॥ ३६ ॥ देवस्यत्वासवितुःप्प्रसवेश्श्विनोर्ब्बाहुभ्भ्याम्पूष्णोहस्ताभ्भ्या-
म् । सरस्वत्त्यैव्वाचोयन्तुर्य्यन्त्रेणाग्नेःसाम्म्राज्ज्येनाभिषिञ्चामि
॥ ३७ ॥ ऋताषाडृतधामाग्निर्ग्गन्धर्व्वस्तस्यौषधयोप्प्सरसोमुदोना-
म । सनऽइदम्ब्रह्मक्षत्रम्पातुतस्म्मैस्वाहाव्वाट्ताभ्भ्यःस्वाहा ॥३८॥
सᳬहितोव्विश्श्वसामासूर्य्योगन्धर्व्वस्तस्यमरीचयोप्प्सरसऽआयुवो-
नाम । सनऽइदम्ब्रह्मक्षत्रम्पातुतस्म्मैस्वाहावाट्ताभ्भ्यःस्वाहा॥३९॥

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥४०॥
इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽअप्सरस ऊर्जो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४१ ॥ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणाऽअप्सरसस्तावा नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४२ ॥ प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यऽऋक्सामान्यप्सरसऽएष्टयो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥४३॥
स नो भुवनस्य पते प्रजापते यस्य तऽउपरि गृहा यस्य वेह। अस्मै ब्रह्म-

एस्मैत्त्त्रायमहिशर्म्मँयच्छस्वाहा ॥ ४४ ॥ समुद्रोसिनभस्वानाद्र्द्रं-
दानुःशम्भूर्म्मँयोभूरभिमाव्वाहिस्वाहामारुतोसिमरुताङ्गणःशम्भूर्म्मँ-
योभूरभिमाव्वाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्म्मँयोभूरभिमाव्वाहि-
स्वाहा ॥ ४५ ॥ यास्तेऽअग्ग्नेसूर्य्येरुचोदिवमातन्न्वन्तिरश्मिभिः ।
ताभिर्न्नोऽअद्यसर्व्वाभिरुचेजनायनस्कृधि ॥ ४६ ॥ यावोदेवाःसूर्य्ये-
रुचोगोष्वश्श्वेषुयारुचः इन्द्राग्ग्नीताभिःसर्वाभीरुचन्नोधत्तबृहस्पते
॥ ४७ ॥ रुचन्नोधेहिब्राह्मणेषुरुचᳬराजसुनस्कृधि । रुचंविश्श्येषुशू-
द्रेषुमयिधेहिरुचारुचम् ॥४८॥ तत्त्वायामिब्रह्मणाव्वन्दमानस्तदा-
शास्तेयजमानोहविर्ब्भिः । अहेडमानोव्वरुणेहबोध्युरुशᳬसमानऽ-

आयुर्ष्प्रमोषीः ॥ ४९ ॥ स्वर्ण्णघर्म्मः स्वाहा स्वर्ण्णार्क्कः स्वाहा स्वर्ण्ण-
शुक्रः स्वाहा स्वर्ण्णज्ज्योतिः स्वाहा स्वर्ण्णसूर्य्यः स्वाहा ॥ ५० ॥ अ-
ग्ग्निय्युनज्ज्मि शवसा घृतेन दिव्व्यꣳ सुपर्ण्णं व्वयसा बृहन्तम् । तेन व्व-
यङ्गमेम ब्ब्रध्नस्य व्विष्टपꣳ स्वो रुहाणा अधि नाकमुत्तमम् ॥ ५१ ॥ [ श-
तम् १०००] इमौ ते पक्षावजरौ पतत्त्रिणौ याब्भ्याꣳ रक्षाꣳस्यपहꣳस्य-
ग्ग्ने ॥ ताब्भ्याम्पतेम सुकृतामु लोकं य्यत्र ऽ ऋषयो जग्ग्मुः प्प्रथमजाः पु-
राणाः ॥ ५२ ॥ इन्दुर्दक्षः श्येन ऽ ऋतावा हिरण्ण्यपक्षः शकुनो भुर-
ण्ण्युः । महान्त्सधस्थे ध्रुव ऽ आ निषत्तो नमस्ते ऽ अस्तु मा मा हिꣳसीः
॥ ५३ ॥ दिवो मूर्द्धासि पृथिव्व्या नाभिरूर्ग्गपामोषधीनाम् । व्विश्श्वा-

युꣳशर्म्मसप्प्रथानमंस्प्पथे ॥५४॥ विवश्श्वस्यमूर्द्धन्नधितिष्ठसिश्श्र-
तꣳसंमुद्द्रेतेहृदयमप्प्स्वायुरपोदत्तोदधिम्भिन्त । दिवस्प्पर्ज्जन्न्याद-
न्तरिक्षात्पृथिव्व्यास्ततोनोव्वृष्ट्ट्याव ॥ ५५ ॥ इष्टोयज्ञोभृगुराशीर्द्दा-
व्वसुभिꣳ । तस्यनऽइष्टस्यप्प्रीतस्यद्द्रविणेहागमेꣳ ॥ ५६ ॥ इष्टोऽअग्नि-
राहुतꣳपिपर्त्तुनऽइष्टꣳहविः । स्वगेदन्देवेब्भ्योनमः ॥५७॥ यदाकूता-
त्समसुस्स्रोद्धृदोवामनसोवासम्भृतञ्चक्षुषोवा । तदनुप्प्रेतसुकृतामुलो-
कंयत्रऽऋषयोजग्मुःप्प्रथमजाःपुराणाः ॥ ५८ ॥ एतꣳसधस्थपरितेद-
दामिषमावहाच्छेवधिञ्जातवेदाः । अन्न्वागन्तायज्ञपतिर्व्वोऽअत्रतꣳ-
स्स्मजानीतपरमेव्व्योमन् ॥५९॥ एतञ्जानाथपरमेव्व्योमन्देवाः सध-

स्त्थाव्विदरूपमस्य । यदागच्छात्पथिभिर्द्देवयानैरिष्टापूर्त्ते कृणवाथावि-
रस्म्मै ॥६०॥ उद्बुध्यस्वाग्ग्नेप्प्रतिजागृहि त्वमिष्टापूर्त्ते सᳬ सृजेथामयञ्च ।
अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्श्वे देवा यजमानश्च्च सी-
दत ॥ ६१ ॥ येन वहसि सहस्रं येनाग्ने सर्व्ववेदसम् । तेनेमं य्यज्ञन्नो न-
य स्वर्द्देवेषु गन्तवे ॥ ६२ ॥ प्रस्तरेण परिधिना स्रुचा व्वेद्या च बर्हिषा ।
ऋचेमं य्यज्ञन्नो नय स्वर्द्देवेषु गन्तवे ॥ ६३ ॥ यद्दत्तं य्यत्परादानं य्यत्पूर्त्तं
य्याश्च दक्षिणाः । तदग्निर्व्वैश्श्वकर्म्मणः स्वर्द्देवेषु नो दधत् ॥६४॥ य-
त्र धाराऽअनपेता मधोर्घृतस्य च याः । तदग्निर्व्वैश्श्वकर्म्मणः स्वर्द्देवेषु
नो दधत् ॥ ६५ ॥ अग्निरस्मि जन्म्मना जातवेदा घृतम्मे चक्षुरमृतम्मऽ-

आसन्। अर्कस्त्रिधातूरजसोविमानोजस्रोघर्म्मोहविरस्मिनाम ॥६६॥
ऋचोनामास्मियजूंषिनामास्मिसामानिनामास्मि । येऽअग्नयः
पाञ्चजन्याऽअस्याम्पृथिव्यामधि । तेषामसित्वमुत्तमःप्रनोजीवा-
तवेसुव ॥ ६७ ॥ वार्त्रहत्यायशवसेपृतनाषाह्यायच । इन्द्रत्वावर्त्त-
यामसि ॥ ६८ ॥ सहदानुम्पुरुहूतक्षियन्तमहस्तमिन्द्रसम्पिणक्कुणा-
रुम् । अभिवृत्रंवर्द्धमानम्पियारुमपादमिन्द्रतवसाजघन्थ ॥ ६९ ॥
विनऽइन्द्रमृधोजहिनीचायच्छपृतन्यतः । योऽअस्माँ२ऽअभिदास-

---

१. इत्यत्र 'सहेः पृतनायाः' (३।७५) इत्यनेन पृतनाशब्दात्परस्य सहेः सस्य षत्वं निपात्यते ।

त्यर्थंरङ्गमयातमः ॥ ७० ॥ मृगोनभीमःकुचरोगिरिष्ठाःपरावतआ-
जगन्थापरस्याः । सृकᳬसᳬशायपविमिन्द्रतिग्मंव्विशत्रून्ताढि-
व्विमृधोनुदस्व ॥ ७१ ॥ व्वैश्वानरोनऽऊतयऽआप्प्रयातुपरावतः ।
अग्निर्न्नःसुष्टुतीरुप ॥ ७२ ॥ पृष्टोदिविपृष्टोऽअग्निःपृथिव्व्यांपृष्टो
व्विश्वाऽओषधीराविवेश । व्वैश्वानरःसहसापृष्टोऽअग्निःसनोदिवा-
सरिषस्पातुनक्तम् ॥ ७३ ॥ अश्यामतङ्कामममग्नेतवोतीऽअश्याम-
रयिᳬरयिवःसुवीरम् । अश्यामव्वाजमभिव्वाजयन्तोश्यामद्युम्न-
मजराजरन्ते ॥ ७४ ॥ व्वयन्तेऽअद्यररिमाहिकाममुत्तानहस्तानम-
सोपसद्य । यजिष्ठेनमनसायक्षिदेवानस्रेधतामन्मनाव्विप्प्रोऽअ-

ग्ने ॥७५॥ धामच्छदग्निरिन्द्रोब्ब्रह्मादेवोबृहस्पतिं । ÷ सचेतसो-
व्विश्श्वेदेवाषज्ञम्प्रावन्तुनश्शुभे ॥७६॥ त्वंय्यविष्ठुदाशुषोनॄँ पाहिश्शृ-
णुधीगिरं÷ । रक्षातोकमुतत्क्मना ॥ ७७ ॥ इति संहितायां अष्टा-
दशोऽध्यायः ॥

## ❀ अथैकोनविंशतितमोऽध्यायः ❀

ॐ स्वाद्वीन्त्वा स्वादुनातीव्व्रान्तीव्व्रेणामृताममृतेन । मधुमतीम्म-
धुमतासृजामिसꣳसोमेन । सोमोस्यश्श्विभ्यांपच्यस्वसरस्वत्यैप-
च्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥१॥ परीतोषिञ्चतासुतꣳसोमोषऽउत्तमꣳ
हविः । दधन्वाषोनर्योऽअप्स्वन्तरासुषावसोममद्रिभिः ॥२॥ व्वा-

योऽपूतःपवित्रेणप्रत्यङ्क्सोमोऽअतिद्रुतः। इन्द्रस्ययुज्यःसखा। वायोःपूतःपवित्रेणप्राङ्क्सोमोऽअतिद्रुतः। इन्द्रस्ययुज्यःसखा ॥३॥
पुनातितेपरिस्रुतꣳसोमꣳसूर्यस्यदुहिता। वारेणशश्वतातना ॥४॥
ब्रह्मक्षत्रम्पवतेतेजऽइन्द्रियꣳसुरयासोमःसुतऽआसुतोमदाय। शुक्रेणदेवदेवताःपिपृग्धिरसेनान्नंयजमानायधेहि ॥ ५ ॥ कुविदङ्गयवमन्तोयवंचिद्यथादान्त्यनुपूर्वंवियूय। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमउक्तिंयजन्ति। उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिस्तेजसेत्वावीर्यायत्वाबलायत्वा ॥ ६ ॥ नानाहिवान्देवहितꣳसदस्कृतम्मासꣳसृक्षाथाम्प-

एमेक्ष्यौमन् । सुरात्वमसिशुष्मिणीसोमंऽएषमामाहिꣳसीꣳस्वांय्योनिंमाविशन्ती ॥ ७ ॥ उपयामगृहीतोस्याश्विनन्तेजः सारस्वतंव्वीर्य्यमैन्द्रम्बलम् । एषतेयोनिर्म्मोदायत्त्वानन्दायत्त्वामहसेत्त्वा ॥ ८ ॥ तेजोसितेजोमयिधेहिव्वीर्य्यमसिव्वीर्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजोस्योजोमयिधेहिमन्न्युरसिमन्न्युम्मयिधेहिसहोसिसहोमयिधेहि ॥ ९ ॥ याव्याघ्रंव्विषूचिकोभौव्वृकञ्चरक्षति । श्येनम्पतत्रिणꣳसिꣳहꣳसेमम्पात्वꣳहसः ॥१०॥ यदापिपेषमातरम्पुत्रः प्रमुदितोधयन् ॥ एतत्तदग्नेऽअनृणोभवाम्म्यहतौपितरौमया । सम्पृचस्थसम्माभद्रेणपृङ्क्तव्विपृचस्थव्विमापाप्मनापृङ्क्त ॥ ११ ॥ देवायज्ञ-

मंतन्वतभेषजम्भिषजाश्विना । व्वाचासरस्वतीभिषगिन्द्रायेन्द्रि-
याणिदधतः ॥१२॥ दीक्षायैरूपꣳशष्पाणिप्प्रायणीयस्यतोक्क्मानि ।
क्क्रयस्यरूपꣳसोमस्यलाजाःसोमाꣳशवोमधु ॥ १३ ॥ आतिथ्य-
रूपम्मासरम्महावीरस्यनग्नहुः । रूपमुपसदामेतत्तिस्रोरात्रीःसुरा-
सुता ॥ १४ ॥ सोमस्यरूपङ्क्रीतस्यपरिस्रुत्परिषिच्यते ॥ अश्वि-
ब्भ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रꣳसरस्वत्या ॥१५॥ आसन्दीरूपꣳराजा-
सन्द्यैव्वेद्यैकुम्भीसुराधानी ॥ अन्तरऽउत्तरवेद्यारूपङ्कारोतरो-
भिषक् ॥ १६ ॥ व्वेद्याव्वेदिःसमाप्प्यतेबर्हिषाबर्हिरिन्द्रियम् । यूपे-
नयूपऽआप्प्यतेप्प्रणीतोऽअग्निरग्निना ॥१७॥ हविर्द्धानंय्यदश्विना-

श्रीर्द्रुग्धंव्वत्सरस्वती । इन्द्रायैन्द्रꣳसदस्कृतम्पत्नीशालङ्गार्हपत्यं
॥ १८ ॥ प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्य्यज्ञस्य । प्रयाजेभिरनु-
याजान्वषट्कारेभिराहुतीः ॥ १९ ॥ पशुभिः पशूनाप्नोतिपुरोडा-
शैर्हवीꣳष्ष्या । छन्दोभिःसामिधेनीर्याज्याभिर्व्वषट्कारान् ॥२०॥
धानाःकरम्भःसक्तवःपरीवापःपयोदधि । सोमस्यरूपꣳहविषऽ-
आमिक्षाव्वाजिनम्मधु ॥ २१ ॥ धानानाꣳरूपङ्कुवलम्परीवापस्यगो-
धूमाः ॥ सक्तूनाꣳरूपम्बदरमुपवाकाःकरम्भस्य ॥२२॥ पयसो-
रूपंय्यद्यवादध्नोरूपङ्कर्कन्धूनि । सोमस्यरूपंव्वाजिनꣳसौम्यस्य-
रूपमामिक्षा ॥ २३ ॥ आश्रावयेतिस्तोत्रियाःप्रत्याश्रावोऽअनु-

रूपᳪं । यजेतिधाय्यारूपम्प्रगाथायैयजामहाः ॥ २४ ॥ अर्द्धऽऋचै-
रुक्थानाᳪंरूपम्पदैराप्नोतिनिविदंः । प्रणवैःशस्त्राणाᳪंरूपम्प-
यसासोमऽआप्यते ॥ २५ ॥ अश्विभ्याम्प्रातᳪंसवनमिन्द्रेणैन्द्र-
म्माद्ध्यन्दिनम् । वैश्वदेवᳪंसरस्वत्यातृतीयमाप्तᳪंसवनम् ॥२६॥
वायव्यैर्वायव्यान्याप्नोतिसतेनद्रोणकलशम् । कुम्भीभ्याम्म्भृ-
णौसुतेस्थालीभिस्थालीराप्नोति ॥ २७ ॥ यजुर्भिराप्यतेग्रहाग्रहै-
स्तोमाश्चविष्टुतीᳪं । छन्दोभिरुक्थाशस्त्राणिसाम्नावभृथऽआ-
प्यते ॥२८॥ इडाभिर्भक्षानाप्नोतिसूक्तवाकेनाशिषंः । शंयुना-
पत्नीसंयाजान्त्समिष्टयजुषासᳪंस्थाम् ॥ २९ ॥ व्रतेनदीक्षामाप्नो-

तिद्दीक्षयाप्नोतिदक्षिणाम् । दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्त्यमाप्यते
॥ ३० ॥ एतावद्द्रूपंय्यज्ञस्ययद्देवैर्ब्रह्मणाकृतम् । तदेतत्सर्व्वमा-
प्नोतियज्ञेसौत्रामणीसुते ॥३१॥ सुरावन्तम्बर्हिषदꣳसुवीरंय्यज्ञꣳहि-
न्न्वन्तिमहिषानमोभिः ॥ दधानाꣳसोमन्दिविदेवतासुमदेमेन्द्रंय्यजमा-
नाःस्वर्काः ॥३२॥ यस्तेरसꣳसम्भृतऽओषधीषुसोमस्यशुष्मꣳसुरयासु
तस्य । तेनजिन्वयजमानम्मदेनसरस्वतीमश्विनाविन्द्रमग्निम् ॥३३॥
यमश्विनानमुचेरासुरादधिसरस्वत्यसुनोदिन्द्रियाय । इमन्तꣳशु-
क्क्रम्मधुमन्तमिन्दुꣳसोमꣳराजानमिहभक्षयामि ॥ ३४ ॥ यदत्ररि-
प्तꣳरसिनःसुतस्ययदिन्द्रोऽअपिबच्छचीभिः । अहन्तदस्यमनसा-

शिवेनसोमᳬराजानमिहभक्षयामि ॥३५॥ पितृब्भ्यः स्वधायिब्भ्यः स्वधानमः पितामहेब्भ्यः स्वधायिब्भ्यः स्वधानमः प्रपितामहेब्भ्यः स्वधायिब्भ्यः स्वधानमः । अक्षन्न्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितरः शुन्धद्ध्वम् ॥ ३६ ॥ पुनन्तुमापितरः सोम्म्यासः पुनन्तुमापितामहाः पुनन्तुप्प्रपितामहाः पवित्त्रेणशतायुषा । पुनन्तुमापितामहाः पुनन्तुप्प्रपितामहाः । पवित्त्रेणशतायुषाव्विश्श्वमायुर्व्व्यश्श्नवै ॥ ३७ ॥ अग्नऽआयूᳬषिपवसऽआसुवोर्ज्जमिषञ्चनः । आरेबाधस्वदुच्छुनाम् ॥३८॥ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः । पुनन्तुव्विश्श्वाभूतानिजातवेदः पुनीहिमा ॥ ३९ ॥ पवित्त्रेणपुनीहि-

माशुक्क्रेणदेवदीद्यत् । अग्नेक्क्रत्वाक्क्रतूँ१ऽरनु ॥ ४० ॥ यत्तेपवि
त्त्रमर्चिष्ष्यग्ग्नेव्विततमन्तरा ॥ ब्रह्म्मतेनपुनातुमा ॥ ४१ ॥ पव-
मानःसोऽअद्द्यनः पवित्त्रेणव्विचर्षणिः । यःपोतासपुनातुमा ॥४२॥
उभाब्भ्यान्देवसवितःपवित्त्रेणसवेनच । माम्पुनीहिव्विश्श्वतः ॥४३॥
व्वैश्श्वदेवीपुनतीदेव्व्यागाद्यस्यामिमाबह्व्यस्तन्न्वोव्वीतपृष्ठाः ।
तयामन्दन्तःसधमादेषुव्वयंस्यामपतयोरयीणाम् ॥ ४४ ॥ येस-
मानाःसमनसःपितरोयमराज्ज्ये । तेषाँल्लोकःस्वधानमोयज्ञोदेवेषु-
कल्पताम् ॥ ४५ ॥ येसमानाःसमनसोजीवाजीवेषुमामकाः ।
तेषांश्श्रीर्म्मयिकल्प्पतामस्मिँल्लोकेशतंसमाः ॥ ४६ ॥ द्वेसृतीऽ-

अश्रृणवम्पितृणामहन्देवानामुतमर्त्यानाम् । ताभ्यामिदंव्विश्श्वमेज-
त्समेतियदन्तरापितरम्मातरञ्च ॥४७॥ इदꣳहविःप्रजननम्मेऽअस्तु-
दशवीरꣳसर्व्वगणꣳस्वस्तये । आत्मसनिप्प्रजासनिपशुसनिलोकस-
न्यभयसनि । अग्निःप्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्म्मासुधत्त-
॥४८॥ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्म्यासः । असुं-
यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥४९॥ अङ्गिरसोनःपित-
रोनवग्ग्वाऽअथर्व्वाणोभृगवःसोम्म्यासः । तेषांव्वयꣳसुमतौयज्ञि-
यानामपिभद्रेसौमनसेस्याम ॥ ५० ॥ येनःपूर्व्वेपितरःसोम्म्यासो-
नूहिरेसोमपीथंव्वसिष्ठाः । तेभिर्य्यमःसꣳरराणोहवीꣳष्युशन्नुश-

ह्र्भि॑÷प्रतिका॒मम॑त्तु ॥ ५१ ॥ त्वꣳसो॑म॒प्रचि॑कितोमनी॒षात्वꣳर-
जि॑ष्ठ॒मनु॑नेषि॒पन्था॑म् । तव॒प्प्रणी॑तीपि॒तरो॑नऽइन्दो॒देवे॒षुरत्न॑मभजन्त॒-
धीरा॑ꣳ ॥ ५२ ॥ त्वया॒हिनः॑÷पि॒तरः॑÷सोम॒पूर्व्वे॑कर्म्मा॑णिच॒क्रुः॒पव॑-
मान॒धीरा॑ꣳ । व॒न्वन्नवा॑तꣳपरि॒धीँ१ऽरपो॑र्णु॒र्व्वीरे॑भि॒रश्वै॑र्म्म॒घवा॑भ-
वानꣳ ॥ ५३ ॥ त्वꣳसो॑मपि॒तृभिः॑÷संव्विदा॒नोनु॒द्यावा॑पृथि॒वीऽआत॑-
तन्थ। तस्मै॑तऽइन्दोह॒विषा॑व्विधेमव्व॒यꣳस्या॑म॒पत॑योरयी॒णाम् ॥५४॥
बर्हि॑षदःꣳपितरऽऊ॒त्युर्व्वा॑गि॒मावो॑ह॒व्व्याच॑क्रमाजु॒षद्ध्वम् । तऽआग॒ता-
व॑सा॒शन्त॑मे॒नाथा॑नꣳशंय्योर॑र॒पोद॑धात ॥ ५५ ॥ 'आहम्पि॒तन्त्सु॑वि॒द-
त्राँ२ऽअवित्सि॒नपा॑तञ्च॒व्वि॒क्क्रम॑णञ्च॒व्विष्णो॑ꣳ । ब॒र्हि॒षदो॒येस्व॒धया॑-

सुतस्यभजन्तपित्वस्तऽइहागमिष्ठाः ॥ ५६ ॥ उपहूताःपितरःसो-
म्म्यासोबर्हिष्ष्येषुनिधिषुप्प्रियेषु । तऽआगमन्तुतऽइहश्श्रुवन्त्वधि-
ब्ब्रुवन्तुतेवन्त्वस्मान् ॥ ५७ ॥ आयन्तुनःपितरःसोम्म्यासोग्नि-
ष्ष्वात्ताःपथिभिर्द्देवयानैः । अस्म्मिन्न्यज्ञेस्वधयामदन्तोधिब्ब्रुवन्तु-
तेवन्त्वस्मान् ॥५८॥ अग्निष्ष्वात्ताःपितरऽएहगच्छतसदःसदःस-

---

१. बर्हिः शब्दात् दत्तमित्यर्थे 'बर्हिषिदत्तम्' ४।४।११९। इत्यनेन यत्प्रत्यये।

२. 'एदोऽन्त्यथां पूर्वमकारः ( ४।६१ ) एकारौकाराभ्यां पर ऋकारः पूर्वरूप-मापद्यते। तेऽप्सरसाम् २४।३७। ब्वेदोऽसि ( २।२१ ) स्तुपोऽसि (२।२) इत्यादिषु ज्ञेयम्।

दत्तसुप्प्रणीतयः । अत्ताहवीꣳषिप्प्रयतानिबर्हिष्ष्यथारयिꣳसर्व्ववी-
रन्दधातन ॥ ५९ ॥ येऽअग्निष्ष्वात्तायेऽअनग्निष्ष्वात्तामद्ध्येदि-
वः स्वधयामादयन्ते । तेब्भ्यः स्वराडसुनीतिमेताय्यथावशन्तन्न्व-
ङ्कल्प्पयाति ॥ ६० ॥ अग्निष्ष्वात्तानृतुमतोहवामहेनाराशꣳसे-
सोमपीथय्यऽआशुः । तेनोव्विप्प्रासः सुहवाभवन्तुव्वयꣳस्याम-
पतयोरयीणाम् ॥ ६१ ॥ आच्च्याजानुदक्षिणतोनिषद्येमय्यज्ञमभि-
गृणीतव्विश्श्वे । माहिꣳसिष्टपितरः केनचिन्नोयद्वऽआगः पुरुष-
ताकराम ॥ ६२ ॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषे-
मर्त्याय । पुत्रेब्भ्यः पितरस्तस्यव्वस्वः प्प्रयच्छततऽइहोर्जन्दधात

॥ ६३ ॥ यमंग्नेकव्व्यवाहनत्वंचिन्न्मन्न्यंसेरयिम् । तन्नोगीर्ब्भिः
श्श्रवाय्यंन्देवत्राप॑नयायुजंम् ॥ ६४ ॥ योऽअग्निःकव्व्यवाहनःं
पितृन्न्यक्षंदृतावृधः । प्रेदुंहव्व्यानिंव्वोचतिदेवेब्भ्यंश्श्चपितृब्भ्य-
ऽआ ॥ ६५ ॥ त्वमंग्नऽईडितःकव्व्यवाहनावांड्ढव्व्यानिंसुरभीणिं-
कृत्वी । प्रादांःपितृब्भ्यंःस्वधयातेऽअंक्षन्नद्धित्वन्देंवप्रयंताहवीᳬषि
॥ ६६ ॥ येचेहपितरोयेचनेहयाँश्चंव्विद्मयाँ२ऽउंचनप्प्रंविद्म । त्वं-
व्वेंत्थयतितेजांतवेदःस्वधाभिर्य्यंज्ञᳬसुकृंतञ्जुषस्व ॥ ६७ ॥ इदम्पितृ-
ब्भ्योनमोंऽअस्त्वद्ययेपूर्व्वांसोयऽउपंरासऽईयुः । येपार्थिवेरजस्यानि-
षंत्तायेवांनूनᳬसुंवृजनांसुव्विक्षु ॥ ६८ ॥ अधायथांनःपितरःपरांसः-

प्रत्नासोऽअग्नऽऋृतमाशुषाणाः । शुचीदयन्दीधितिमुक्थशासः-
क्षामाभिन्दन्तोऽअरुणीरपव्रन् ॥ ६९ ॥ उशन्तस्त्वानिधीमहयु-
शन्तःसमिधीमहि॥ उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ ७० ॥
अपाम्फेनेननमुचेःशिरऽइन्द्रोदवर्त्तयः ॥ विश्वायदजयस्पृधः
॥ ७१ ॥ सोमोराजामृतःसुतऽऋजीषेणाजहान्मृत्युम् । ऋ-
तेनसत्यमिन्द्रियम्विपानःशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृत-

---

१. 'दर्दुरौदरदेशौ तु प्रफुल्लेते पुनर्यथा। एवं वर्णाः प्रयोक्तव्याः 'अपाम्फेने' निदर्शनम्' (या० शि० श्लो० ६५) दर्दुरस्य-मण्डूकेति प्रसिद्धजन्तोः उदरदेशौ प्रफुल्लेते वायुभरणेन स्थूलौ भवतः।

म्मधुं ॥ ७२ ॥ अद्भ्यः क्षीरं व्यपिबत्क्रुङ्ङाङ्गिरसो धिया । ऋतेन-
सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधुं
॥७३॥ सोममद्भ्यो व्यपिबच्छन्दसा हꣳसः शुचिषत् । ऋतेन सत्य-
मिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधुं ॥७४॥
[शतम् ११००] अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमं-
म्प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रि-
यमिदम्पयोमृतम्मधुं ॥ ७५ ॥ रेतो मूत्रं विजहाति योनिम्प्रविशदिन्द्रि-
यम् । गर्भो जरायुणावृत उल्बञ्जहाति जन्मना । ऋतेन सत्यमि-
न्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधुं ॥७६॥

दृष्ट्वारूपेव्याकरोत्सत्यानृतेप्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्
द्धाᳪसत्येप्रजापतिः । ऋतेनसत्यमिन्द्रियंविपानᳬशुक्रमन्धसऽ-
इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७७ ॥ व्वेदेनरूपेव्यपिवत्सुतासु-
तोप्रजापतिः । ऋतेनसत्यमिन्द्रियंविपानᳬशुक्रमन्धसऽइन्द्रस्ये-
न्द्रियमिदम्पयोमृतम्मधु ॥ ७८ ॥ दृष्ट्वापरिस्रुतोरसᳬशुक्रेणशु-
क्रंव्यपिबत्पयःसोमम्प्रजापतिः । ऋतेनसत्यमिन्द्रियंविपान-
ᳬशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७९॥ सीसेनतन्त्र-
म्मनसामनीषिणऽऊर्णासूत्रेणकवयोव्वयन्ति । अश्विनायज्ञᳬसं-
वितासरस्वतीन्द्रस्यरूपंव्वरुणोभिषज्ज्यन् ॥ ८० ॥ तदस्यरूपममृत-

६ शचीभिस्तिस्रोदधुर्देवता६ सह रराणाः । लोमानिशष्पैर्ब्बहुधान-
तोक्मभिस्त्वगस्यमा॑सम्भवन्नलाजाः ॥ ८१ ॥ तदश्विनाभि-
षजारुद्रवर्त्तनीसरस्वतीव्वयतिपेशोऽअन्तरम् । अस्थिमज्ज्ञानम्मा-
सैः कारोतरेणदधतोगवान्त्वचि ॥८२॥ सरस्वतीमनसापेशलंव्वसु-
नासत्याभ्यांव्वयतिदर्शतंव्वपुः । रसम्परिस्रुतानरोहितन्नग्नहुर्द्धी-
रस्तसरन्नवेम ॥ ८३ ॥ पयसाशुक्रममृतञ्जनित्र६ सुरयामूत्राज्जन-
यन्तरेतः । अपामतिन्दुर्म्मतिम्बाधमानाऽऊवद्ध्यंव्वात६ सव्वुन्त-
दारात् ॥ ८४ ॥ इन्द्रः सुत्रामाहृदयेनसत्यम्पुरोडाशेनसविताज-
जान । यकृत्क्लोमानंव्वरुणोभिषज्ज्यन्मतस्नेव्वायव्यैर्न्नमिनातिपि-

त्तम् ॥ ८५ ॥ आन्त्राणिस्त्थालीर्म्मधुपिन्न्वमानागुदाःपात्राणिसुदु-
घानधेनुः । श्येनस्यपत्रन्नप्लीहाशचीभिरासन्दीनाभिरुदरन्नमाता
॥ ८६ ॥ कुम्भोव्वनिष्ठुर्ज्जनिताशचीभिर्य्यस्मिन्नग्रेषोन्न्याङ्गर्भोऽ-
अन्तः । प्लाशिर्व्यक्क्तःशतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः
॥ ८७ ॥ मुखꣳसदस्यशिरऽइत्सतेनजिह्वापवित्रमश्विनासन्त्सर-
स्वती । चप्पन्नपायुर्भिषगस्यवालोव्वस्तिर्न्नशेपोहरसातरस्वी ॥८८॥
अश्विभ्याञ्चक्षुरमृतङ्ग्रहाभ्याञ्छागेनतेजोहविषाशृतेन । पक्ष्माणि-
गोधूमैःकुवलैरुतानिपेशोनशुक्क्रमसितंव्वसाते ॥ ८९ ॥ अविर्न्न-
मेषोनसिव्वीर्य्यायप्प्राणस्यपन्थाऽअमृतोग्ग्रहाभ्याम् । सरस्वत्युप-

वाकैर्व्व्यानन्नस्यानिबर्हिर्ब्बदरैर्ज्जजान ॥ ९० ॥ इन्द्रस्यरूपमृषभो-
बलायकर्ण्णाभ्याᳫँश्रोत्रममृतङ्ग्रहाभ्याम् । यवानबर्हिर्भ्रुविकेस-
राणिकर्क्कन्धुजज्ञेमधुसारघम्मुखात् ॥ ९१ ॥ आत्मन्नुपस्थेनव्वृकस्य-
लोममुखेश्मश्रूणिनव्व्याघ्रलोम । केशानशीर्षन्न्यशसेश्रियैशिखा-
सिᳫँहस्यलोमत्त्विषिरिन्द्रियाणि ॥ ९२ ॥ अङ्गान्न्यात्मन्भिषजात-
दश्विनात्मानमङ्गैःसमधात्सरस्वती । इन्द्रस्यरूपᳫँशतमानमायु-
श्चन्द्रेणज्ज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरस्वतीयोन्न्याङ्गर्भमन्तर-
श्विभ्याम्पत्नीसुकृतम्बिभर्ति । अपाᳫँरसेनव्वरुणोनसाम्नेन्द्रᳫँ-
श्रियैजनयन्नप्सुराजा ॥ ९४ ॥ तेजःपशूनाᳫँहविरिन्द्रियावत्प-

रिस्रुतापयंसासारंघम्मधुं । अश्विभ्यान्दुग्धम्भिषजासरंस्वत्या-
सुतासुताभ्यामृतंᳬसोम ऽइन्दुं ॥ ९५ ॥ इति संहितायामेकोन-
विंशतितमोऽध्यायः ॥

## ❀ अथ विंशोऽध्यायः ❀

[1]ॐक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि। मात्त्वाहिᳬसीन्मामाहिᳬ

---

१. एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चाऽर्धमात्रिकम् ॥ प्रणवं तु प्लुतं कुर्याद् व्याहृतीर्मात्रिका विदुः। (या.श्लो. १६-१७)

२. के पुरुषाः वर्णोच्चारणे असमर्थाः तान् आह—

न करालो न लम्बोष्ठो नाऽव्यक्तो नाऽनुनासिकः । गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति ॥ ( या० श्लो० २६ )

सीदं ॥ १ ॥ निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय
सुक्रतुः । मृत्योः पाहि विद्योत्पाहि ॥ २ ॥ देवस्य त्वा सवितुः

---

३. शङ्कितं भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वरं मूर्द्धिगतं तथा स्थान-विवर्जितम् ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश ॥ ( या० २८।२९ )

\४. हस्तसंनिवेशनप्रकारमाह—उत्तानं सोन्नतं किञ्चित् सुव्यक्ताङ्गुलिरक्षितम् । स्वरविच्च करं कुर्यात्प्रादेशाद्देशगामिनम् ॥ उत्तानम्—उपरितलम् । सोन्नतम्—अङ्गुल्यग्रेषु औन्नत्यविशिष्टम् । ( चा० ५१ )

५. स्वरिते व्यङ्गुलं विद्यान्निपाते तु षडङ्गुलम् । उत्थाने तु नवाङ्गुल्यमेतत्स्वारस्य लक्षणम् ॥

प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् । अश्श्विनोर्ब्भैषज्ज्ये-
नतेजसेब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनव्वीर्य्यायान्ना-
द्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्श्रियैयशसेभिषिञ्चामि ॥ ३ ॥
कोऽसिकतमोसिकस्म्मैत्वाकायत्वा । सुश्लोकसुमङ्गलसत्त्यराजन् ॥४॥
शिरोमेश्श्रीर्य्यशोमुखन्त्विषिः केशाश्च श्म्मश्श्रूणि । राजामेप्प्राणो-
ऽअमृतᳬसम्म्राट्चक्षुर्व्विराट्श्रोत्त्रम् ॥ ५ ॥ जिव्ह्वामेभद्द्रंव्वाङ्महोम-
नोमन्न्युःस्वराड्भामः । मोदाःप्प्रमोदाऽअङ्गुलीरङ्गानिमित्त्रम्मेस-
हः ॥६॥ बाहूमेबलमिन्द्रियᳬहस्तौमेकर्म्मव्वीर्य्यम् । आत्त्माक्षत्त्र-
मुरोमम ॥ ७ ॥ पृष्ठीर्म्मेराष्ट्रमुदरमᳬसौग्ग्रीवाश्च श्श्रोणी । ऊरूऽ-

अरत्नीजानुनीव्विशोमेङ्गानिसर्व्वतः ॥ ८ ॥ नाभिर्म्मेचित्तंव्विज्ञान-
म्पायुर्म्मेपचितिर्भसत् । आनन्दनन्दावाण्डौमेभगᳬसौभाग्ग्यम्प-
सः । जङ्घाब्भ्याम्पद्भ्यान्धर्म्मोस्मिव्विशिराजाप्प्रतिष्ठितᳬ ॥९॥
प्प्रतिक्षत्त्रेप्प्रतितिष्ठामिराष्ट्रेप्प्रत्यश्श्वेषुप्प्रतितिष्ठामिगोषु । प्रत्य-
ङ्गेषुप्प्रतितिष्ठाम्म्यात्त्मन्प्रतिप्प्राणेषुप्प्रतितिष्ठामिपुष्टेप्प्रतिद्द्यावा-
वापृथिव्व्योः प्प्रतितिष्ठामियज्ञे ॥ १० ॥ त्रयादेवाऽएकादशत्त्र-
यस्त्रिᳬशाः सुराधसᳬ । बृहस्प्पतिपुरोहितादेवस्यसवितुः सवे ।
देवादेवैरवन्तुमा ॥ ११ ॥ प्रथमाद्द्वितीयैर्द्द्वितीयास्तृतीयै-
स्तृतीयाᳬसत्त्येनसत्त्यंय्यज्ञेनयज्ञोयजुर्भिर्य्यजूᳬषिसामभिᳬसामान्यृ-

ग्निभक्षश्च ÷ पुरोनुवाक्याभिःपुरोनुवाक्यायाज्याभिर्याज्याव्वष-
ट्कारैर्व्वषट्काराऽआहुतिभिराहुतयोमेकामान्त्समर्द्धयन्तुभूःस्वाहा
॥ १२ ॥ लोमानिप्प्रयतिर्म्ममत्वङ्म्मऽआनतिरागतिः । माꣳस-
म्मऽउपनतिर्व्वस्वस्त्थिमज्जामऽआनतिः ॥ १३ ॥ यद्देवादेवहेड-
नन्देवासश्चकृमाव्वयम् । अग्निर्म्मातस्म्मादेनसोव्विश्श्वान्मुञ्च-
त्वꣳहसः ॥ १४ ॥ यदिदिवायदिनक्क्तमेनाꣳसिचकृमाव्वयम् ।
व्वायुर्म्मातस्म्मादेनसोव्विश्श्वान्मुञ्चत्वꣳहसः ॥ १५ ॥ यदिजाग्र-
द्यदिस्वप्नऽएनाꣳसिचकृमाव्वयम् । सूर्य्योमातस्म्मादेनसोव्वि-
श्श्वान्मुञ्चत्वꣳहसः ॥ १६ ॥ यद्ग्रामेयदरण्ण्येयत्सभायांय्यदिन्द्रि-

ये । यच्छूद्रे यदर्य्ये यदेनश्चकृमा व्वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसि ॥ १७ ॥ यदापोऽअघ्न्याऽइति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्च । अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयक्ष्यव मर्त्यैर्म्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥१८॥ समुद्रे ते हृदयमप्स्वन्तः सन्त्वा व्विशन्त्वोषधीरुतापः । सुमित्रियान ऽआपऽओषधयः सन्तु दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मः ॥ १९ ॥ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्ज्यमापः शुन्धन्तु मैनसः ॥ २० ॥ उद्वयन्तमसस्परि स्वः पश्यन्त ऽउत्तरम् । देवन्देवत्रा सूर्य्यमगन्म ज्ज्योतिरुत्तमम् ॥२१॥

अपोऽअद्द्यान्न्वंचारिषᳯरसेनसमंसृक्ष्महि । पर्यस्वानग्नऽआगम-
न्तम्मासᳯसृंजव्वर्च्चसाप्प्रजयाचधनेनच ॥२२॥ एधोस्येधिषीमहिंस-
मिदंसितेजोसितेजोमयिंधेहि । समाववर्त्तिपृथिवीसमुषाःसमुसूर्य्यः
समुव्विश्श्वमिदञ्जगत् । व्वैश्श्वानरज्ज्योतिर्भूयासंव्विभून्कामा-
न्व्यश्नवैभूःस्वाहा ॥२३॥ अब्भ्यादधामिसमिधमग्नेव्व्रतपतेत्वयि ।
व्व्रतञ्चश्श्रद्धाञ्चोपैमीन्धेत्वादीक्षितोऽअहम् ॥२४॥ यत्रब्ब्रह्म्मचक्ष-
त्रञ्चसम्म्यञ्चौचरतᳯसह । तंल्लोकम्पुण्ण्यम्प्रज्ञेषंयत्रदेवाःसहाग्निना
॥२५॥ यत्रेन्द्रश्श्चव्वायुश्श्चसम्म्यञ्चौचरतᳯसह । तंल्लोकम्पुण्ण्यम्प्रज्ञे-
षंयत्रंसेदिर्न्नव्विद्द्यते ॥२६॥ अᳯशुनातेऽअᳯशुःपृच्च्यताम्परुषापरुः

गन्धस्तेसोमंमवतुमदायरसोऽअच्च्युतः ॥२७॥ सिञ्चन्तिपरिषिञ्च-
त्युत्सिञ्चन्तिपुनन्तिच। सुरायैबभ्भ्रवैमदेकिन्त्वोव्वदतिकिन्त्वः ॥२८॥
धानावन्तङ्करम्भिणमपूपवन्तमुक्क्थिनम्। इन्द्रप्प्रातर्ज्जुषस्वनः ॥२९॥
बृहदिन्द्रायगायतमरुतोव्वृत्रहन्तमम्। येनज्ज्योतिरजनयन्नृतावृधो-
देवन्देवायजागृवि ॥ ३० ॥ अद्ध्वर्य्योऽअद्रिभिःसुतꣳसोमम्पवि-
त्रऽआनय। पुनाहीन्द्रायपातवे ॥ ३१ ॥ योभूतानामधिपतिर्य्यस्मिँ-
लोकाऽअधिश्रिताः। यऽईशेमहतोमहाँस्तेनगृह्णामित्वामहम्मयिगृ-
ह्णामित्वामहम् ॥ ३२ ॥ उपयामगृहीतोस्यश्विभ्भ्यान्त्वासरस्वत्यै-
त्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिरश्विभ्भ्यान्त्वासरस्वत्यैत्वेन्द्राय-

त्वासुत्राम्म्णे ॥ ३३ ॥ प्राणपामेऽअपानपाश्चक्षुष्पाःश्रोत्त्रपाश्चमे ।
व्वाचोमेव्विश्वभेषजोमनसोसिव्विलायकः ॥ ३४ ॥ अश्विनकृत-
स्यतेसरस्वतिकृतस्येन्द्रेणसुत्राम्म्णाकृतस्य । उपहूतऽउपहूतस्यभक्ष-
यामि ॥ ३५ ॥ समिद्धऽइन्द्रऽउषसामनीकेपुरोरुचापूर्व्वकृद्वावृधा-
नः । त्रिभिर्देवैस्त्रिꣳशताव्वज्रबाहुर्ज्जघानव्वृत्रंव्विदुरोव्ववार ॥३६॥
नराशꣳसःप्रतिशूरोमिमानस्तनूनपात्प्रतियज्ञस्यधाम । गोभिर्व्वपा-
वान्मधुनासमञ्जन्हिरण्ण्यैश्चन्द्रीयजतिप्रचेताः ॥ ३७ ॥ ईडितो-
देवैर्हरिवाँ२ऽअभिष्टिराजुह्वानोहविषाशर्द्धमानः । पुरन्दरोगोत्त्र-
भिद्वज्रबाहुरायातुयज्ञमुपनोजुषाणः ॥ ३८ ॥ जुषाणोबर्हिर्हरिवा-

न्न॒ऽइन्द्रं॑÷प्राचीनं॑सीदत्प्र॒दिशा॑पृथि॒व्याः॥ । उ॒रु॒प्रथा॑॑प्रथ॑मानं॑
स्यो॒नमा॑दि॒त्यैर॒क्क्तं॑व्व॒सु॒भिः॑स॒जोषा॑॑ ॥ ३९ ॥ इन्द्र॒न्दुर॑÷ कव॒ष्योऽ-
धाव॑माना॒वृषा॑णंवन्तु॒जन॑यः॑सु॒पत्नीः॑ । द्वारो॑दे॒वीर॒भितो॒ऽविश्र-
यन्ता॑सु॒वीरा॑व्वी॒रम्प्रथ॑माना॒महो॑भिः॑ ॥ ४० ॥ उ॒षासा॒नक्त्ता॑बृह॒ती
बृ॒हन्त॒म्पय॑स्वतीसु॒दुघे॒शूर॒मिन्द्रम् । तन्तु॑न्त॒तम्पेश॑सासं॒व्वय॑न्तीदे॒वाना॑-
न्दे॒वंय॑जत॑सु॒रु॒क्मे ॥ ४१ ॥ दैव्या॒मिमा॑ना॒मनु॑षः॑पुरु॒त्रा होता॑रा॒-
विन्द्र॑प्रथ॒मासु॒वाचा॑ । मू॒र्द्धन्य॒ज्ञस्य॒मधु॑ना॒दधा॑ना॒प्राचीन॒ञ्ज्योति॒र्ह॒-
विषा॑वृधातः॑ ॥ ४२ ॥ ति॒स्रो॑दे॒वीर्ह॒विषा॒व्वर्द्ध॑माना॒ऽइन्द्र॑ञ्जु॒षाणा
जन॑यो॒नपत्नीः॑ । अच्छि॑न्न॒न्तन्तु॒पय॑सा॒सर॑स्वतीडा॑दे॒वीभार॑तीव्वि॒-

श्श्वतूर्त्तिं ॥४३॥ त्वष्टादधच्छुष्ममिन्द्रायवृष्णेपाकोचिष्टुर्यशसे
पुरूणि। वृषायजन्वृषणम्भूरिरेतामूर्द्धन्न्यज्ञस्यसमनक्तुदेवान्॥४४॥
वनस्पतिरवसृष्टोनपाशैस्त्मन्न्यासमञ्जञ्छमितानदेवः । इन्द्रस्य-
हव्यैर्ज्जठरम्पृणानःस्वदातियज्ञम्मधुनाघृतेन ॥ ४५ ॥ स्तोकानामिन्दु
म्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् । घृतप्पुषामनसामोद-
मानाःस्वाहादेवाऽअमृतामादयन्ताम् ॥४६॥ आयात्विन्द्रोवसऽउपन-
ऽइहस्तुतःसधमादस्तुशूरः । वावृधानस्तविषीर्यस्यपूर्व्वीर्द्यौर्न्न-
क्षत्रमभिभूतिपुष्यात् ॥ ४७ ॥ आनऽइन्द्रोदूरादानऽआसादभिष्टिकृ-
दवसेयासदुग्रः । ओजिष्ठेभिर्न्नृपतिर्व्वज्रबाहुःसङ्गेसमत्सुतुर्व्व-

णिं÷पृतन्यून् ॥ ४८ ॥ आनऽइन्द्रोहरिभिर्य्यात्वच्छार्वाचीनोवसे-
राधसेच । तिष्ठातिवज्रीमघवाविरप्शीमंय्यज्ञमनुनोवाजसा-
तौ ॥ ४९ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ।
ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्र÷ ॥ ५० ॥
इन्द्र÷सुत्रामास्ववाँ२ऽअवोभिꣳसुमृडीकोभवतुव्विश्ववेदाꣳ । बाध-
तान्द्वेषोऽअभयङ्कृणोतुसुवीर्य्यस्यपतयꣳस्याम ॥ ५१ ॥ तस्यव्वयꣳ
सुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम । ससुत्रामास्ववाँऽइन्द्रोऽअ-
स्म्मेऽआराच्चिद्द्वेष÷सनुतर्य्युयोतु ॥ ५२ ॥ आमन्द्रैरिन्द्रहरिभि-
र्य्याहिमयूररोमभिꣳ । मात्वाकेचिन्नियमन्विन्नपाशिनोतिधन्वेवताँ

२ऽइंह्रि ॥ ५३ ॥ एवेदिन्द्रंव्वृषणंव्वज्रबाहुंव्वसिष्ठासोऽअभ्यर्चन्त्य-
र्कैः । सनस्तुतोव्वीरवद्धातुगोमद्यूयम्पातस्वस्तिभिःसदानः ॥५४॥
समिद्धोऽअग्निरश्विनातप्तोघर्मोव्विराट्सुतः । दुहेधेनुःसरस्व-
तीसोमंशुक्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजासुतेऽश्विनोभासर-
स्वती । मद्ध्वारजाᳪंसीन्द्रियमिन्द्रायपथिभिर्व्वहान् ॥ ५६ ॥ इन्द्रा-
येन्दुᳪंसरस्वतीनराशᳪंसेननग्नहुम् । अधातामश्विनामधुभेषज-
म्भिषजासुते ॥ ५७ ॥ आजुह्वानासरस्वतीन्द्रायेन्द्रियाणिव्वीर्य्यम् ।
इडाभिरश्विनाविषᳪंसमूर्जᳪंसᳪंरयिन्दधुः ॥ ५८ ॥ अश्विनानमु-
चेःसुतᳪंसोमᳪंशुक्रम्परिस्रुता । सरस्वतीतमाभरद्बर्हिषेन्द्रायपा-

तंवे ॥ ५९ ॥ कुवृष्युनव्यचस्वतीरश्विभ्यान्नदुरोदिशः । इन्द्रो
नरोदसीऽउभेदुहेकामान्त्सरस्वती ॥ ६० ॥ उषासानक्तमश्विना
दिवेन्द्रंसायमिन्द्रियैः । सञ्जानानेसुपेशसासमञ्जातेसरस्वत्था
॥६१॥ पातन्नोऽअश्विनादिवापाहिनक्तंसरस्वति । दैव्याहोता-
राभिषजापातमिन्द्रंसचासुते ॥ ६२ ॥ तिस्रस्त्रेधासरस्वत्यश्विना
भारतीडा । तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्म्मदम् ॥ ६३ ॥ अ-
श्विनाभेषजम्मधुभेषजन्नःसरस्वती । इन्द्रेत्वष्टायशःश्रियंरूपं-
रूपमधुःसुते ॥ ६४ ॥ ऋतुथेन्द्रोवनस्प्पतिःशशमानःपरिस्रुता ।
कीलालमश्विभ्याम्मधुदुहेधेनुःसरस्वती ॥ ६५ ॥ गोभिर्न्नसोमम-

श्विनामासरेणपरिस्रुता । समधातꣳसरस्वत्यास्वाहेन्द्रेसुतम्मधु
॥ ६६ ॥ अश्विनाहविरिन्द्रियन्नमुचेर्द्धियासरस्वती । आशुक्रमासु-
राद्वसुमघमिन्द्रायजभ्रिरे ॥ ६७ ॥ यमश्विनासरस्वतीहविषेन्द्रम-
वर्द्धयन् । सबिभेदव्वलम्मघवन्नमुचावासुरेसचा ॥ ६८ ॥ तमिन्द्र-
म्पशवꣳसचाश्विनोभासरस्वती । दधानाऽअभ्यनूषतहविषायज्ञऽ
इन्द्रियैः ॥ ६९ ॥ यऽइन्द्रऽइन्द्रियन्दधुःसविताव्वरुणोभगः । ससु-
त्रामाहविष्पतिर्य्यजमानायसश्चत ॥ ७० ॥ सविताव्वरुणोदधद्य-
जमानायदाशुषे । आदत्तनमुचेर्व्वसुसुत्रामाबलमिन्द्रियम् ॥ ७१ ॥
व्वरुणꣳक्षत्रमिन्द्रियम्भगेनसविताश्रियम् । सुत्रामायशसाबलन्दधा

नाप्त्रममाशत ॥ ७२ ॥ अश्विनागोभिरिन्द्रियमश्वेभिर्वीर्यम्बलम् ।
हविषेन्द्रᳬसरस्वतीयजमानमवर्द्धयन् ॥ ७३ ॥ तानासत्यासुपेशसा-
हिरण्यवर्त्तनीनरा । सरस्वतीहविष्मतीन्द्रकर्म्मसुनोवत ॥७४॥
ताभिषजासुकर्म्मणासासुदुघासरस्वती । सवृत्रहाशतक्रतुरिन्द्राय
दधुरिन्द्रियम् ॥ ७५ ॥ युवᳬसुराममश्विनानमुचावासुरेसचा ।
विपिपानाᳬसरस्वतीन्द्रङ्कर्म्मस्वावत ॥ ७६ ॥ पुत्रमिवपितरावश्विव-
नोभेन्द्रावथुᳬकाव्यैर्दᳬसनाभिः । यत्सुरामंव्यपिवᳬशचीभिᳬसर-
स्वतीत्वामघवन्नभिष्णक् ॥ ७७ ॥ यस्मिन्नश्वासऽऋषभासऽउक्ष-
णोव्वशामेषाऽअवसृष्टासऽआहुताः । कीलालपेसोमपृष्ठायव्वेधसे

हृदामतिञ्जनयचारुमग्ग्नये ॥ ७८ ॥ अहाव्यग्नेहविरास्येतेस्रुचीव-
घृतञ्चम्म्वीवसोमः । व्वाजसनिᳫं रयिमस्मेसुवीरम्प्रशस्तन्धेहियश-
सम्बृहन्तम् ॥७९॥ [ शतम्—१२०० ] अश्विनातेजसाचक्षुः प्प्रा-
णेनसरस्वतीव्वीर्य्यम् । व्वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ ८० ॥
गोमदूषुणासत्याश्श्वावद्यातमश्विना । व्वर्त्तीरुद्रानृपाय्यम् ॥८१॥
नयत्परोनान्तरऽआदधर्षद्वृषण्वसू । दुःशᳫं सोमर्त्त्योरिपुः ॥ ८२ ॥
तानऽआवोढमश्विनारयिम्पिशङ्गसन्दृशम् । धिष्ण्यावरिवोविदम्
॥ ८३ ॥ पावकानःसरस्वतीव्वाजेभिर्व्वाजिनीवती । यज्ञंव्वष्टुधिया-
वसुः ॥ ८४ ॥ चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् । यज्ञन्दधे

सरस्वती ॥ ८५ ॥ महोऽअर्णः सरस्वती प्रचेतयति केतुना । धियो-
विश्वाविराजति ॥ ८६ ॥ इन्द्रायाहिचित्रभानोसुताऽइमेत्वाय-
वः । अण्वीभिस्तनापूतासः ॥ ८७ ॥ इन्द्रायाहिधियेषितोवि-
प्रजूतःसुतावतः । उपब्रह्माणिवाघतः ॥ ८८ ॥ इन्द्रायाहितूतु-
जानऽउपब्रह्माणिहरिवः । सुतेदधिष्वनश्चनः ॥ ८९ ॥ अश्वि-
नापिबताम्मधुसरस्वत्यासजोषसा । इन्द्रःसुत्रामाव्वृत्रहाजुषताᳩ
सोम्म्यम्मधु ॥ ९० ॥

इति संहितायां विंशतितमोऽध्यायः ।

# ❀ अथ एकविंशोऽध्यायः ❀

ॐ इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृडय । त्वाम॑व॒स्युरा च॑के ॥१॥
तत्त्वा॑ यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑ । अ
हे॑डमानो वरुणे॒ह बो॒द्ध्युरु॑शᳪ स॒मान॒ऽआयुः॒ प्र मो॑षीः ॥ २ ॥ त्वन्नो॑ऽ-

---

१. 'शुचिना' स्नानाचमनादिभिः शौचयुक्तेन ब्रह्मचर्यवता च त्रैवर्णिकेन स्वाध्यायोऽध्येतव्य इति सूत्रशेषः । 'शुचौदेशे' शूद्राद्यनुपहतदेशे स्वाध्यायोऽध्येतव्यः । 'शूद्रपतितयोरसᳪश्रावᳪस्वाध्यायोऽध्येतव्यः' शूद्रपतितादयो ( पतितो ब्रह्महत्यादिपातकेन ) यथा न शृण्वन्ति तथा शुद्धेन शुद्धायां भूमौ स्वाध्यायोऽध्येतव्यः । ( शु० य० प्रा० १७–१९ )

२. 'शुश्रुणुपृकृवृभ्यश्छन्दसि' ६।४।१०२ इत्यनेन साधुः ।

अग्ग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः । यजिष्ठोव-
ह्निहतमᳬःशोशुचानोव्विश्श्वाद्द्वेषाᳬंसिप्प्रमुमुग्ग्ध्यस्म्मत् ॥ ३ ॥ स-
त्वन्नोऽअग्ग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्व्युष्टौ । अवयक्क्ष्वनो
व्वरुणᳬंरराणोव्वीहिमृडीकᳬंसुहवोनऽएधि ॥ ४ ॥ महीमूषुमातरᳬं
सुव्व्रतानामृतस्यपत्क्नीमवसेहुवेम । तुविक्षत्त्रामजरन्तीमुरूचीᳬंसु-
शर्म्माणमदितिᳬंसुप्प्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीन्द्यामनेहसᳬं
सुशर्म्माणमदितिᳬंसुप्प्रणीतिम् । दैवीन्नावᳬंस्वरित्रामनागसमस्र-

---

१. इत्यादिस्थलेषु पृथिवि, दिवि, उपरि, चर्षणि, शकुनि, यासिरभ्यः, ३।८४, एतेभ्यो भाविभ्यः परः सकारः प्रकृत्या भवति संहितायाम् ।

वन्तीमारुहेमास्वस्तये ॥ ६ ॥ सुनावमारुहेयमस्रवन्तीमनागसम् ।
शतारित्राᳬस्वस्तये ॥ ७ ॥ आनोमित्रावरुणाघृतैर्ग्गव्यूतिमुक्षतम् ।
मद्ध्वारजाᳬसिसुक्रतू ॥ ८ ॥ प्रबाहवासिसृतञ्जीवसेनऽआनोग-
व्यूतिमुक्षतङ्घृतेन । आमाजनेश्श्रवयतंयुवानाश्श्रुतम्मेमित्रावरु-
णाहवेमा ॥ ९ ॥ शन्नोभवन्तुव्वाजिनोहवेषुदेवतातामितद्द्रवःस्व-
र्काः । जम्भयन्तोहिंव्वृकᳪरक्षाᳬसिसनेम्म्यस्म्मद्युयवन्नमीवाः
॥ १० ॥ व्वाजेव्वाजेवतव्वाजिनोनोधनेषुव्विप्पाऽअमृताऽऋतज्ञाः ।
अस्यमद्ध्वः पिबतमादयद्ध्वन्तृप्पायातपथिभिर्द्देवयानैः ॥ ११ ॥
समिद्धोऽअग्निःसमिधासुसमिद्धोव्वरेण्यः । गायत्रीच्छन्दऽइन्द्रिय-

न्त्र्यविर्गौर्व्वयोदधुः ॥१२॥ तनूनपाच्छुचिव्व्रतस्तनूपाश्च सरस्वती ।
उष्णिहाच्छन्दऽइन्द्रियन्दित्यवाड्गौर्व्वयोदधुः ॥ १३ ॥ इडाभिर-
ग्निरीड्यः सोमो देवोऽअमर्त्यः । अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्गौ-
र्व्वयोदधुः ॥ १४ ॥ सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः । बृह-
तीच्छन्दऽइन्द्रियन्त्रिवत्सो गौर्व्वयोदधुः ॥ १५ ॥ दुरो देवीर्दिशो म-
हीर्ब्रह्मा देवो बृहस्पतिः । पङ्क्तिश्छन्दऽइहेन्द्रियन्तुर्य्यवाड्गौ-
र्व्वयोदधुः ॥ १६ ॥ उषे यह्वी सुपेशसा विश्वे देवाऽअमर्त्याः । त्रि-
ष्टुप्छन्दऽइहेन्द्रियम्पष्ठवाड्गौर्व्वयोदधुः ॥ १७ ॥ दैव्या होतारा-
भिषजेन्द्रेण सयुजा युजा । जगतीच्छन्दऽइन्द्रियमनड्वान्गौर्व्वयोदधुः

॥ १८ ॥ तिस्त्रऽइडासरस्वतीभारतीमरुतोव्विशः । व्विराट्छन्दऽइ-
हेन्द्रियन्धेनुर्ग्गौर्न्नवयोदधुः ॥ १९ ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्रा-
ग्नीपुष्टिवर्द्धना । द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः ॥ २० ॥
शमितानोव्वनस्पतिः सविताप्प्रसुवन्भगम् । ककुप्च्छन्दऽइहेन्द्रि-
यंव्वशाव्वेहद्वयोदधुः ॥ २१ ॥ स्वाहायज्ञंव्वरुणः सुक्षत्रोभेषजङ्करत् ।
अतिच्छन्दाऽइन्द्रियंबृहदृषभोगौर्व्वयोदधुः ॥ २२ ॥ व्वसन्तेनऽऋ-
तुनादेवाव्वसवस्त्रिवृतास्तुताः । रथन्तरेणतेजसाहविरिन्द्रेव्वयो-
दधुः ॥ २३ ॥ ग्रीष्मेणऽऋतुनादेवारुद्राः पञ्चदशेस्तुताः । बृहताय
शसाबलः हविरिन्द्रेव्वयोदधुः ॥ २४ ॥ व्वर्षाभिर्ऋतुनादित्यास्तोमे

सप्तदशोस्तुताः । व्वैरूपेणव्विशौजंसाहविरिन्द्रेव्वयोदधुः ॥ २५ ॥
शारदेनऽऋतुनादेवाऽएकविंशऽऋभवस्तुताः । व्वैराजेनश्रिया-
श्रियंहविरिन्द्रेव्वयोदधुः ॥ २६ ॥ हेमन्तेनऽऋतुनादेवास्त्रिणवेम-
रुतस्तुताः । बलेनशक्करीःसहोहविरिन्द्रेव्वयोदधुः ॥ २७ ॥ शैशि-
रेणऽऋतुनादेवास्त्रयस्त्रिंशेमृतास्तुताः । सत्त्येनरेवतीःक्षत्रहवि-
रिन्द्रेव्वयोदधुः ॥ २८ ॥ होतायक्षत्समिधाग्निमिडस्पदेश्विनेन्द्रं
सरस्वतीमजोधूम्म्रोनगोधूमैःकुवलैर्भेषजम्मधुशष्पैर्न्नतेजऽइन्द्रिय-
म्पयःसोमःपरिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्यज ॥ २९ ॥ हो-
तायक्षत्तनूनपात्सरस्वतीमविर्म्मेषोनभेषजम्पथामधुमताभरन्नश्विने-

न्द्रायव्वीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिःपयᳫंसोमःपरिस्रु-
ताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३० ॥ होतायक्षन्नराशᳫंस-
न्नग्नहुम्पतिᳫंसुरयाभेषजम्मेषःसरस्वतीभिषग्ग्रथोनचन्द्र्यश्विनो-
र्व्वपाऽइन्द्रस्यव्वीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिःपयᳫंसो-
मःपरिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३१ ॥ होतायक्षद्दि-
डेडितऽआजुह्वानᳫंसरस्वतीमिन्द्रम्बलेनव्वर्द्धयन्नृषभेणगवेन्द्रिय-
मश्विनेन्द्रायभेषजंय्यवैःकर्कन्धुभिर्म्मधुलाजैर्न्नमासरम्पयᳫंसोमः
परिस्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३२ ॥ होतायक्षद्बर्हि-
रूर्ण्णम्म्रदाभिषङ्नासत्याभिषजाश्विनाश्वाशिशुमतीभिषग्धेनुःस-

रस्वतीभिषग्दुहऽइन्द्रायभेषजम्पयꣳसोमꣳपरिस्रुताघृतम्मधुव्यन्त्वा-
ज्ज्यस्यहोतर्यज ॥ ३३ ॥ होतायक्षद्दुरोदिशꣳकवष्योनव्यच-
स्वतीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुःसरस्वत्यश्वि-
नेन्द्रायभेषजꣳशुक्रन्नज्ज्योतिरिन्द्रियम्पयꣳसोमꣳपरिस्रुताघृतम्मधु-
व्यन्त्वाज्ज्यस्यहोतर्यज ॥ ३४ ॥ होतायक्षत्सुपेशसोषेनक्तन्दि-
वाश्विनासमञ्ज्ञातेसरस्वत्यात्त्विषिमिन्द्रेनभेषजꣳश्येनोनरजसाहृदा-
श्रियानमासरम्पयꣳसोमꣳपरिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य-
ज ॥ ३५ ॥ होतायक्षद्दैव्याहोतारामिषजाश्विनेन्द्रन्नजागृविदिवान-
क्तन्नभेषजैःशूषꣳसरस्वतीभिषक्सीसेनदुहऽइन्द्रियम्पयꣳसोमꣳप-

रिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३६ ॥ होतायक्षत्तिस्रो-
देवीर्न्भेषजन्त्रयस्त्रिधातवोपसोरूपमिन्द्रेहिरण्ण्ययमश्विनेडानभा-
रतीव्वाचासरस्वतीमहऽइन्द्रायदुहइन्द्रियम्पयꣳसोमः परिस्रुताघृत-
म्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३७ ॥ होतायक्षत्सुरेतसमृषभन्न
र्य्यापसन्त्वष्टारमिन्द्रमश्विनाभिषजन्नसरस्वतीमोजोनजूतिरिन्द्रि-
यंव्वृकोनरभसोभिषग्ग्यशꣳसुरयाभेषजꣳश्रियानमासरम्पयꣳसोमः
परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३८ ॥ होतायक्षद्वन-
स्प्पतिꣳशमितारꣳशतक्क्रतुम्भीमन्नमन्न्युꣳराजानंव्याघ्रन्नमसा-
श्विनाभामꣳसरस्वतीभिषगिन्द्रायदुहऽइन्द्रियम्पयꣳसोमः परिस्रु-

तांघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३९ ॥ होतायक्षदग्निꣳस्वा-
हाज्ज्यस्यस्तोकानाꣳस्वाहामेदसाम्पृथक्स्वाहाच्छागमश्श्विभ्याꣳ
स्वाहामेषꣳसरस्वत्यैस्वाहाऽऋषभमिन्द्रायसिꣳहायसहसऽइन्द्रियꣳ
स्वाहाग्निन्नभेषजꣳस्वाहासोममिन्द्रियꣳस्वाहेन्द्रꣳसुत्रामाणꣳसवि-
तारंव्वरुणम्भिषजाम्पतिꣳस्वाहाव्वनस्पतिम्प्रियम्पाथोनभेषजꣳ
स्वाहादेवाऽआज्ज्यपाजुषाणोऽअग्निर्भेषजम्पयःसोमःपरिस्रुताघृत-
म्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ४० ॥ होतायक्षदश्श्विनौछागस्य
व्वपायामेदसोजुषेताꣳहविर्होतर्य्यज । होतायक्षत्सरस्वतीम्मेषस्य
व्वपायामेदसोजुषताꣳहविर्होतर्य्यज । होतायक्षदिन्द्रमृषभस्यव्व-

पायामँदँसोजुषतांॅहविर्होतर्य्यज ॥ ४१ ॥ होतायक्षदश्श्विनौसरं-
स्वतीमिन्द्रँ सुत्रामाणमिमेसोमाः सुरामाणश्छागैर्न्नमेषैर्ऋषभैः सुताः
शष्पैर्न्नतोक्मभिर्ल्लाजैर्म्महस्वन्तोमदामासरेणपरिष्कृताः शुक्राः
पयस्वन्तोमृताः प्प्रस्थितावोमधुश्च्युतस्तानश्श्विनासरस्वतीन्द्रः सु-
त्रामाव्वृत्रहाजुषन्तांॅसोम्म्यम्मधुपिबन्तुमदन्तुव्व्यन्तुहोतर्य्यज
॥ ४२ ॥ होतायक्षदश्श्विनौछागस्यहविषऽआत्तामद्यमध्यतोमेदऽ-
उद्भृतम्पुराद्द्वेषोभ्भ्यः पुरापौरुषेय्याग्गृभोघस्तान्नूनङ्घासेऽअज्ज्रा-
णांय्यवसप्प्रथमानांॅसुमत्क्षराणांॅशतरुद्रियाणामग्निष्वात्तानां-
म्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामतऽउत्सादतोङ्गादङ्गादव-

त्तानाङ्करंतऽएचाश्विनाजुषेताᳬंहविर्होतर्य्यज ॥ ४३ ॥ होतायक्ष-
त्सरस्वतीम्मेषस्यहविषऽआवयद्दद्यमद्ध्यतोमेदऽउद्भृतम्पुराद्द्वे
षोभ्यःपुरापौरुषेय्यागृभोघसन्नूनङ्घासेऽअज्ज्राणाय्यवसप्प्रथमा-
नाᳬंसुमत्क्षराणाᳬंशतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनाना-
म्पाश्र्वतःश्रोणितःशितामतऽउत्सादतोङ्गादङ्गादवत्तानाङ्करदेवᳬंसर-
स्वतीजुषताᳬंहविर्होतर्य्यज ॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्यहविषऽ-
आवयद्दद्यमद्ध्यतोमेदऽउद्भृतम्पुराद्द्वेषोभ्यःपुरापौरुषेय्यागृभो
घसन्नूनङ्घासेऽअज्ज्राणाय्यवसप्प्रथमानाᳬंसुमत्क्षराणाᳬंशतरुद्रि-
याणामग्निष्वात्तानाम्पीवोपवसनानाम्पाश्र्वतःश्रोणितःशितामतऽ-

उत्सादतोऽङ्गादङ्गादवत्तानाङ्करद्देवमिन्द्रो जुषताᳩंहविर्होतर्य्यज ॥ ४५ ॥
होता यक्षद्वनस्प्पतिमभिहि पिष्टतमया रभिष्ठया रशनयाधित । यत्रा-
श्विनोश्छागस्य हविषः प्प्रिया धामानि यत्र सरस्वत्या मेषस्य हविषः
प्प्रिया धामानि यत्रेन्द्रस्य ऽऋषभस्य हविषः प्प्रिया धामानि यत्रा-
ग्नेः प्प्रिया धामानि यत्र सोमस्य प्प्रिया धामानि यत्रेन्द्रस्य सुत्राम्म्णः
प्प्रिया धामानि यत्र सवितुः प्प्रिया धामानि यत्र व्वरुणस्य प्प्रिया धामानि
यत्र व्वनस्प्पतेः प्प्रिया पाथाᳩंसि यत्र देवानामाज्ज्यपानाम्प्प्रिया धा-
मानि यत्राग्नेर्होतुः प्प्रिया धामानि तत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपाव-
स्रक्षद्रभीयस ऽइव कृत्वी करद्देवन्देवो व्वनस्प्पतिर्ज्जुषताᳩं हविर्होत-

र्य्यज ॥ ४६ ॥ होतायक्षदग्निꣳ स्विष्टकृतमयाडग्निरश्विनो
श्छागस्यहविषः प्प्रियाधामान्ययाट्सरस्वत्यामेषस्यहविषः
प्प्रियाधामान्ययाडिन्द्रस्यऽऋषभस्यहविषः प्प्रियाधामान्यया-
डग्नेः प्प्रियाधामान्ययाट्सोमस्यप्प्रियाधामान्ययाडिन्द्रस्यसुत्रा-
म्णः प्प्रियाधामान्ययाट्सवितुः प्प्रियाधामान्ययाड्वरुणस्य
प्प्रियाधामान्ययाड्वनस्पतेः प्प्रियापाथाꣳस्ययाड्देवानामाज्यपा-
नाम्प्प्रियाधामानियक्षदग्नेर्होतुः प्प्रियाधामानियक्षत्स्वम्महिमानमाय-
जतामेज्याऽइषः कृणोतुसोऽअध्वराजातवेदाजुषताꣳहविर्होतर्य्यज
॥ ४७ ॥ देवम्बर्हिः सरस्वतीसुदेवमिन्द्रेऽअश्विना । तेजोनचक्षुर-

क्ष्योर्ब्बर्हिषादधुरिन्द्रियंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥ ४८ ॥ देवी-
द्वारोऽअश्विनाभिषजेन्द्रे सरस्वती । प्राणन्नवीर्य्यन्नसिद्द्वारोद-
धुरिन्द्रियंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥ ४९ ॥ देवीऽउषासाव
श्विनासुत्रामेन्द्रेसरस्वती । बलन्नव्वाचमास्यऽउषाब्भ्यान्दधुरि-
न्द्रियंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥ ५० ॥ देवीजोष्ट्रीसरस्वत्य-
श्विनेन्द्रमवर्द्धयन् । श्रोत्रन्नकर्णयोर्य्यशोजोष्ट्रीब्भ्यान्दधुरिन्द्रि-
यंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥ ५१ ॥ देवीऽऊर्ज्जाहुतीदुघेसुदु-
घेन्द्रेसरस्वत्यश्विनाभिषजावतः । शुक्रन्नज्ज्योतिस्तनयोराहुतीध-
त्तऽइन्द्रियंव्वसुवनेंव्वसुधेयंस्यव्यन्तुयज ॥ ५२ ॥ देवादेवानाम्भि-

षड्ढाहोतारावविन्द्रमुश्शिवनां । व्वषट्कारैःसरस्वतीत्त्विषिन्नहृदयेमति-
ध्ंहोतृभ्भ्यान्दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्व्यन्तुषज ॥ ५३ ॥ दे-
वीस्तिस्रस्तिस्रोदेवीरश्शिवनेडासरस्वती । शूषन्नमद्ध्येनाब्भ्यामिन्द्रा-
यदधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्व्यन्तुषज ॥ ५४ ॥ देवऽइन्द्रोनराश-
ध्ंसस्त्रिवरूथःसरस्वत्याश्शिवब्भ्यामीयतेरथः । रेतोनरूपमम्मृतञ्ज-
नित्रमिन्द्रायत्वष्ट्टादधदिन्द्रियाणिव्वसुवनेव्वसुधेयस्यव्व्यन्तुषज
॥ ५५ ॥ देवोदेवैर्व्वनस्प्पतिर्हिरण्ण्यपर्णोऽअश्शिवब्भ्यार्ठसरस्वत्यासु-
पिप्पलऽइन्द्रायपच्च्यतेमधु । ओजोनजूतिर्ऋषभोनभामंव्वनस्प्पति-
न्नोदधदिन्द्रियाणिव्वसुवनेव्वसुधेयस्यव्व्यन्तुषज ॥ ५६ ॥ देवम्बर्हिर्वा-

रितीनामदूध्वरेस्तीर्ण्णम्‌शिश्वभ्यामूर्ण्णम्म्रदाᳪसरस्वत्यास्योनमिन्द्र-
तेसदः । ईशायैमन्न्युᳪराजानम्बर्हिषादधुरिन्द्रियंव्वसुवनेव्वसु-
धेयस्यव्यन्तुयज ॥ ५७ ॥ देवोऽअग्निःस्विष्टकृद्देवान्न्यक्षद्यथायथᳪ
होताराविन्द्रमश्विनाव्वाचाव्वाचᳪसरस्वतीमग्निᳪसोमᳪस्विष्ट-
कृत्स्विष्टऽइन्द्रः सुत्रामासवितावरुणोभिषगिष्टोदेवोव्वनस्पतिᳪ
स्विष्टादेवाऽआज्ज्यपाःस्विष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृद्यशो-
नदधदिन्द्रियमूर्ज्जमपचितिᳪस्वधांव्वसुवनेव्वसुधेयस्यव्यन्तुयज ।५८।
अग्निमद्यहोतारमवृणीतायंयजमानᳪपचन्पक्तीᳪपचन्पुरोडाशा-

१. इत्यत्र 'न होतरि' २।१।१६ इत्यनेन होतृशब्दे प्रत्यये अचेत्ययं ह्रस्वो न दीर्घमापद्यते।

न्बध्नन्नशिश्वभ्याञ्छागꣳसरस्वत्यैमेषमिन्द्रायऽऋषभꣳसुन्वन्न-
शिश्वभ्याꣳसरस्वत्याऽइन्द्रायसुत्राम्णेसुरासोमान् ॥ ५९ ॥ सु-
पस्थाऽअद्यदेवोव्वनस्पतिरभवदशिश्वभ्याञ्छागेनसरस्वत्यैमेषेणे-
न्द्रायऽऋषभेणाक्षꣳस्तान्मेदस्तꣳप्रतिपचताग्गृभीषतावीवृधन्तपुरोडा-
शैरपुरशिश्वनासरस्वतीन्द्रः सुत्रामासुरासोमान् ॥ ६० ॥ त्वा-
मद्यऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायंय्यजमानोबहुभ्यऽआस
ङ्गतेभ्यऽएषमेदेवेषुव्वसुव्वार्य्यायक्ष्यतऽइतितायादेवादेवदानान्यदु-
स्तान्यस्माऽआचशास्वाचगुरस्वेषितश्चहोतरसिभद्द्रवाच्याय

ष्प्रेषितोमानुषꣳसूक्तवाकायसूक्ताब्रूहि ॥ ६१ ॥ इति संहितायां
एकविंशोऽध्यायः ।

## ❀ अथ द्वाविंशोऽध्यायः ❀

ॐ तेजोसिशुक्रममृतमायुष्पाऽआयुर्म्मेपाहि । देवस्यत्वासवि-
तुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्यामाददे ॥ १ ॥ इमाम-
गृभ्णन्रशनामृतस्य पूर्व्वऽआयुषिविदथेषुकव्या । सानोऽअस्मिम-
न्त्सुतऽआबभूवऽऋतस्यसामन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअसिभु-
वनमसियन्तासिधर्त्ता । सत्वमग्निंवैश्वानरꣳसप्रथसङ्गच्छस्वाहा

कृतꣳ ॥ ३ ॥ स्वगात्वादेवेब्भ्यः प्रजापतयेब्ब्रह्मन्नश्श्वम्भन्त्स्यामि
देवेब्भ्यः प्प्रजापतयेतेनराद्ध्यासम् । तम्बधानदेवेब्भ्यः प्प्रजापत-
येतेनराध्नुहि ॥ ४ ॥ प्रजापतयेत्त्वाजुष्टम्प्रोक्षामीन्द्राग्निब्भ्यान्त्वाजु-
ष्टम्प्रोक्षामिव्वायवेत्त्वाजुष्टम्प्रोक्षामिव्विश्श्वेब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्रो-
क्षामिसर्वेब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्रोक्षामि । योऽअर्व्वन्तञ्जिघाꣳस
तितमब्भ्यमीतिव्वरुणः परोमर्त्तः परः श्श्वा ॥ ५ ॥ अग्नयेस्वाहासोमाय
स्वाहापाम्मोदायस्वाहासवित्रेस्वाहाव्वायवेस्वाहाव्विष्णवेस्वाहेन्द्रा-
यस्वाहाबृहस्पतयेस्वाहामित्रायस्वाहाव्वरुणायस्वाहा ॥ ६ ॥ हिङ्कारा-
यस्वाहाहिङ्कृतायस्वाहाक्क्रन्दतेस्वाहावक्क्रन्दायस्वाहाप्प्रोथतेस्वाहा

ष्प्रश्रोथायस्वाहागन्धायस्वाहाघ्रातायस्वाहानिविष्टायस्वाहोपवि-
ष्टायस्वाहासन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वा-
हास्वपतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भ-
माणायस्वाहाविचृतायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहाय-
नायस्वाहाप्रायणायस्वाहा ॥ ७ ॥ यतेस्वाहाधावतेस्वाहोद्द्रावाय
स्वाहोद्द्रुतायस्वाहाशूकारायस्वाहाशूकृतायस्वाहानिषण्णायस्वा-
होत्थितायस्वाहाजवायस्वाहाबलायस्वाहाविवर्त्तमानायस्वाहावि-
वृत्तायस्वाहाविधून्वानायस्वाहाविधूतायस्वाहाशुश्रूषमाणाय
स्वाहाशृण्वतेस्वाहेक्षमाणायस्वाहेक्षितायस्वाहावीक्षितायस्वाहा

निमेषायस्वाहायदत्तितस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रंङ्कुरो-
तितस्मैस्वाहाकुर्व्वतेस्वाहाकृतायस्वाहा ॥ ८ ॥ तत्सवितुर्व्वरेण्यम्भ-
र्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात् ॥ ९ ॥ हिरण्यपाणिमूत-
येसवितारमुपह्वये । सचेत्तादेवतापदम् ॥१०॥ देवस्यचेततोमहीम्प्र-
सवितुर्हवामहे । सुमतिᳫसत्यराधसम् ॥११॥ सुष्टुतिᳫसुमतीवृधो
रातिᳫसवितुरीमहे । प्रदेवायमतीविदे ॥ १२ ॥ रातिᳫसत्पतिम्महेस
वितारमुपह्वये । आसवन्देववीतये ॥१३॥ देवस्यसवितुर्म्मतिमासवं
विश्वदेव्यम् । धियाभगम्मनामहे ॥१४॥ अग्निᳫस्तोमेनबोधयसमि-
धानोऽअमर्त्त्यम् । हव्यादेवेषुनोदधत् ॥१५॥ सहव्यवाडमर्त्त्यऽउशि-

ग्दूतश्चनोहितः । अग्निर्द्धियासमृण्वति ॥ १६ ॥ अग्निन्दूतम्पुरोदधे
हव्यवाहमुपब्रुवे । देवाँ २ आसादयादिह ॥ १७ ॥ अजीजनोहिपव-
मानसूर्य्यंविधारेशक्क्मनापयः । गोजीरयारꣳहमाणःपुरन्ध्या
॥ १८ ॥ विभूम्मात्राप्रभूःपित्राश्श्वोसिहयोस्यत्योसिमयोस्यर्व्वासि
सप्तिरसिव्वाज्ज्यसिव्वृषासिनृमणाऽअसि । ययुर्न्नामासिशिशुर्न्ना-
मास्यादित्यानाम्पत्वान्विहिदेवाऽआशापालाऽएतन्देवेभ्योश्श्वम्मे-
धायप्प्रोक्षितꣳरक्षतेहरन्तिरिहरमतामिहधृतिरिहस्वधृतिःस्वाहा॥१९॥
कायस्वाहाकस्मैस्वाहाकतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनः
प्प्रजापतयेस्वाहाचित्तंव्विज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यै

सुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यै
बृहत्यैस्वाहापूष्णेस्वाहापूष्णेप्रपथ्यायस्वाहापूष्णेनरन्धिषायस्वा-
हात्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपायस्वाहाव्विष्ण्णवेस्वा
हाविष्ण्णवेनिभूयपायस्वाहाविष्ण्णवेशिपिविष्टायस्वाहा ॥ २० ॥ व्वि-
श्श्वोदेवस्यनेतुर्म्मर्त्तोव्वुरीतसख्यम् । व्विश्श्वोरायऽइषुध्यतिद्युम्म्नं
व्वृणीतपुष्ष्यसेस्वाहा ॥२१॥ आब्रह्मन्न्ब्राह्म्मणोब्ब्रह्म्मवर्च्चसीजा-
यतामाराष्ट्रेराजन्न्यः शूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ग्ध्री
धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषाजिष्ष्णूरथेष्ठाः सभेयोयुवा-
स्ययजमानस्यव्वीरोजायतान्निकामेनिकामेनःपर्ज्जन्न्योव्वर्षतुफलव-

त्योनऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ २२ ॥ प्राणा-
यस्वाहाऽपानायस्वाहाव्यानायस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वाहा
वाचेस्वाहामनसेस्वाहा ॥ २३ ॥ प्राच्यैदिशेस्वाहार्वाच्यैदिशेस्वा-
हादक्षिणायैदिशेस्वाहार्वाच्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहार्वा-
च्यैदिशेस्वाहोदीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वा-
हार्वाच्यैदिशेस्वाहावाच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २४ ॥
अद्भ्यः स्वाहावार्भ्यः स्वाहोदकायस्वाहातिष्ठन्तीभ्यः स्वाहास्रव-
न्तीभ्यः स्वाहास्यन्दमानाभ्यः स्वाहाकूप्याभ्यः स्वाहासूद्याभ्यः
स्वाहाधार्याभ्यः स्वाहार्णवायस्वाहासमुद्रायस्वाहासरिराय-

स्वाहा ॥ २५ ॥ व्वातायस्वाहाधूमायस्वाहाब्भ्रायस्वाहामेघायस्वा-
हाव्विद्द्योतमानायस्वाहास्तनयतेस्वाहावस्फूर्ज्जतेस्वाहाव्वर्षतेस्वा-
हावववर्षतेस्वाहोग्ग्रंव्वर्षतेस्वाहाशीग्घ्रंव्वर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीता-
तायस्वाहाप्प्रुष्णतेस्वाहाशीकायतेस्वाहाप्प्रुष्ष्वाभ्भ्यःस्वाहाह्रादु-
नीभ्भ्यःस्वाहानीहारायस्वाहा ॥ २६ ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रा-
यस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहादिग्भ्भ्यःस्वाहाशा-
भ्भ्यःस्वाहोर्व्व्यै दिशेस्वाहाव्वार्च्च्यैदिशेस्वाहा ॥ २७ ॥ नक्षत्रेभ्भ्यः
स्वाहानक्षत्त्रियेभ्भ्यःस्वाहाहोरात्रेभ्भ्यःस्वाहार्द्धमासेभ्भ्यःस्वाहामा-

१. नक्षत्राद्घः ( ४ । ४ । १४१ ) इत्यनेन साधुः ।

सैभ्य ᳪ स्वाहाऽऋतुभ्य ᳪ स्वाहार्त्तवेभ्य ᳪ स्वाहा संव्वत्सराय स्वाहा द्यावापृथिवीभ्या ᳪ स्वाहा चन्द्राय स्वाहा सूर्य्याय स्वाहा रश्मिभ्य ᳪ स्वाहा व्वसुभ्य ᳪ स्वाहा रुद्रेभ्य ᳪ स्वाहादित्येभ्य ᳪ स्वाहा मरुद्भ्य ᳪ स्वाहा व्विश्वेभ्यो देवेभ्य ᳪ स्वाहा मूलेभ्य ᳪ स्वाहा शाखाभ्य ᳪ स्वाहा व्वनस्पतिभ्य ᳪ स्वाहा पुष्पेभ्य ᳪ स्वाहा फलेभ्य ᳪ स्वाहौषधीभ्य ᳪ स्वाहा ॥२८॥ [शतम् १३००] पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्य्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्य ᳪ स्वाहाद्भ्यः स्वाहौषधीभ्य ᳪ स्वाहा व्वनस्पतिभ्य ᳪ स्वाहा परिप्लवेभ्य ᳪ स्वाहा चराचरेभ्य ᳪ स्वाहा सरीसृपेभ्य ᳪ स्वाहा ॥ २९ ॥ असवे स्वाहा व्वसवे स्वाहा व्विभुवे-

स्वाहाव्विवस्वतेस्वाहागणश्श्रियेस्वाहागणपतयेस्वाहाभिभुवेस्वाहा-
धिपतयेस्वाहाशूषायस्वाहासꣳसर्प्पायस्वाहाचन्द्रायस्वाहाज्ज्योति-
षेस्वाहामलिम्म्लुचायस्वाहादिवापतयतेस्वाहा ॥ ३० ॥ मधवेस्वाहा-
माधवायस्वाहाशुक्क्रायस्वाहाशुचयेस्वाहानभसेस्वाहानभस्यायस्वा-
हेषायस्वाहोर्ज्जायस्वाहासहसेस्वाहासहस्यायस्वाहातपसेस्वाहात-
पस्यायस्वाहाꣳहसस्पतयेस्वाहा ॥ ३१ ॥ व्वाजायस्वाहाप्प्रसवाय
स्वाहापिजायस्वाहाक्क्रतवेस्वाहास्वः स्वाहामूर्द्ध्नेस्वाहाव्व्यश्नु-
विनेस्वाहान्त्यायस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधि-
पतयेस्वाहाप्प्रजापतयेस्वाहा ॥ ३२ ॥ आयुर्य्यज्ञेनकल्पताꣳस्वाहा-

प्राणोयज्ञेनकल्पताᳪं स्वाहापानोयज्ञेनकल्पताᳪं स्वाहाव्यानोय-
ज्ञेनकल्पताᳪं स्वाहोदानोयज्ञेनकल्पताᳪं स्वाहासमानोयज्ञेनकल्प-
ताᳪं स्वाहाचक्षुर्यज्ञेनकल्पताᳪं स्वाहाश्रोत्रंयज्ञेनकल्पताᳪं स्वा-
हाव्वाग्यज्ञेनकल्पताᳪं स्वाहामनोयज्ञेनकल्पताᳪं स्वाहात्मायज्ञेन-
कल्पताᳪं स्वाहाब्रह्मायज्ञेनकल्पताᳪं स्वाहाज्ज्योतिर्यज्ञेनकल्प-
ताᳪं स्वाहास्वर्यज्ञेनकल्पताᳪं स्वाहापृष्ठंयज्ञेनकल्पताᳪं स्वाहा-
यज्ञोयज्ञेनकल्पताᳪं स्वाहा ॥ ३३ ॥ एकस्मैस्वाहाद्वाभ्याᳪं स्वाहा-
शतायस्वाहैकशतायस्वाहाव्युष्ट्यै स्वाहास्वर्गायस्वाहा ॥ ३४ ॥

इति संहितायां द्वाविंशोऽध्यायः ॥

# ❀ अथ त्रयोविंशोऽध्यायः ❀

ॐ हिरण्यगर्भः समवर्त्तताग्ग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ १ ॥ उपया-
मगृहीतोसि प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिः सूर्य्यस्ते महिमा ।
यस्तेहन्त्संवत्सरे महिमा सम्बभूव यस्ते वायावन्तरिक्षे महिमा सम्ब-
भूव यस्ते दिवि सूर्य्ये महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये स्वा-
हा देवेभ्यः ॥ २ ॥ यः प्राणतो निमिषतो महित्वैकऽइद्राजा जगतो-
बभूव । यऽईशेऽअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम

॥ ३ ॥ उपयामगृहीतोसिप्प्रजापतयेत्वाजुष्ट्टङ्गृह्णाम्म्येषतेयोनिश्चन्द्र-
मास्तेमहिमा । यस्तेरात्रौसंवत्सरेमहिमासम्बभूवयस्तेपृथिव्व्याम-
ग्नौमहिमासम्बभूवयस्तेनक्षत्रेषुचन्द्रमसिमहिमासम्बभूवतस्मैतेम-
हिम्न्नेप्प्रजापतयेदेवेब्भ्यःस्वाहा ॥ ४ ॥ युञ्जन्तिब्ब्रध्नमरुषञ्चरन्त-
म्परितस्त्थुषः । रोचन्तेरोचनादिवि ॥ ५ ॥ युञ्जन्त्यस्यकाम्म्या-
हरीव्विपक्षसारथे । शोणाधृष्ण्णूनृवाहसा ॥ ६ ॥ यद्वातोऽअपोऽअ-
गनीगन्प्प्रियामिन्द्रस्यतन्न्वम् । एतँस्तोतरनेनपथापुनरश्श्वमावर्त्त-
यासिनः ॥ ७ ॥ व्वसवस्त्वाञ्जन्तुगायत्त्रेणच्छन्दसारुद्द्रास्त्वाञ्जन्तु
त्त्रैष्टुभेनच्छन्दसादित्यास्त्वाञ्जन्तुजागतेनच्छन्दसा । भूर्भुवःस्वुर्ल्ला-

जीं३ञ्छाचीं३ञ्न्यक्ळयेगळ्यंऽएतदन्नमत्तदेवाऽएतदन्नमद्धिप्रजापते
॥ ८ ॥ कः स्विदेकाकीचरतिकऽउंस्विज्जायतेपुनः । किंस्विद्धि-
मस्यभेषजङ्किम्म्वावपनम्महत् ॥ ९ ॥ सूर्यऽएकाकीचरतिचन्द्रमा-
जायतेपुनः । अग्निर्हिमस्यभेषजम्भूमिरावपनम्महत् ॥ १० ॥
कास्विदासीत्पूर्व्वचित्तिःकिंस्विदासीद्बृहद्वयः । कास्विदा-
सीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ११ ॥ द्यौरासीत्पूर्व्व-
चित्तिरश्वऽआसीद्बृहद्वयः । अविरासीत्पिलिप्पिलारात्रिरा-
सीत्पिशङ्गिला ॥ १२ ॥ व्वायुष्ट्वापचतैरवत्वसितग्ग्रीवश्छागैर्न्य-
ग्ग्रोधश्चमसैःशल्म्मलिर्वृद्ध्या । एषस्यराथ्योवृषापड्भिश्चतु-

र्भिरेदगन्ब्रह्म्माकृष्णश्चनोवतुनमोग्नये ॥ १३ ॥ सꣳशितोरश्मिम-
नारथꣳसꣳशितोरश्मिमनाहयः ÷ । सꣳशितोऽअप्स्वप्सुजाब्रह्म्मा-
सोमपुरोगवः ॥ १४ ॥ स्वयंव्वाजिँस्तन्न्वङ्कल्प्पयस्वस्वयंय्यजस्व-
स्वयञ्जुषस्व । महिमातेन्न्येननसन्नशे ॥ १५ ॥ नवाऽउँऽएतन्म्रिय-
सेनरिष्यसिदेवाँ२ऽइदेषिपथिभिः ÷ सुगेभिः ÷ यत्रासतेसुकृतोयत्रतेय-
युस्तत्रत्वादेवःसवितादधातु ॥ १६ ॥ अग्निःपशुरासीत्तेनायजन्त-
सऽएतंल्लोकमजयद्यस्मिन्नग्निःसतेलोकोभविष्यतितञ्जेष्यसिपिबै-
ताऽअपः । व्वायुःपशुरासीत्तेनायजन्तसऽएतंल्लोकमजयद्यस्मि-
न्वायुःसतेलोकोभविष्यतितञ्जेष्यसिपिबैताऽअपः । सूर्य्यः ÷ पशु-

रासीत्तेनायजन्तसऽएतंल्लोकमजयद्यस्मिन्त्सूर्य्यᳪसतेंलोकोभविष्य-
तितञ्जेष्यसिपिबैताऽअपः¹ ॥ १७ ॥ प्राणायस्वाहापानायस्वाहा-
व्यानायस्वाहा । अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन । ससं-
स्त्यश्श्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥ गणानान्त्वागण-
पतिᳪहवामहेप्प्रियाणान्त्वाप्प्रियपतिᳪहवामहेनिधीनान्त्वानिधिपतिᳪ-
हवामहेवसोमम । आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ १९ ॥

१. 'मुष्टयाकृतिमकारे स्यान्नकारे तु नखग्रहः' या० शि० श्लो० ३१ । प्रत्य-वसानगतेऽर्धमात्रिके नकारे हस्तस्य मुष्टयाकृतिः स्यात् । यथा गणानान्त्वा० धम् । एवं नकारे अवसानगते नखग्रहः । तर्जन्याः नखस्य अङ्गुष्ठेन स्पर्शः कार्यः । यथा— 'सहस्तो० रश्मीन् ( शु० य० सं० ३४।४९ ) इत्यादि मन्त्रेषु ।

ताऽउभौचतुरं÷पदः सम्प्रसारयावस्वर्गेलोकेप्प्रोर्णुवाथांवृषांव्वा-
जीरेतोधारेतोदधातु ॥ २० ॥ उत्सक्थ्याऽअवगुदन्धेहिसमञ्जिञ्चारं-
यावृषन् । यस्त्रीणाञ्जीवभोजनः ॥ २१ ॥ यकासकौशकुन्तिकाहल-
गितिव्वञ्चति । आहन्तिगभेपसोनिगल्गलीतिधारका ॥ २२ ॥ यको-
सकौशकुन्तकऽआहलगितिव्वञ्चति । व्विवक्षतऽइवतेमुखमद्ध्वर्य्यो-
मानस्त्वमभिभाषथाः ॥ २३ ॥ माताचतेपिताचतेग्ग्रंव्वृक्षस्यरोहतः ।
प्रतिलामीतितेपितागभेमुष्टिमतः सयत् ॥ २४ ॥ माताचतेपिताच-
तेग्ग्रेव्वृक्षस्यक्रीडतः । व्विवक्षतऽइवतेमुखम्ब्रह्म्मन्मात्वंव्वदोबहु
॥ २५ ॥ ऊर्द्ध्वमेनामुच्छ्रापयगिरौभारः हरन्निव । अथास्यैमद्ध्य-

मेधताᳬशीतेव्वातेपुनन्निव ॥ २६ ॥ ऊर्द्ध्वमेनमुच्छ्रयताद्गिरौभा-
रᳬहरन्निव । अथास्यमद्ध्यमेजतुशीतेव्वातेपुनन्निव ॥ २७ ॥ यद-
स्याऽअᳬहुभेद्ध्याःकृधुस्थूलमुपातसत् । मुष्काविदस्याऽएजतोगो-
शफेशकुलाविव ॥ २८ ॥ यद्देवासोललामगुम्प्रविष्टीमिनमाविषुः ।
सक्थ्नादेदिश्यतेनारीसत्यस्याक्षिभुवोयथा ॥ २९ ॥ यद्धरिणोयव-
मत्तिनपुष्टम्पशुमन्न्यते । शूद्रायदर्य्यजारानपोषायधनायति ॥ ३० ॥
यद्धरिणोयवमत्तिनपुष्टम्बहुमन्न्यते । शूद्द्रोयदर्य्यायैजारोनपोष-
मनुमन्न्यते ॥ ३१ ॥ दधिक्क्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वा-
जिनः सुरभिनोमुखाकरत्प्रणऽआयूᳬषितारिषत् ॥ ३२ ॥ गायत्त्री-

त्रिष्टुब्ब्जगत्यनुष्टुप्पङ्क्त्यासह । बृहत्युष्णिहाकुकुप्सूचीभि÷श-
म्म्यन्तुत्वा ॥ ३३ ॥ द्विपदायाश्चतुष्पदास्त्रिपदायाश्चषट्पदाः ।
व्विच्छन्दायाश्चसच्छन्दाःसूचीभि÷शम्म्यन्तुत्वा ॥ ३४ ॥ महा-
नाम्न्योरेवत्योव्विश्श्वाऽआशाःप्प्रभूवरीः । मैघीर्व्विद्युतोव्वाच÷
सूचीभि÷शम्म्यन्तुत्वा ॥ ३५ ॥ नार्य्यस्तेपत्क्न्योलोमव्विचिन्न्वन्तु-
मनीषया । देवानाम्पत्क्न्योदिश÷सूचीभि÷शम्म्यन्तुत्वा ॥ ३६ ॥
रजताहरिणीःसीसायुजोयुज्ज्यन्तेकर्म्मभिः । अश्श्वस्यव्वाजिनस्त्व-
चिसिमाःशम्म्यन्तुशम्म्यन्तीः ॥ ३७ ॥ कुविदङ्गयवमन्तोयवञ्चिद्यथ-
थादान्त्यनुपूर्व्वंव्वियूय । इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्ति-

ऽवसृजन्ति ॥ ३८ ॥ कस्त्वाछ्यतिकस्त्वाव्विशास्तिकस्तेगात्राणिश-
म्म्यति । कउतेशमिताकविः ॥ ३९ ॥ ऋतवस्तऽऋतुथापर्व्वशमिता-
रोव्विशासतु । संव्वत्सरस्यतेजसाशमीभिः शम्म्यन्तुत्वा ॥ ४० ॥
अर्द्धमासाःपरूᳬंषितेमासाऽआच्छ्यन्तुशम्म्यन्तः । अहोरात्राणि-
मरुतोव्विलिष्टᳬंसूदयन्तुते ॥ ४१ ॥ दैव्याऽअद्ध्वर्य्यवस्त्वाछ्य-
न्तुव्विचशासतु । गात्राणिपर्व्वशस्तेसिमाᳬंकृण्वन्तुशम्म्यन्तीः
॥ ४२ ॥ द्यौस्तेपृथिव्व्यन्तरिक्षंव्वायुश्छिद्रम्पृणातुते । सूर्य्यस्तेनक्ष-
त्रैᳬंसहलोककृणोतुसाधुया ॥ ४३ ॥ शन्तेपरेभ्योगात्रेभ्यᳬंशमस्त्व-
वरेभ्यः । शमस्थभ्योमज्जभ्यᳬंशम्म्वस्तुतन्वैतव ॥ ४४ ॥

कःस्विदेकाकीचरतिकऽउस्विज्जायतेपुनः । किꣳस्विद्धिमस्यभेष-
जङ्किम्म्वावपनम्महत् ॥ ४५ ॥ सूर्य्यऽएकाकीचरतिचन्द्रमाजाय-
तेपुनः । अग्निर्हिमस्यभेषजम्भूमिरावपनम्महत् ॥ ४६ ॥ किꣳस्वि-
त्सूर्य्यसमञ्ज्योतिःकिꣳसमुद्द्रसमꣳसरः । किꣳस्वित्पृथिव्यै-
व्वर्षीयःकस्यमात्त्रानविद्द्यते ॥ ४७ ॥ ब्ब्रह्मसूर्य्यसमञ्ज्योतिर्द्द्यौः
समुद्द्रसमꣳसरः । इन्द्रः पृथिव्यैव्वर्षीयान्गोस्तुमात्त्रानवि-
द्द्यते ॥ ४८ ॥ पृच्छामित्वाचितयेदेवसखयदित्यमत्त्रमनसाजगन्थ ।
येषुव्विष्णुस्त्रिषुपदेष्ष्वेष्टस्तेषुव्विश्श्वम्भुवनमाविवेशाँ३ ॥ ४९ ॥
अपितेषुत्त्रिषुपदेष्ष्वस्स्मियेषुव्विश्श्वम्भुवनमाविवेश । सद्यःपर्य्ये-

मिपृथिवीमुतद्यामेकेनाङ्गेनदिवोऽअस्यपृष्ठम् ॥ ५० ॥ केष्ष्वन्तः
पुरुषऽआविवेशकान्यन्तःपुरुषेऽअर्प्पितानि । एतद्ब्रह्मन्नुपवल्हा-
मसित्वाकिᳫंस्विन्नःप्रतिवोचास्यत्र ॥ ५१ ॥ पञ्चस्वन्तःपुरुषऽ-
आविवेशतान्यन्तःपुरुषेऽअर्प्पितानि । एतत्त्वात्रप्रतिमन्न्वानोऽ-
अस्मिन्नमाययाभवस्युत्तरोमत् ॥ ५२ ॥ कास्विदासीत्पूर्व्वचित्तिः
किᳫंस्विदासीद्बृहद्वयः । कास्विदासीत्पिलिप्पिलाकास्विदासी-
त्पिशङ्गिला ॥ ५३ ॥ द्यौरासीत्पूर्व्वचित्तिरश्श्वऽआसीद्बृहद्वयः ।
अविरासीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईमरेपि-
शङ्गिलाकाऽईङ्कुरुपिशङ्गिला । कईमास्कन्दमर्षतिकऽईम्पन्थांव्विस-

र्प्पति ॥ ५५ ॥ अजारेपिशङ्गिलाश्वावित्कुरुपिशङ्गिला । शशऽआ-
स्कन्दमर्षत्यहिः पन्थांव्विसर्प्पति ॥ ५६ ॥ कत्यस्यव्विष्ठाःकत्यक्षरा-
णिकतिहोमासःकतिधासमिद्धः । यज्ञस्यत्वाव्विदथापृच्छमत्रकति-
होतारऽऋतुशोयजन्ति ॥ ५७ ॥ षडस्यव्विष्ठाःशतमक्षराण्यशी-
तिर्होमाःसमिधोहतिस्रः । यज्ञस्यतेव्विदथाप्प्रब्ब्रवीमिसप्तहोतारऽ-
ऋतुशोयजन्ति ॥ ५८ ॥ कोऽअस्यव्वेदभुवनस्यनाभिङ्कोद्यावापृथि-
वीऽअन्तरिक्षम् । कःसूर्य्यस्यव्वेदबृहतोजनित्रङ्कोव्वेदचन्द्रमसंय्य-
तोजाः ॥ ५९ ॥ व्वेदाहमस्यभुवनस्यनाभिंव्वेदद्यावापृथिवीऽ-
अन्तरिक्षम् । व्वेदसूर्य्यस्यबृहतोजनित्रमथोव्वेदचन्द्रमसंय्यतोजाः

॥ ६० ॥ पृच्छामित्वापरमन्तम्पृथिव्याःपृच्छामियत्रभुवनस्यना-
भिः । पृच्छामित्वावृष्णोऽअश्वस्यरेतःपृच्छामिवाचःपरमंव्योम
॥ ६१ ॥ इयंवेदिःपरोअन्तःपृथिव्याऽअयंयज्ञोभुवनस्यनाभिः ।
अयꣳसोमोवृष्णोऽअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥६२॥
सुभूःस्वयम्भूःप्रथमोन्तर्महत्यर्णवे । दधेहगर्भमृत्वियंयतोजा-
तःप्रजापतिः ॥ ६३ ॥ होतायक्षत्प्रजापतिꣳसोमस्यमहिम्नः ।
जुषताम्पिबतुसोमꣳहोतर्यज ॥ ६४ ॥ प्रजापतेनत्वदेतान्यन्यो-
विश्वारूपाणिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳ
स्यामपतयोरयीणाम् ॥ ६५ ॥ इति संहितायां त्रयोविंशोऽध्यायः ॥

# ❀ अथ चतुर्विंशोऽध्यायः ❀

ॐ अश्श्वस्तूपरोगोमृगस्तेप्प्राजापत्याःकृष्ष्णग्ग्रीवऽआग्ग्नेयोररा-
टेपुरस्तात्सारस्वतीमेष्ष्यधस्ताद्धन्न्वोराश्श्विनावधोरामौबाह्व्वोः
सौमापौष्ष्णःश्यामोनाब्भ्याँसौर्य्यामौश्श्वेतश्च्चकृष्ष्णश्च्चपाश्श्र्व-
योस्त्वाष्ट्रौलोमशसक्क्थौसक्क्थ्योर्व्वायव्व्य ÷ श्वेतःपुच्छऽइन्द्रायस्व-
पस्यायव्वेहद्वैष्ष्णवोव्वामनः ॥ १ ॥ रोहितोधूम्म्ररोहितङ्कर्क्कन्धु-
रोहितस्तेसौम्म्याबब्भ्रुररुणबब्भ्रुःशुकबब्भ्रुस्तेव्वारुणाःशितिरन्ध्रो-
न्न्यत ÷ शितिरन्ध्रःसमन्तशितिरन्ध्रस्तेसावित्राःशितिबाहुरन्न्यत ÷

शितिबाहुꣳसमन्तशितिबाहुस्तेबार्हस्पत्याःपृषतीक्षुद्रपृषतीस्स्थूलपृष-
तीतामैत्रावरुण्यः ॥ २ ॥ शुद्धवालꣳसर्व्वशुद्धवालोमणिवालस्तऽआ-
श्विनाःश्येतःश्येताक्षोरुणस्तेरुद्द्रायपशुपतयेकर्ण्णायामाऽअवलि-
प्ताारौद्द्रानभोरूपाꣳपार्ज्जन्न्याः ॥ ३ ॥ पृश्श्निस्तिरश्चीनपृश्निरू-

१. 'ऊष्मन्तस्स्थाभ्यश्च स्पर्शः' (शु० य० ४।१०२) ऊष्माणः—शषसहाः अन्तस्थाः—यरलवा। एतेभ्यः परः स्पर्शो द्विरुच्यते । अत्र—एकः शकारो द्वौ नकारौ संयोगः । एवम्—'अंश्श्मो' ( १८।१३ ) इत्यत्रापि—शकारो द्वौ मकारौ संयोगः । केचित्—अत्र स्थले—पार्ज्जर्या ( २५।४० ) इत्यत्र रेफः—पकारो द्वौ णकारौ यकारश्च संयोगं मन्यन्ते तदसाधुः । णकारस्य द्वित्वसम्भावना न कार्या 'नास्वरपूर्वा ऊष्मान्तस्थाः' १०५ अस्वरपूर्वा ऊष्माणोऽन्तस्थाश्च परान्स्पर्शान्न द्विर्भावयन्ति । अतः अनेन सूत्रेण निषेधात् । नेदमुदाहरणं युक्तम् ।

ह्यूर्ध्वपृश्निस्तेमारुताः फल्गूर्ल्लोहितोर्णीपलक्षीताः सारस्वत्यः प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्तेत्वाष्ट्राः कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्तऽऐन्द्राग्नाः कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्तऽउषस्याः ॥ ४ ॥ शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाताऽअदित्यै सरूपा धात्रे वत्सतर्यो देवानाम्पत्नीभ्यः ॥ ५ ॥ कृष्णग्रीवाऽआग्नेयाः शितिभ्रवो वसूनाᳬं रोहिता रुद्राणाᳬं श्वेताऽअवरोकिणऽआदित्यानान्नभोरूपाः पार्जन्न्याः ॥ ६ ॥ उन्नतऽऋषभो वामनस्तऽऐन्द्रावैष्णवाऽउन्नतः शितिबाहुः शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्याः शुकरूपा वाजिनाः कल्माषाऽआग्निमारुताः श्यामाः पौष्णाः

॥ ७ ॥ एताऽऐन्द्राग्ग्नाद्विरूपाऽअग्ग्नीषोमीयाव्वामनाऽअनड्वाहऽ-
आग्ग्नावैष्ष्णवाव्वशामैत्रावरुण्योऽन्यतऽएन्योमैत्र्य ÷ ॥ ८ ॥ कृष्ष्ण-
ग्ग्रीवाऽआग्ग्नेयाबब्भ्रव ÷ सौम्म्याःश्श्वेताव्वायव्व्याऽअविज्ञाताऽअ-
दित्यैसरूपाधात्रेव्वत्सतर्य्योदेवानाम्पत्क्नीब्भ्यः ॥ ९ ॥ कृष्ष्णाभौमा-
धूम्म्राआन्तरिक्षाबृहन्तोदिव्व्याःशबलाव्वैद्युताःसिध्ध्मास्तारकाः
॥ १० ॥ धूम्म्रान्वसन्तायालभतेश्श्वेतान्ग्ग्रीष्ष्मायकृष्ष्णान्वर्षाब्भ्योऽ-
रुणाञ्छरदेपृषतोहेमन्तायपिशङ्गाञ्छिशिराय ॥ ११ ॥ त्र्यवयोगायत्र्यै-
पञ्चावयस्त्रिष्टुभेदित्यवाहोजगत्यैत्रिवत्साऽअनुष्टुभेतुर्य्यवाहऽउष्ष्णि-
हे ॥ १२ ॥ पष्ठवाहोव्विराजऽउक्षाणोबृहत्याऽऋषभाःककुभेनड्वा-

हः पङ्क्त्यै धेनवो तिच्छन्दसे ॥ १३ ॥ कृष्णग्रीवाऽआग्नेया बभ्रवः
सौम्म्याऽउपध्वस्ताः सावित्रा वत्सतर्य्यः सारस्वत्यः श्यामाः पौ-
ष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥१४॥
उक्ताः सञ्चराऽएताऽऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः का-
यास्तूपराः ॥ १५ ॥ अग्नये नीकवते प्रथमजानालभते मरुद्भ्यः सा-
न्तपनेभ्यः सवात्यान्मरुद्भ्यो गृहमेधिभ्यो बष्किकहान्मरुद्भ्यः
क्रीडिभ्यः सꣳसृष्टान्मरुद्भ्यः स्वतवद्भ्यो नुसृष्टान् ॥ १६ ॥
उक्ताः सञ्चराऽएता ऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वक-
र्म्मणाः ॥ १७ ॥ धूम्रा बभ्रुनीकाशाः पितॄणाꣳ सोमवतां बभ्रवो

धुम्म्रनीकाशाः पितॄणांबर्हिषदाङ्कृष्ष्णाबब्भ्रुनीकाशाःपितॄणामग्नि-
ष्वात्तानाङ्कृष्ष्णाःपृषन्तस्त्रैयम्बकाः ॥ १८ ॥ उक्त्ताःसंञ्चरा-
ऽएताःशुनासीरीयाःश्वेताव्वायव्व्याः श्वेताःसौर्य्याः ॥ १९ ॥
व्वसन्तायकपिञ्जलानालभतेग्ग्रीष्ष्मायकलविङ्कान्व्वर्षाब्भ्यस्तित्ति-
रीञ्छरदेव्वर्तिकाहेमन्तायककराञ्छिशिरायव्विकक्करान् ॥ २० ॥ स-
मुद्द्रायशिशुमारानालभतेपर्ज्जन्न्यायमण्डूकानद्भ्योमत्स्यान्मित्रा-
यकुलीपयान्व्वरुणायनाक्क्रान् ॥ २१ ॥ सोमायहꣳसानालभतेव्वा-
यवेबलाकाऽइन्द्राग्निब्भ्याङ्क्रुञ्चान्मित्त्रायमद्गून्व्वरुणायचक्क्रवा-
कान् ॥ २२ ॥ अग्नयेकुटरूनालभतेव्वनस्प्पतिब्भ्यऽउलूकानग्नीषोमा-

भ्याञ्चाषानश्विभ्याम्मयूरान्मित्रावरुणाभ्याङ्कपोतान् ॥२३॥ सो-
मायलबानालभतेत्वष्ट्रेकौलीकान्गोषादीर्देवानाम्पत्नीभ्यः कुलीकादे-
वजामिभ्योऽग्नयेगृहपतयेपारुष्णान् ॥ २४ ॥ अह्नेपारावतानालभते-
रात्र्यैसीचापूरहोरात्रयोः सन्धिभ्योजतूर्मासेभ्योदात्यौहान्त्संवत्स-
रायमहतःसुपर्णान् ॥ २५ ॥ भूम्याऽआखूनालभतेन्तरिक्षायपा-
ङ्क्त्रान्दिवेकशान्दिग्भ्योनकुलान्बभ्रुकानवान्तरदिशाभ्यः ॥२६॥
वसुभ्यऽऋश्यानालभतेरुद्रेभ्योरुरूनादित्येभ्योन्यङ्कून्विश्वे-
भ्योदेवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान् ॥ २७ ॥ ईशानाय

परस्वतऽआलभतेमित्रायगौरान्वरुणायमहिषान्बृहस्पतयेगवयाँ-
स्त्वष्ट्रऽउष्ट्रान् ॥ २८ ॥ प्रजापतयेपुरुषान्हस्तिनऽआलभतेव्वाचे-
प्लुषीँश्चक्षुषेमशकाञ्छ्रोत्रायभृङ्गाः ॥२९॥ [ शतम् १४०० ] प्रजा-
पतयेचव्वायवेचगोमृगोव्वरुणायारण्योमेषोयमायकृष्णोमनुष्यरा-
जायमर्क्कट ÷ शार्दूलायरोहिदृषभायगवयीक्षिप्रश्येनायव्वर्तिकानी-

१. इत्यत्र 'तथयोः सम्' ( ३।१३६ ) तकारथकारयोः प्रत्ययोर्न्नकारः सकारमापद्यते, उपधाचानुस्वारेण व्यवधीयते । एवं अन्याँस्ते ( १७।११ ) 'कᳪस्थामं.देवसवितः' इति शाखान्तरीयमप्युदाहरणम् । थकारस्य रूपोदाहरणं— विद्वान् थकारः—विद्वाँस्थकारः ।

२. इत्यत्रापि 'चछयोः शम्' ( ३।१३५ ) इत्यनेन शकारमापद्यते ।

लङ्गोऽकिक्रमि॑ः समुद्द्राय॑शिशुमारो॒हि॒मवत॒हस्ती ॥ ३० ॥ मयुः प्प्रा-
जापत्यऽउलो॒हलिक्ष्ण्णोऽन्नृषद॒श्शस्तेधात्त्रेदि॒शाङ्क्कोधुक्ष्ाग्ग्नेयीकल॒-
विङ्कोलोहिता॒हिः पुष्कर॒सादस्तेत्त्वाष्ट्राव्वा॒चेक्क्रुञ्चः ॥ ३१ ॥ सोमा-
यकुलुङ्गऽआर॒ण्ण्यो॒जोनकुलः शका॒तेपौष्ण्णाः क्क्रोष्ट्रामा॒योरिन्द्रस्यगौ-
रमृ॒गः पि॒द्वोन्न्यङ्कः कक्क॒टस्तेनुमत्यै प्प्रति॒श्श्रुत्कायैचक्क्रवाकः ॥३२॥
सौ॒रीब॒लाकाशा॒र्गः सृ॒ज॒यः श॒याण्डक॒स्तेमै॒त्त्राः सरस्वत्यै॒शारिः पुरु-
षवाक्‌श्श्वा॒विद्‌द्धौमीशार्दूलोव्वृ॒कः पृदाकु॒स्तेमन्न्यवे॒सरस्वत॒शुकः
पुरुषवाक् ॥ ३३ ॥ सुपर्ण्णः पार्ज्जन्न्यऽआतिव्वाह॒सोदर्व्विदा॒तेव्वा-
यवे॒बृह॒स्प्पतयेव्वा॒चस्प्पतयेपैङ्ग॒रा॒जो॒ल॒जऽआन्तरि॒क्षः प्प्लवोम॒द्‌गुर्म्म-

त्स्यस्तेनंदीपतयेंद्यावापृथिवीयं÷कूर्म्मः॥ ३४ ॥ पुरुषमृगश्चन्द्र-
मंसोगोधाकालंकादार्व्वाघाटस्तेव्वनस्पतीनाङ्कुकवाकुं ÷ सावित्रो-
हुꣳसोव्वातंस्यनाक्रोमकरंःकुलीपयस्तेकूपारस्यह्रियैशल्यंकः ॥३५॥
एण्यन्हौमण्डूकोमूषिकातित्तिरिस्तेसर्प्पाणांल्लोपाशऽआश्विनः
कृष्णोरात्र्याऽऋक्षोजतूःसुषिलीकातऽइतरजनानाञ्जहंकाव्वैष्णवी
॥ ३६ ॥ अन्न्यवापोर्द्धमासानामृश्योमयूरं ÷ सुपर्णस्तेगन्ध-
र्व्वाणामपामुद्रोमासाङ्कश्यपोरोहित्कुण्डृणाचीगोलत्तिकातेप्सर-

१. 'कश्यपस्यानार्षेये जातूकर्ण्यस्य' (शु० प्रा० सू० १५८) जातूकर्णस्या-
चार्यमते कश्यपशब्दस्यार्षेयवर्जं यकारो न भवति एतदुक्तं भवति कच्छपे वाच्ये

साम्मृत्यवैसितः ॥ ३७ ॥ व्वर्षाहूर्ऋतुनामाखुःकशोमा-
न्थालस्तेपितृणाम्बलायाजगरोव्वसूनाङ्कपिञ्जलःकपोतऽउलूकःशश-
स्तेनिर्ऋत्यैव्वरुणायारण्योमेषः ॥ ३८ ॥ श्वित्रऽआदित्यानामुष्ट्रो-
घृणीवान्वार्ध्रीनसस्तेमत्याऽअरण्यायसृमरोरुरूरौद्रःक्क्वयि ÷ कुट-

द्विरुक्तो सत्यां चकारो भवति किन्तु शकारस्य छकारादेशः स्यात् जातूकर्ण्यमते । जातूकर्ण्यस्येति किम्—काण्वमाध्यन्दिनादेर्माभूत् । अपामुद्द्रो मासाङ्कश्यपः ।

१. 'पक्षौ वितत्य खे गृध्रो भ्रान्त्या सङ्कुच्य तिष्ठति । एवं वर्णाः प्रयोक्तव्या 'वार्ध्रीनसो निदर्शनम्' ( या० शि० श्लोक ६८ ) गृध्रः, पक्षी, भ्रांत्या, खे—आकाशे, पक्षौ, वितत्य-विस्तीर्य, पुनः सङ्कुच्य, तिष्ठति, एवं, वर्णाः—दीर्घाः गुरुभूताः प्रयोक्तव्याः ।

रुद्रात्यौहस्तेव्वाजिनाङ्कामायपिकः ॥ ३९ ॥ खड्गोव्वैश्श्वदेवः श्श्वा-
कृष्णः कर्णोगर्दभस्तरक्षुस्तेरक्षसामिन्द्रायसूकरः सिꣳहोमारुतः कृक-
लासः पिप्पकाशकुनिस्तेशरव्यायैव्विश्श्वेषान्देवानाम्पृषतः ॥ ४० ॥

इति संहितायां चतुर्विंशोऽध्यायः ॥

## ❀ अथ पञ्चविंशोऽध्यायः ❀

ॐ शादन्दद्भिरवकान्दन्तमूलैर्म्मृदम्बर्स्वैस्तेगान्दꣳष्ट्राभ्याꣳ
सरस्वत्याऽअग्ग्रजिह्वञ्जिह्वायाऽउत्सादमवक्रन्देनतालुव्वाजꣳ
हनुभ्यामपऽआस्येनव्वृषणमाण्डाभ्यामादित्याँश्श्मश्श्रुभिः पन्था-

नम्भ्रूभ्यान्द्यावापृथिवीव्वर्त्तोभ्यांव्विद्युतङ्कनीनकाभ्याᳪ शुक्लाय
स्वाहाकृष्णायस्वाहापार्य्याणिपक्ष्माण्यवार्य्याऽइक्षवोवार्य्याणिप-
क्ष्माणिपार्य्याऽइक्षवं ÷ ॥ १ ॥ व्वातम्प्राणेनापानेननासिकेऽउपया-
ममधरेणौष्ठेनसदुत्तरेणप्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्यम्मू-
र्द्ध्नास्तनयित्नुन्निर्ब्बाधेनाशनिम्मस्तिष्क्केणव्विद्युतङ्कनीनकाभ्या-
ङ्कर्णाभ्याᳪश्रोत्रᳪश्रोत्राभ्याङ्कर्णौतेदनीमधरकण्ठेनापःशुष्ककण्ठे-
नचित्तम्मन्याभिरदितिᳪशीर्ष्णानिर्ऋतिन्निर्ज्जर्ज्जल्प्येनशीर्ष्णासं-
ङ्क्रोशैःप्राणान्रेष्माणᳪस्तुपेन ॥ २ ॥ मशकान्केशैरिन्द्रᳪस्व-
पसावहेनबृहस्पतिᳪशकुनिसादेनकूर्म्माञ्छफैराक्रमणᳪस्थूरा-

भ्यांमुक्षलाभिर्ंकुपिञ्जलाञ्जवञ्जङ्घाभ्यामद्ध्वानम्बाहुभ्याञ्जाम्बीलेना-
रण्यमुग्निमंतिरुग्भ्याम्पूषणन्दोर्भ्यामुश्विनांव६ सांभ्याꣳ रुद्र-
६ रोराभ्याम् ॥ ३ ॥ अग्नेः पक्षतिर्व्वायोर्न्निपक्षतिरिन्द्रस्यतृती-
यासोमस्यचतुर्त्थ्यदित्यैपञ्चमीन्द्राण्यैषष्ठीमरुताꣳ सप्तमीबृहस्पते-
रष्टमय्र्यम्णोनवमीधातुर्द्दशमीन्द्रस्यैकादशीव्वरुणस्यद्द्वादशीय-
मस्यत्रयोदशी ॥ ४ ॥ इन्द्राग्न्योः पक्षतिः सरस्वत्यैनिपक्षतिर्म्मित्रस्य-
तृतीयापाञ्चतुर्त्थीनिर्ऋत्यैपञ्चम्यग्नीषोमयोःषष्ठीसर्प्पाणाꣳ सप्त-
मीव्विष्णोरष्टमीपूष्णोनवमीत्वष्टुर्द्दशमीन्द्रस्यैकादशीव्वरुणस्य
द्द्वादशीयम्यैत्रयोदशीद्यावापृथिव्योर्द्दक्षिणम्पार्श्वंव्विश्वेषान्दे-

वानामुत्तरम् ॥ ५ ॥ मरुतां ᳪ स्कन्धाव्विश्वेषान्देवानाम्प्रथमा-
कीकसारुद्द्राणान्द्वितीयादित्यानान्तृतीयाव्वायोः पुच्छमग्नीषोमयो-
र्भासदौकक्कुञ्चौश्श्रोणिभ्यामिन्द्राबृहस्प्पतीऽऊरुभ्याम्मित्रावरुणा-
वल्गाभ्यामाक्क्रमण ᳪ स्त्थूराभ्याम्बलङ्कुष्ठाभ्याम् ॥ ६ ॥
पूषणंव्वनिष्टुनान्धाहीन्त्स्थूलगुदयासर्प्पान्गुदाभिर्व्विह्रुतऽआन्त्रैरपो-
व्वस्तिनाव्वृषणमाण्डाभ्यांव्वाजिनं ᳪ शेपेनप्प्रजा ᳪ रेतसाचाषान्पि-
त्तेनप्प्रदरान्पायुनाकूश्मान्छकपिण्डैः ॥ ७ ॥ इन्द्रस्यक्क्रोडो-
दित्यैपाजस्यन्दिशाञ्जत्त्रवोदित्यैभसज्जीमूतान्हृदयौपशेनान्तरिक्षम्पु-
रीततानभऽउदर्य्येणचक्क्रवाकौमतस्नाभ्यान्दिवंव्वृक्काभ्याङ्गिरी-

न्प्लाशिभिरुपलान्प्लीन्हाव्वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हि-
राभिःस्रवन्तीर्हदान्कुक्षिभ्यां ॐ समुद्रमुदरेण व्वैश्वानरम्भस्मं-
ना ॥ ८ ॥ व्विधृतिन्नाभ्याघृत ६ रसेनापोयूष्णामरीचीर्व्वि-
प्रुड्भिर्नीहारमूष्मणाशीनंव्वसयाप्रुष्वा ऽअश्रुभिर्हादुनीर्दूषीकाभि-
रस्नारक्षांसि ॐ चित्राण्यङ्गैर्नक्षत्राणिरूपेणपृथिवीन्त्वचाजुम्बकाय
स्वाहा ॥ ९ ॥ हिरण्यगर्भः समवर्त्तताग्ग्रेभूतस्यजातः पतिरेक ऽआ-
सीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाव्विधेम ॥ १० ॥
यः प्राणतोनिमिषतोमहित्वैक ऽइद्राजाजगतोबभूव । यऽईशे ऽअस्य
द्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥ ११ ॥ यस्येमेहिमव-

न्तोमहित्वायस्यंसमुद्रꣳरसयासहाहुः । यस्येमाःप्रदिशोयस्यं
बाहूकस्म्मैदेवायहविषाव्विधेम ॥ १२ ॥ यऽआत्मदाबलदायस्यव्वि-
श्वंऽउपासतेप्रशिषंय्यस्यदेवाः । यस्यच्छायामृतंय्यस्यमृत्युःकस्म्मै
देवायहविषाव्विधेम ॥ १३ ॥ आनोभद्राःक्क्रतवोयन्तुव्विश्व-
तोदब्धासोऽअपरीतासऽउद्भिदः । देवानोयथासदमिद्वृधेऽअस-
न्नप्रायुवोरक्षितारोदिवेदिवे ॥ १४ ॥ देवानाम्भद्रासुमतिर्ऋजूय-

---

१. इत्यत्र 'यस्यातिहायसहेतिन' ( ४।२६ ) इति सूत्रेण यस्य, अतिहाय, सह, इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्ययेन यकारेण व्यवधीयते । एवमन्यत्र स्थलेष्वपि-यथा-अतिशयच्छिद्रा ( २५।४१ ) सहच्छन्दसः ( ३४।४८ )।

तान्देवानां ँ रातिरभिनोनिवर्त्तताम् । देवानां ँ सक्ख्यमुपसेदिमां
व्वयन्देवान ऽआयुः प्रतिरन्तुजीवसे ॥ १५ ॥ तान्पूर्व्वयानिविदाहूम-
हेव्वयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् । अर्यमणंव्वरुण ँ सोमम-
श्विनासरस्वतीनः सुभगामयस्करत् ॥ १६ ॥ तन्नोव्वातोमयोभुव्वा-
तुभेषजन्तन्मातापृथिवीतत्पितादयौः । तद्ग्रावाणः सोमसुतोमयो-
भुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ १७ ॥ तमीशानञ्जगतस्त-
स्त्थुषस्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम् । पूषानोयथाव्वेदसाम-
सद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ १८ ॥ स्वस्तिनऽइन्द्रोव्वृद्धश्र्श्र-
वाः स्वस्तिनः पूषाव्विश्श्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्व-

स्तिनोबृहस्प्पतिर्द्दधातु ॥ १९ ॥ पृषदश्श्वामरुतःपृश्निमातरःशु-
भंय्यावानोव्विदथेषुजग्ग्मयः । अग्निजिह्वामनवःसूरचक्षसोव्वि-
श्श्वेनोदेवाऽअवसागमन्निह ॥ २० ॥ भद्द्रङ्कर्णेभिःशृणुयामदेवाभ-
द्द्रम्पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेम-
हिदेवहितंय्यदायुः ॥ २१ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानः-
श्चक्राजरसन्तनूनाम् । पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरि-
षतायुर्ग्गन्तोः ॥ २२ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातास-
पितासपुत्रः । व्विश्श्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्ज्जातमदि-
तिर्ज्जनित्वम् ॥ २३ ॥ मानोमित्रोव्वरुणोऽअर्य्यमायुरिन्द्रऽऋभुक्षा

मरुतꣳपरिकल्व्यन् । यद्वाजिनोदेवजातस्यसप्तेः प्रवक्ष्यामोव्विदथे-
व्वीर्याणि ॥ २४ ॥ यन्निर्णिजारेक्णसाप्प्रावृतस्यरातिङ्गृभीताम्मुख-
तोनयन्ति । सुप्प्राङजोमेम्यद्विश्वरूपऽइन्द्रापूष्णोः प्रियमप्प्येति-
तिपाथः ॥ २५ ॥ एषच्छागः पुरोऽअश्वेनव्वाजिनापूष्णोभागो-
नीयतेव्विश्वदेव्व्यः । अभिप्प्रियंयत्पुरोडाशमर्व्वतात्वष्टेदेनꣳसौ-
श्रवसायजिन्वति ॥ २६ ॥ यद्धविष्ष्यमृतुशोदेवयानन्त्रिर्म्मानुषाः
पर्य्यश्वन्नयन्ति । अत्रापूष्णः प्रथमोभागऽएतियज्ञन्देवेब्भ्यः प्रति-
वेदयन्नजः ॥ २७ ॥ होताद्ध्वर्य्युरावयाऽअग्निमिन्धोग्ग्रावग्ग्राभऽउत-
श ꣳ स्तासुविप्प्रः । तेनयज्ञेनस्वरङ्कृतेनस्विष्टेनव्वक्षणाऽआपृण-

द्ध्वम् ॥ २८ ॥ षूपव्रस्काऽउतषेषूपवाहाश्चषालँ षेऽअश्वयूपाय-
तक्षति । षेचार्व्वतेपचनꣳसम्भरन्त्युतोतेषामभिगूर्तिर्न्नऽइन्न्वतु ॥२९॥
उपप्रागात्सुमन्मेधायिमन्म्मदेवानामाशाऽउपवीतपृष्ठꣳ । अन्न्वेनं
विप्राऽऋषयोमदन्तिदेवानाम्पुष्टेचकृमासुबन्धुम् ॥३०॥ षद्वाजि-
नोदामसन्दानमर्व्वतोषाशीर्षण्यारशनारज्जुरस्य । षद्वाघास्यप्र-
भृतमास्येतृणꣳसर्व्वाताते ऽअपिदेवेष्वस्तु ॥३१॥ षदश्वस्यक्रविषो
मक्षिकाशषद्वास्वरौस्वधितौरिप्तमस्ति । षद्धस्तयोःशमितुर्षन्न-
खेषुसर्व्वाताते ऽअपिदेवेष्वस्तु ॥ ३२ ॥ षदूवध्यमुदरस्यापवाति
षऽआमस्यक्रविषोगन्धोऽअस्ति । सुकृतातच्छमितारः कृण्वन्तू-

तमेधंꣳशृतपाकम्पचन्तु ॥ ३३ ॥ यत्तेगात्रादग्निनापच्यमानादभि-
शूलन्निहतस्यावधावति । मातद्भूम्म्यामाश्रिषन्मातृणेषुदेवेब्भ्य-
स्तदुशद्भ्योरातमस्तु ॥ ३४ ॥ येव्वाजिनम्परिपश्यन्तिपक्वंय्यऽईं-
माहुःसुरभिन्निर्हरेति । येचार्व्वतोमाꣳसभिक्षामुपासतऽउतोतेषाम-
भिगूर्त्तिर्न्नऽइन्न्वतु ॥ ३५ ॥ यन्नीक्षणम्माँस्प्पचन्न्याऽउखायायापात्राणि
यूष्णऽआसेचनानि । ऊष्मण्ण्यापिधानाचरूणामङ्काःसूनाःपरिभूष-
न्त्यश्श्वम् ॥ ३६ ॥ मात्वाग्निर्द्ध्वनयीद्धूमगन्धिर्म्मोखाब्भ्राजन्त्यभि-
वित्त्क्तजघ्रि: । इष्टंव्वीतमभिगूर्त्तंव्वषट्कृतन्तन्देवासःप्प्रतिगृब्भ्ण-
न्त्यश्श्वम् ॥ ३७ ॥ निक्क्रमणन्निषदनंव्विवर्त्तनंयच्चपड्वीशमर्व्वतः ।

यच्चपपौयच्चंघासिञ्जघासुसव्वाताते॑ऽअपिदेवेष्ष्वंस्तु ॥ ३८ ॥ यद-
श्श्वायव्वासं॑ऽउपस्तृणन्त्यधीवासंय्याहिरण्यान्न्यस्म्मै । सुन्दानम-
र्वन्तम्पड्वींशम्प्रियादेवेष्ष्वायामयन्ति ॥ ३९ ॥ यत्तेसादेमहसाशूकृत-
स्यपार्ष्ण्याव्वाकशंयाव्वातुतोद॑ । स्रुचेवताहविषोऽअद्ध्वरेषुसव्वाता-
तेब्ब्रह्मणासूदयामि ॥ ४० ॥ चतुंस्त्रिंशद्वाजिनोदेवबन्धोर्व्वङ्क्री-
रश्श्वस्यस्वधितिःसमेति । अच्छिद्द्रागात्रांव्वयुनाकृणोतपरुष्परु-
रनुघुष्ष्याव्विशस्त ॥ ४१ ॥ एकस्त्वष्टुरश्श्वस्याव्विशस्ताद्वायन्ता-
रभवतस्तथऽऋतुः । यातेगात्राणामृतुथाणोकृमिताताापिण्डानाम्प्र-
जुहोम्म्यग्नौ ॥ ४२ ॥ मात्वातपत्प्रियऽआत्मापियन्तम्मास्वधितिस्त-

न्व्वुऽआतिंष्ठिपत्ते । मातैगृध्नुरंविशस्तातिहायंछिद्रागात्राण्यसिना-
मिथूकः ॥ ४३ ॥ नवाऽउंऽएतन्म्रियसेनरिष्यसिदेवा२ँ इदेंषिपथि-
भिं ÷ सुगेभिं ÷ । हरींतेयुञ्जापृषतीऽअभूतामुपास्थाद्वाजीधुरिरा-
संभस्य ॥ ४४ ॥ सुगव्यंन्नोव्वाजीस्वश्श्व्यंम्पुंसःपुत्रा२ँ उतव्विं-
श्श्वापुषंरयिम् । अनागास्त्वन्नोऽअदितिःकृणोतुक्षत्रन्नोऽअश्श्वोंव्व-
नताहविष्म्मान् ॥ ४५ ॥ इमानुकम्भुवंनासीषधामेन्द्रंश्चव्विश्श्वे
चदेवाः । आदित्यैरिन्द्रःसगणोमरुद्भिरस्म्मभ्यंम्भेषजाकरत् ।
यज्ञञ्चनस्तन्न्वञ्चप्रजाञ्चादित्यैरिन्द्रं ÷ सहसीषधाति ॥ ४६ ॥ अग्ने-
त्वन्नोऽअन्तंमऽउतत्राताशिवोभवावरूथ्य ÷ । व्वसुंरग्निर्व्वसुंश्श्र-

वाऽअच्छानक्षिद्युमत्तमꣳ रयिन्दाः । तन्त्वाशोचिष्ठदीदिवꣳसुम्नाय
नूनमीमहेसखिभ्यः ॥ ४७ ॥ इति संहितायां पञ्चविंशोऽध्यायः ।

## ❀ अथ षड्विंशतितमोऽध्यायः ❀

ॐ अग्निश्चपृथिवीचसन्नतेतेमेसन्नमतामदोव्वायुश्चान्तरिक्षञ्च
सन्नतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्नमतामदऽ-
आपश्चव्वरुणश्चसन्नतेतेमेसन्नमतामदः । सप्तसꣳसदोऽअष्टमी
भूतसाधनी । सकामाँ२ऽअद्ध्वनस्कुरुसंज्ञानमस्तुमेमुना ॥ १ ॥

---

१. 'अध्वनस्कुर्विति च' ( प्रा० २९ ) अध्वन इत्ययं विसर्जनीयः कुर्वित्ये-
तस्मिंश्च प्रत्यये सकारमापद्यते ।

यथेमांव्वाचङ्कल्याणीमावदानिजनेभ्यः । ब्रह्मराजन्याभ्याꣳ
शूद्रायचार्य्यायचस्वायचारणायच । प्रियोदेवानान्दक्षिणायैदातु-
रिहभूयासमयम्मेकामꣳसमृद्ध्यतामुपमादोनमतु ॥ २ ॥ बृहस्पते
ऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्क्रतुमज्जनेषु । यद्दीदयच्छव-
सऽऋतप्प्रजाततदस्म्मासुद्द्रविणन्धेहिचित्रम् । उपयामगृहीतोसि
बृहस्पतयेत्त्वैषतेयोनिर्ब्बृहस्पतयेत्त्वा ॥ ३ ॥ इन्द्रगोमन्निहायाहिपि-
बासोमꣳशतक्क्रतो । व्विद्यद्भिर्ग्रावभिꣳसुतम् । उपयामगृही-
तोसीन्द्रायत्वागोमतऽएषतेयोनिरिन्द्रायत्वागोमते ॥ ४ ॥ इन्द्राया-
हिव्वृत्रहन्पिबासोमꣳशतक्क्रतो । गोमद्भिर्ग्रावभिꣳसुतम् । उप-

थामगृहीतोसीन्द्रायत्वागोमतऽएषतेयोनिरिन्द्रायत्वागोमते ॥ ५ ॥
ऋतावानंव्वैश्वानरमृतस्यज्ज्योतिषस्पतिम् । अजस्रङ्घर्म्ममीमहे ।
उपयामगृहीतोसिव्वैश्वानरायत्वैषतेयोनिर्व्वैश्वानरायत्वा ॥ ६ ॥
व्वैश्वानरस्यसुमतौस्यामराजाहिकम्भुवनानामभिश्रीः । इतोजा-
तोव्विश्वमिदंव्विचष्टेव्वैश्वानरोयततेसूर्य्येण । उपयामगृहीतो-
सिव्वैश्वानरायत्वैषतेयोनिर्व्वैश्वानरायत्वा ॥ ७ ॥ व्वैश्वानरो-
नऽऊतयऽआप्रयातुपरावतः । अग्निरुक्थेनव्वाहसा । उपया-
मगृहीतोसिव्वैश्वानरायत्वैषतेयोनिर्व्वैश्वानरायत्वा ॥ ८ ॥
अग्निर्ऋषिःपवमानःपाञ्चजन्यःपुरोहितः । तमीमहेमहागयम् ।

उपयामगृहीतोस्यग्ग्नयेत्वाव्वर्चसऽएषतेयोनिरग्ग्नयेत्वाव्वर्च्चसे ॥ ९ ॥
महाँ२ऽइन्द्रोव्वज्रहस्तःषोडशीशर्म्मयच्छतु । हन्तुपाप्मानंय्योऽस्मान्द्वेष्टि । उपयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा
॥ १० ॥ तंव्वोदस्ममृतीषहंव्वसोर्म्मन्दानमन्धसः । अभिवत्सन्न-
स्वसरेषुधेनवऽइन्द्रङ्गीर्ब्भिर्न्नवामहे ॥ ११ ॥ यद्वाहिष्ठन्तदग्ग्नयेबृह-
दर्च्चविभावसो । महिषीवत्वद्रयिस्त्वद्वाजाऽउदीरते ॥ १२ ॥
एह्यूषुब्रवाणितेग्ग्नऽइत्थेतराागिरः । एभिर्व्वर्धासऽइन्दुभिः
॥ १३ ॥ ऋतवस्तेयज्ञंव्वितन्वन्तुमासारक्षन्तुतेहविः । संव्वत्सर-
स्तेयज्ञन्दधातुनःप्रजाञ्चपरिपातुनः ॥ १४ ॥ उपह्वरेगिरीणाᳬसङ्ग-

मेचनदीनाम् । धियाव्विप्प्रोऽअजायत ॥ १५ ॥ उच्चातेजातमन्धसो
दिविसद्भूम्म्याददे । उग्ग्रꣳशर्म्ममहिश्श्रवः ॥ १६ ॥ सनऽइन्द्राय
यज्ज्यवेव्वरुणायमरुद्भ्यः । व्वरिवोवित्परिस्रव ॥ १७ ॥ एनाव्वि-
श्श्वान्न्यर्य्यऽआद्युम्म्नानिमानुषाणाम् । सिषासन्तोव्वनामहे ॥ १८ ॥
अनुवीरैरनुपुष्ष्यास्म्मगोभिरन्न्वश्श्वैरनुसर्व्वेणपुष्टैः । अनुद्द्विपदा-
नुचतुष्प्पदाव्वयन्देवानोयज्ञमृतुथानयन्तु ॥ १९ ॥ अग्ग्नेपत्नी-
रिहावहदेवानामुशतीरुप । त्वष्टारꣳसोमपीतये ॥ २० ॥ अभियज्ञङ्गृ-
णीहिनोग्ग्नावोनेष्टःपिबऽऋतुना । त्वꣳहिरत्नधाऽअसि ॥ २१ ॥
द्रविणोदाःपिपीषतिजुहोतप्प्रचतिष्ठत । नेष्ट्रादृतुभिरिष्ष्यत ॥२२॥

तवायᳪ सोमस्त्वमेह्यर्वाङ्शश्वत्तमᳪ सुमनाऽअस्यपाहि । अस्मिन्-
न्यज्ञेबर्हिष्यानिषद्याद्धिष्वेमञ्जठरऽइन्दुमिन्द्र ॥ २३ ॥ अमेवनᳪ
सुहवाऽआहिगन्तनिबर्हिषिसदतनारणिष्टन । अथामन्दस्वजुजुषा-
णोऽअन्धसस्त्वष्टर्देवेभिर्जनिभिᳪ सुमद्गणᳪ ॥ २४ ॥ स्वादिष्ठया-
मदिष्ठयापवस्वसोमधारया । इन्द्रायपातवेसुतः ॥ २५ ॥ रक्षोहा-
विश्वचर्षणिरभियोनिमयोहते । द्रोणेसधस्थमासदत् ॥ २६ ॥

इति संहितायां षड्विंशतितमोऽध्यायः ।

# ❀ अथ सप्तविंशोऽध्यायः ❀

ॐ समास्त्वाग्नऽऋतवोंव्वर्द्धयन्तुसंव्वत्सराऽऋषयोयानिसत्या ।
सन्दिव्व्येनदीदिहिरोचनेनव्विश्वाऽआभाहिप्प्रदिशश्चतस्रः ॥ १ ॥
सञ्चेद्ध्यस्वाग्नेप्प्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय । माचरिषदुप-
सत्तातेऽअग्नेब्रह्माणस्तेयशसः सन्तुमान्न्ये ॥ २ ॥ त्वामग्नेव्वृण
तेब्राह्मणाऽइमेशिवोऽअग्नेसंव्वरणेभवानः । सपत्नहानोऽअभिमा
तिजिच्चस्वेगयेजागृह्यप्प्रयुच्छन् ॥ ३ ॥ इहैवाग्नेऽअधिधारयारयिम्मा-
त्वानिक्क्रन्न्पूर्व्वचितोनिकारिणः । क्षत्रमग्नेसुयममस्तुतुभ्यमुपस-

त्त्वान्द्वद्वंतान्ते॒ऽअनिष्क्टृतं॑ ॥ ४ ॥ क्ष॒त्रेणा॑ग्ने॒स्वायु॒ᳬसᳬरॅभस्व॒मि॒त्रेणा॑-
ग्नेमि॒त्र॒धेयें॑यतस्व । स॒जा॒ताना॑म्मद्ध्य॒म॒स्त्था॒ऽए॑धि॒राज्ञा॑मग्नेव्वि॒ह॒-
व्यो॒दीदि॒ही॒ह ॥ ५ ॥ अ॒ति॒नि॒हो॒अ॒ति॒स्रिधोत्यचि॑त्ति॒मत्य॒रा॑तिमग्ने ।
व्विश्श्वा॒ह्य॒ग्ने॒दु॒रि॒तास॒ह॒स्वाथा॒स्म्मभ्यᳬस॒हवी॑राᳬर॒यिन्दा॑ᳬ ॥ ६ ॥
अ॒ना॒धृ॒ष्ष्यो॒जा॒तवे॑दा॒ऽअनि॑ष्टृतो॒व्वि॒राड॑ग्नेक्ष॒त्र॒भृ॒द्दी॒दि॒ही॒ह । विश्श्वा॒-
ऽऽआशा॑ᳬप्प्रमु॒ञ्चन्न्मा॑नु॒षीर्भि॒यᳬशि॒वेभि॑र॒द्यपरि॑पाहिनो॒व्वृ॒धे ॥ ७ ॥
बृह॑स्स्पतेसवितर्बो॒धयै॑न॒ᳬसᳬशि॑तञ्चि॒त्सन्त॒राᳬसᳬशि॑शाधि । व्व॒-
र्द्धयै॑नम्मह॒तेसौभ॑गाय॒व्विश्श्व॑ऽएन॒मनु॑मदन्तु॒दे॒वाᳬ ॥ ८ ॥ अ॒मु॒त्र॒भूया॒-
द॒धय॒द्य॒मस्य॒बृह॑स्स्पतेऽअ॒भिश॑स्ते॒रमु॑ञ्चᳬ । प्र॒त्यौ॑हता॒म॒श्श्विना॑मृ॒त्यु-

मंस्म्माद्देवानांमग्नेभिषजाशचीभिः ॥ ९ ॥ उदुद्धयन्तमंसस्परिस्वुः
पश्यन्तऽउत्तरम् । देवन्दैवत्त्रासूर्यमगंन्मज्ज्योतिरुत्तमम् ॥१०॥ ऊ-
र्द्ध्वाऽअंस्यसमिधोभवन्त्यूर्द्ध्वाशुक्काशोचींष्यग्नेः । द्युमत्तमासुप्र-
तीकस्यसूनोः ॥११॥ तनूनपादसुरोव्विश्श्ववेदादेवोदेवेषुदेवः । पथोऽ-
ऽअनक्तुमद्ध्वाघृतेन ॥१२॥ मद्ध्वायज्ञन्नक्षसेप्प्रीणानोनराशंसोऽ-
अग्ने । सुकृद्देवःसविताव्विश्श्ववारः ॥१३॥ अच्छायमेतिशवसाघृतेनै-
डानोव्वह्निर्न्नमंसा । अग्निंस्रुचोऽअद्ध्वरेषुप्प्रयत्सु ॥१४॥ सयंक्षद-
स्यमहिमानमग्नेःसऽईम्मन्द्रासुप्प्रयसः । व्वसुश्चेतिष्ठोव्वसुधातमश्च
॥१५॥ द्वारोदेवीरन्न्वंस्यव्विश्श्वेव्व्रतादंदन्तेऽअग्नेः । उरुव्यचंसोधा-

म्प्रापत्यमानाह ॥१६॥ तेऽअस्यघोषणेदिव्ययेनखोऽनाउषासानक्ता ।
इमंयज्ञमवतामदूध्वरन्नः॥ १७॥ दैव्याहोताराऽऊदूर्ध्वमदूध्वरन्नोग्ने-
र्जिह्वामभिगृणीतम् । कृणुतन्नःस्विष्टिम् ॥ १८ ॥ तिस्रोदेवीर्ब्बहिरे-
दꣳसदन्त्विडासरस्वतीभारती । महीगृणाना ॥ १९ ॥ तन्नस्तुरीपम-
द्भुतम्पुरुक्षुत्वष्टासुवीर्य्यम् । रायस्पोषंव्विष्यतुनाभिमस्म्मे ॥२०॥
व्वनस्प्पतेवसृजाररराणस्त्मनादेवेषु । अग्निर्हव्यꣳशमितासूदयाति
॥२१॥ अग्नेस्वाहाकृणुहिजातवेदऽइन्द्रायहव्यम् । व्विश्वेदेवाहविरि-
दञ्जुषन्ताम् ॥ २२ ॥ पीवोऽअन्नारयिवृधः सुमेधाःश्वेतःसिषक्ति-
नियुतामभिश्रीः । तेव्वायवेसमनसोव्वितस्त्थुर्व्विश्वेन्नरः स्वप-

त्यानिंचक्क्रुः ॥ २३ ॥ रायेन्नुयञ्जज्ञतूरोदसीमेरायेदेवीधिषणाधाति
देवम् । अधव्वायुन्नियुतं सश्च्चतस्वाऽउतश्श्वेतंव्वसुधितिन्निरेके
॥ २४ ॥ आपोहयद्बृहतीर्व्विश्श्वमायन्गर्भन्दधानाजनयन्तीरग्निम् ।
ततोदेवानाᳬसमवर्त्ततासुरेकः कस्मैदेवायहविषाव्विधेम ॥ २५ ॥
यश्चिदापोमहिनापर्य्यपश्यद्दक्षन्दधानाजनयंतीर्य्यज्ञम् । योदेवेष्व्व-
धिदेवऽएकऽआसीत्कस्मैदेवायहविषाव्विधेम ॥ २६ ॥ प्रयाभिर्य्या-
सिदाश्श्वाᳬसमच्छानियुद्भिर्व्वायविष्टयेदुरोणे । निनोरयिᳬसुभो-
जसंय्युवस्वनिवीरङ्गव्व्यमश्श्व्यंञ्चराधः ॥ २७ ॥ आनोनियुद्भिः
शतिनीभिरद्ध्वरᳬसहस्रिणीभिरुपयाहियज्ञम् । व्वायोऽअस्मिन्त्स-

वंनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ २८ ॥ नियुत्वान्वायवाग-
ह्ययर्ठं शुक्रोऽअयामिते । गन्तासिसुन्वतोगृहम् ॥ २९ ॥ वायो-
शुक्रोऽअयामितेमधुवोऽअग्रन्दिविष्टिषु । आयाहिसोमपीतयेस्पा-
र्होदेवनियुत्वता ॥ ३० ॥ व्वायुरग्रेगायज्ञप्रीःसाकङ्गन्मनसायज्ञम् ।
शिवोनियुद्भिः शिवाभिः ॥ ३१ ॥ व्वायोयेतेसहस्रिणोरथास-
स्तेभिरागहि । नियुत्वान्त्सोमपीतये ॥ ३२ ॥ एकयाचदशभिश्श्चस्व-
भूतेद्वाभ्यामिष्टयेव्विर्ठं शतीच । तिसृभिश्श्चव्वहसेत्रिर्ठं शताच-
नियुद्भिर्व्वायविहताव्विमुञ्च ॥ ३३ ॥ तवव्वायवृतस्पतेत्वष्टुर्ज्जा-
मातरद्भुत । अवार्ठंस्यावृणीमहे ॥ ३४ ॥ अभित्वाशूरनोनुमोदुग्धा-

ऽइवधेनवः । ईशानमस्यजगतꣳस्वर्दृशमीशानमिन्द्रतस्थुषः ॥३५॥
नत्वावाँ २ ऽअन्न्योदिव्व्योनपार्थिवोनजातोनजनिष्ष्यते । अश्वा-
यन्तोमघवन्निन्द्रव्वाजिनोगव्व्यन्तस्त्वाहवामहे ॥ ३६ ॥ त्वामिद्धि-
हवामहेसातौव्वाजस्यकारवः । त्वांव्वृत्रेष्ष्विन्द्रसत्पतिन्नरस्त्वाङ्का-
ष्ठास्वर्व्वतः ॥ ३७ ॥ सत्वन्नश्चित्रव्वज्रहस्तधृष्ष्णुयामहस्तवानो
ऽअद्रिवः । गामश्वꣳरथ्यमिन्द्रसङ्किरसत्त्रावाजन्नजिग्ग्युषे ॥३८॥
कयानश्चित्रऽआभुवदूतीसदावृधꣳसखा । कयाशचिष्ठयाव्वृता ॥३९॥
कस्त्वासत्योमदानाम्मꣳहिष्ठोमत्सदन्धसः । दृढाचिदारुजेव्वसु ॥४०॥
अभीषुणꣳसखीनामविताजरितॄणाम् । शतम्भवास्यूतये ॥ ४१ ॥

सक्षायंञ्चावोऽअग्नयेंगिरागिंराचदक्षंसे । प्पंवयमम्मृतञ्ञातवेंदसम्प्रिय-
म्मित्रन्नशं६सिषम् ॥४२॥ पाहिनोंऽअग्नऽएकंयापाह्युतद्द्वितीयंया ।
पाहिगीर्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचंतसृभिर्व्वंसो ॥ ४३ ॥ ऊर्ज्जोन-
पातं६सहिनायमंस्म्मयुर्द्दाशेमहव्यदातये । भुंवद्वाजेष्ष्वविताभुवं-
दूद्धधऽउतत्रातातनूनाम् ॥ ४४ ॥ संव्वत्सरोसिपरिवत्सरोसीदा-
वत्सरोसीदूद्वत्सरोसिव्वत्सरोसि । उषसंस्तेकल्पन्तामहोरात्रास्ते
कल्पन्तामर्द्धमासास्तेंकल्पन्ताम्मासांस्तेकल्पन्तामृतवंस्तेकल्पन्ता ६
संवत्सरस्तेंकल्पताम् । प्रेत्याऽएत्यैसञ्चाञ्चप्रंचसारय । सुपर्ण्ण-
चिदंसितयांदेवतंयाङ्गिरस्वद्ध्रुवःसींद ॥ ४५ ॥

इति संहितायां सप्तविंशोऽध्यायः ।

# ❀ अथ अष्टाविंशतितमोऽध्यायः ❀

होता यक्षत्समिधेन्द्रमिडस्पदे नाभा पृथिव्याऽअधि । दिवो व्वर्ष्मन्त्समिध्यतऽओजिष्ठश्चर्षणीसहां व्वेत्वाज्ज्यस्य होतर्य्यज ॥ १ ॥
होता यक्षत्तनूनपातमूतिभिर्ज्जेतारमपराजितम् । इन्द्रन्देवꣳ स्वर्व्विदम्पथिभिर्म्मधुमत्तमैर्न्नराशꣳसेन तेजसा व्वेत्वाज्ज्यस्य होतर्य्यज ॥ २ ॥
होता यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम् । देवो देवैः सवीर्य्यो व्वज्रहस्तः पुरन्दरो व्वेत्वाज्ज्यस्य होतर्य्यज ॥ ३ ॥ होता यक्षद्बर्हिषीन्द्रन्निषद्वरं वृषभन्नर्य्यापसम् । व्वसुभी रुद्रैरादित्यैः स-

युग्भिर्व्वर्हिरासदद्द्वेत्वाज्ज्यस्य होतर्य्यज ॥ ४ ॥ होतायक्षदोजोन-
व्वीर्य्यꣳसहोद्द्वार ऽइन्द्रमवर्द्धयन् । सुप्रायणाऽअस्मिन्न्यज्ञेव्वि-
श्श्रयन्तामृतावृधोद्द्वार ऽइन्द्रायमीढुषेव्यन्त्वाज्ज्यस्य होतर्य्यज ॥ ५ ॥
होतायक्षदुषे ऽइन्द्रस्यधेनूसुदुघेमातरामही । सवातरौनतेजसाव्वत्स-
मिन्द्रमवर्द्धतांव्वीतामाज्ज्यस्य होतर्य्यज ॥ ६ ॥ होतायक्षद्दैव्याहोतारा
भिषजासखायाहविषेन्द्रम्भिषज्ज्यतः । कवीदेवौप्रचेतसाविन्द्रायध-
त्त ऽइन्द्रियंव्वीतामाज्ज्यस्य होतर्य्यज ॥ ७ ॥ होतायक्षत्तिस्रोदेवीर्न्नभेष-
जन्त्रयस्त्रिधातवोपस ऽइडासरस्वतीभारतीमहीः । इन्द्रपत्नीर्हविष्म्मं-
तीर्व्यन्त्वाज्ज्यस्य होतर्य्यज ॥ ८ ॥ होतायक्षत्त्वष्टारमिन्द्रन्देवम्भि-

षजꣳसुयजङ्घृतश्रियम् । पुरुरूपꣳसुरेतसम्मघोनमिन्द्रायत्वष्टा-
दधदिन्द्रियाणिव्वेत्वाज्यस्यहोतर्य्यज ॥ ९ ॥ होतायक्षद्वनस्प-
तिꣳशमितारꣳशतक्रतुन्धियोजोष्टारमिन्द्रियम् । मध्वासमञ्ज-
न्पथिभिः सुगेभिःस्वदातियज्ञम्मधुनाघृतेनव्वेत्वाज्यस्यहोतर्य्यज
॥ १० ॥ होतायक्षदिन्द्रꣳ स्वाहाज्यस्यस्वाहामेदसःस्वाहास्तोका-
नाꣳस्वाहास्वाहाकृतीनाꣳस्वाहाहव्यसूक्तीनाम् । स्वाहादेवाऽ-
आज्यपाजुषाणाऽइन्द्रऽआज्यस्यव्यन्तुहोतर्य्यज ॥ ११ ॥ देवम्ब-
र्हिरिन्द्रꣳसुदेवन्देवैर्व्वीरवत्स्तीर्णंव्वेद्यामवर्द्धयत् । व्वस्तोर्व्वृतम्प्रा-
क्तोर्भृतꣳरायाबर्हिष्मतोत्यगाद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ १२ ॥

देवीर्द्वारऽइन्द्रᳬं सङ्घातेव्वीड्वीर्य्यामन्नवर्द्धयन् । आवत्सेनतरुणे-
नकुमारेणंचमीवतापार्व्वाणᳬं रेणुकंकाटन्नुदन्तांव्वसुवनेव्वसुधेयंस्यव्व्य-
न्तुयज ॥ १३ ॥ देवीऽउषासानक्तेन्द्रंय्यज्ञेप्प्रयत्यह्व्वेताम् ।
दैवीर्व्विशᳬं प्प्रायासिष्टाᳬं सुप्प्रीतेसुधितेव्वसुव्वनेव्वसुधेयंस्यव्वीतांय्यज
॥ १४ ॥ देवीजोष्ट्रीव्वसुधितीदेवमिन्द्रमवर्द्धताम् । अयाव्व्य-
न्न्याघाद्द्वेषाᳬंस्यान्न्याव्वक्षद्वसुव्वार्य्याणियजमानायशिक्षितेव्वसुवने
व्वसुधेयंस्यव्वीतांय्यज ॥ १५ ॥ देवीऽऊर्ज्जाहुतीदुघेसुदुघेपयसे-
न्द्रमवर्द्धताम् । इषमूर्ज्जमन्न्याव्वक्षत्सग्ग्धिᳬं सपीतिमन्न्यानवेनपूर्व्व-
न्दयंमानेपुराणेननवमधातामूर्ज्जमूर्ज्जाहुतीऽऊर्ज्जयमानेव्वसुव्वार्य्याणि

यजमानायशिक्षितेव्वसुवनेव्वसुधेयस्यव्वीतांय्यज ॥ १६ ॥ देवा
दैव्याहोतारादेवमिन्द्रमवर्द्धताम् । हताघशꣳसावाभार्ष्टांव्वसुव्वा-
र्य्याणियजमानायशिक्षितौव्वसुवनेव्वसुधेयस्यव्वीतांय्यज ॥ १७ ॥
देवीस्तिस्रस्तिस्रोदेवीः पतिमिन्द्रमवर्द्धयन् । अस्पृक्षद्भारतीदिवꣳ
रुद्रैर्य्यज्ञꣳ सरस्वतीडाव्वसुमतीगृहान्वसुवनेव्वसुधेयस्यव्यन्तुयज
॥ १८ ॥ देवऽइन्द्रोनराशꣳसस्त्रिवरूथस्त्रिबन्धुरोदेवमिन्द्रमवर्द्धयत् ।
शतेनशितिपृष्ठानामाहितꣳसहस्रेणप्रवर्त्ततेमित्रावरुणेदस्यहोत्रमर्हतो
बृहस्पतिस्तोत्रमश्विनाध्वर्य्यवंव्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ १९ ॥
देवोदेवैर्व्वनस्पतिर्हिरण्यपर्णोमधुशाखꣳ सुपिप्पलोदेवमिन्द्रमवर्द्ध-

यत् । दिवमग्रेणास्पृक्षदान्तरिक्षम्पृथिवीमदृꣳहीद्वसुवनेव्वसुधेयं-
स्यव्वेतुयज ॥ २० ॥ देवम्बर्हिर्व्वारितीनान्देवमिन्द्रमवर्द्धयत् ।
स्वासस्थमिन्द्रेणासन्नमन्याबर्हीꣳष्यभ्यभूद्वसुवनेव्वसुधेयस्यव्वेतु
यज ॥ २१ ॥ देवोऽअग्निःस्विष्टकृद्देवमिन्द्रमवर्द्धयत् । स्विष्टङ्कु
र्व्वन्त्स्विष्टकृत्स्विष्टमद्यकरोतुनोव्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ २२ ॥
अग्निमद्यहोतारमवृणीतायंय्यजमानःपचन्पक्तीःपचन्पुरोडाशम्ब
ध्नन्निन्द्रायच्छागम् । सूपस्थाऽअद्यदेवोव्वनस्पतिरभवदिन्द्राय
च्छागेन । अघत्तम्मेदस्तःप्रतिपचताग्रभीदवीवृधत्पुरोडाशेन ।

त्वामद्यऽऋषे[1] ॥ २३ ॥ होतायक्षत्समिधानम्महद्यशः सुसमिद्धं
वरेण्यमग्निमिन्द्रं वयोधसम् । गायत्रीञ्छन्दऽइन्द्रियन्त्र्यविङ्गां वयोदध-
द्वेत्वाज्ज्यस्य होतर्य्यज ॥ २४ ॥ होतायक्षत्तनूनपातमुद्भिदं य्यङ्ग-
र्भमदितिर्द्दधे शुचिमिन्द्रं व्वयोधसम् । उष्णिहञ्छन्दऽइन्द्रियन्दित्यवा-
हङ्गां व्वयोदधद्वेत्वाज्ज्यस्य होतर्य्यज ॥ २५ ॥ होतायक्षदीडेन्न्यमी-
डितं व्वृत्रहन्तममिडाभिरीड्यं सहः सोममिन्द्रं वयोधसम् । अनुष्टु-
भञ्छन्दऽइन्द्रियम्पञ्चाविङ्गां व्वयोदधद्वेत्वाज्ज्यस्य होतर्य्यज ॥ २६ ॥
होतायक्षत्सुबर्हिषम्पूषण्वन्तममर्त्यं सीदन्तम्बर्हिषि प्प्रियेऽमृतेन्द्रं व्वयो-

---

१. त्वामद्यऽऋषऽआर्षेय० ( अ० २१ म० ६१ )

धसम् । बृहतीञ्छन्दऽइन्द्रियन्त्रिवत्सङ्गांव्वयोदधद्वेत्वाज्ज्यस्यहोत-
र्य्यज ॥ २७ ॥ होतायक्षद्व्यचस्वतीᳬंसुप्रायणाऽऋतावृधोद्वारोदेवी-
हिँरण्ययीर्ब्रह्माणमिन्द्रंव्वयोधसम् । पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्य्य-
वाहङ्गांव्वयोदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ २८ ॥ होतायक्षत्सुपेश-
सासुशिल्पेबृहतीऽउभेनक्क्तोषासानदर्शतेव्विश्श्वमिन्द्रंव्वयोधसम् ।
त्रिष्टुभञ्छन्दऽइहेन्द्रियम्पष्ठवाहङ्गांव्वयोदधद्वीतामाज्ज्यस्यहोत-
र्य्यज ॥ २९ ॥ होतायक्षत्प्रचेतसादेवानामुत्तमंय्यशोहोतारादैव्व्या
कवीसयुजेन्द्रंव्वयोधसम् । जगतीञ्छन्दऽइन्द्रियमनड्वाहङ्गांव्वयोद-
धद्वीतामाज्ज्यस्यहोतर्य्यज ॥ ३० ॥ होतायक्षत्पेशस्वतीस्तिस्रो

देवीर्हिरण्ययीर्ब्भारतीर्बृहतीर्म्महीः पतिमिन्द्रंव्वयोधसम् । विराजञ्छन्दऽइहेन्द्रियन्धेनुङ्गान्नव्वयोदधद्व्यन्त्वाज्ज्यस्य होतर्य्यज ॥३१॥
होता यक्षत्सुरेतसन्त्वष्टारम्पुष्टिवर्द्धनꣳ रूपाणि बिभ्रतम्पृथक्पुष्टिमिन्द्रंव्वयोधसम् । द्विपदञ्छन्दऽइन्द्रियमुक्षाणङ्गान्नव्वयोदधद्वेत्वाज्ज्यस्य होतर्य्यज ॥ ३२ ॥ होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुꣳ हिरण्यपर्ण्णमुक्थिनꣳ रशनाम्बिभ्रतंव्वशिम्भगमिन्द्रंव्वयोधसम् । ककुभञ्छन्दऽइहेन्द्रियंव्वशांव्वेहतङ्गांव्वयोदधद्वेत्वाज्ज्यस्य होतर्य्यज ॥ ३३ ॥ होता यक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्ग्वरुणम्भेषजङ्कविङ्क्षत्रमिन्द्रंव्वयोधसम् । अतिच्छन्दसञ्छन्दऽइन्द्रियम्बृहदृषभ-

ङ्गांव्वयोदधद्वथन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥ देवम्बर्हिंव्वयोधसन्दे-
वमिन्द्रमवर्द्धयत् । गायत्र्याच्छन्दसेन्द्रियञ्चक्षुरिन्द्रेव्वयोदधद्वसु-
वनेव्वसुधेयस्यव्वेतुयज ॥ ३५ ॥ देवीर्द्वारोव्वयोधसꣳशुचिमिन्द्र-
मवर्द्धयन् । उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रेव्वयोदधद्वसुवनेव्व-
सुधेयस्यव्यन्तुयज ॥ ३६ ॥ देवीऽउषासानक्तादेवमिन्द्रंव्वयोधसं-
न्देवीदेवमवर्द्धताम् । अनुष्टुभाच्छन्दसेन्द्रियम्बलमिन्द्रेव्वयोदधद्व-
सुवनेव्वसुधेयस्यव्वीतांय्यज ॥ ३७ ॥ देवीजोष्ट्रीव्वसुधितीदेवमि-
न्द्रंव्वयोधसन्देवीदेवमवर्द्धताम् । बृहत्याच्छन्दसेन्द्रियꣳश्रोत्रमिन्द्रे
व्वयोदधद्वसुवनेव्वसुधेयस्यव्वीतांय्यज ॥ ३८ ॥ देवीऽऊर्ज्जाहुती

दुघैसुदुघेपयसेन्द्रंव्वयोधसन्देवीदेवमवर्द्धताम् । पङ्क्त्याच्छन्दसेन्द्रि-
यᳬशुक्रमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीताँय्यज ॥ ३९ ॥
देवादैव्व्याहोतारादेवमिन्द्रंव्वयोधसन्देवौदेवमवर्द्धताम् । त्रिष्टुभ-
भाच्छन्दसेन्द्रियंत्विषिमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीताँय्यज
॥ ४० ॥ देवीस्तिस्रस्तिस्रोदेवीर्व्वयोधसम्पतिमिन्द्रमवर्द्धयन् ।
जगत्याच्छन्दसेन्द्रियᳬ शूषमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्व्यन्तु
यज ॥ ४१ ॥ देवोनराशᳬसोदेवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् ।
व्विराजाच्छन्दसेन्द्रियᳬरूपमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वेतुयज
॥ ४२ ॥ देवोव्वनस्पतिर्देवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् । द्वि-

पंदाच्छन्दंसेन्द्रियम्भगमिन्द्रे व्वयोदधंदूद्वसुवनैव्वसुधेयंस्यव्वेतुयजं
॥ ४३ ॥ देवम्बर्हिर्व्वारितीनान्देवमिन्द्रंव्वयोधसन्देवंदेवमवर्द्धयत् ।
ककुभाच्छन्दंसेन्द्रियंय्यशऽइन्द्रे व्वयोदधंदूद्वसुवनैव्वसुधेयंस्यव्वेतुयजं
॥ ४४ ॥ देवोऽअग्निःस्विष्टकृद्देवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् ।
अतिच्छन्दसाच्छन्दंसेन्द्रियङ्क्षत्रमिन्द्रेव्वयोदधंदूद्वसुवनैव्वसुधेयंस्यव्वे-
तुयजं ॥ ४५ ॥ अग्निमद्यहोतारमवृणीतायंय्यजमानःपचन्पक्तीःप-
चन्पुरोडाशम्बध्नन्निन्द्रायव्वयोधसेच्छागंम् । सूपस्थाऽअद्यदेवो
व्वनस्पतिरभवदिन्द्रायव्वयोधसेच्छागेन । अधत्तम्मेदस्तःप्रतिपच-

ताग्नं॑मीदर्वीवृधत्पु॒रो॒डाशे॑न । त्वामद्य॒ऽऋषे॑[1] ॥४६॥ इति संहितायां अष्टाविंशोऽध्यायः ।

## ❀ अथ एकोनत्रिंशोऽध्यायः ❀

ॐ समि॑द्धोऽअ॒ञ्जन्कृद॑रम्मती॒नाङ्घृ॒तम॑ग्ने॒मधु॑म॒त्पिन्व॑मानः ।
व्वा॒जीवह॑न्व्वा॒जिनं॑ञ्जातवेदो॑दे॒वानां॑व्वक्षिप्प्रि॒यमास॒धस्त्थ॑म् ॥ १ ॥ घृ॒ते-
ना॒ञ्जन्त्सम्प॒थोदे॑व॒यानान्प्रजा॒नन्व्वा॒ज्ज्यप्प्ये॑तुदे॒वान् । अनु॑त्वासप्ते
प्प्र॒दिशः॑ सचन्ताᳬस्व॒धाम॒स्म्मैयज॑मानायधेहि ॥ २ ॥ ईड्य॒श्च्चा-

1. त्वामद्यऽ ऋषऽ आर्षेय ( शु० अ० २१ म० ६१ ) ।

सिव्वन्धंश्चव्वाजिन्नाशुश्चासिमेद्ध्यंश्चसप्ते । अग्निष्ठ्वादेवैर्व्वसुभिः सजोषाः प्प्रीतंव्वह्निंवहतुजातवेदाः ॥ ३ ॥ स्तीर्ण्णम्बर्हिः सुष्टरीमाजुषाणोरुपृथुप्प्रथमानम्पृथिव्याम् । देवेभिर्युक्तमदितिः सजोषाः स्योनङ्कृण्वानासुवितेदधातु ॥ ४ ॥ एताऽउवः सुभगाव्विश्श्वरूपा व्विपक्षोभिः श्श्रयमाणाऽउदातैः । ऋष्वाः सतीः कवषः शुम्भमाना द्वारोदेवीः सुप्प्रायणाभवन्तु ॥ ५ ॥ अन्तरामित्रावरुणाचरन्तीमुखं रुयज्ञानामभिसंव्विदाने । उषासावाᳫं सुहिरण्ण्येसुशिल्पेऽऋतस्य योनाविहसादयामि ॥ ६ ॥ प्रथमावाᳫं सरथिनासुवर्ण्णादेवौपश्यन्तौभुवनानिव्विश्श्वा । अपिप्प्रयश्चोदनावाम्मिमानाहोताराज्ज्यो-

तिं॑प्र॒दिशा॑दि॒शन्ता॑ ॥ ७ ॥ आ॒दि॒त्यैर्नो॒भार॑तीव्वष्ट्व॒ज्ञꣳसर॑स्वती
स॒ह॒रु॒द्रैर्न॑ऽआवीत् । इडोप॑हूता॒व्वसु॑भिꣳस॒जोषा॑य॒ज्ञन्नो॑देवीर॒मृते॑षु
धत्त ॥ ८ ॥ त्वष्टा॑व्वी॒रन्दे॒वका॑मञ्जजान॒त्वष्टु॒रर्वा॑जायतऽआ॒शु-
रश्वं॑ ÷ । त्वष्टे॒दं॑व्विश्श्व॒म्भुव॑नञ्जजानव॒होः॒कर्ता॑र॑मि॒हय॑क्षिहोतꣳ
॥ ९ ॥ अश्श्वो॑घृ॒तेन॒त्मन्न्या॒सम॑क्त॒ऽउप॑दे॒वाँ२ऽऋ॑तु॒शः॒पाथ॑ऽएतु ।
व्व॒न॒स्पति॑र्दे॒वलो॒कम्प्र॑जा॒नन्न॒ग्निना॑ह॒व्व्या॒स्व॑दि॒तानि॑व्वक्षत् ॥ १० ॥
प्र॒जाप॑ते॒स्तप॑साव्वावृ॒धानः॒स॒द्यो॒जा॒तो॒द॑धिषेय॒ज्ञम॑ग्ने । स्वाहा॑कृतेन
ह॒विषा॑पुरोगाया॒हि॒सा॒द्ध्या॒ह॒विर॑दन्तुदे॒वाः॒ ॥ ११ ॥ यदक्र॑न्दꣳ
प्रथ॒मञ्जाय॑मान॒ऽउ॒द्यन्त्स॑मु॒द्रादु॒तवा॒पुरी॑षात् । श्ये॒नस्य॑प॒क्षाह॑रि-

णस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्व्वन् ॥ १२ ॥ यमेनदत्तन्त्रित
ऽएनमायुनगिन्द्रऽएणम्प्रथमोऽअध्यतिष्ठत् । गन्धर्व्वोऽअस्यरशना
ङ्गृभ्णात्सूरादश्श्वंव्वसवोनिरतष्ट ॥ १३ ॥ असियमोऽअस्यादित्यो
ऽअर्व्वन्नसित्रितोगुह्येनव्व्रतेन । असिसोमेनसमयाविपृक्तऽआहुस्ते
त्रीणिदिविबन्धनानि ॥ १४ ॥ त्रीणितऽआहुर्दिविबन्धनानित्रीण्यप्सु
त्रीण्यन्तःसमुद्रे । उतेवमेव्वरुणश्छन्त्स्यर्व्वन्यत्राऽआहुः परमञ्ज
नित्रम् ॥ १५ ॥ इमातेव्वाजिन्नवमार्ज्जनानीमाशफानांᳬसनितुर्न्नि-
धाना । अत्रातेभद्राराशनाऽअपश्यमृतस्ययाऽअभिरक्षन्तिगोपाः
॥ १६ ॥ आत्मानन्तेमनसारादजानामवोदिवापतयन्तम्पतङ्गम् । शि-

रीऽअपश्यन्पथिभिः सुगेभिररेणुभिर्जेहमानम्पतत्रि ॥ १७ ॥ अत्राते
रूपमुत्तममपश्यज्जिगीषमाणमिषऽआपदेगोः । यदातेमर्त्तोऽअनुभोग-
मानडादिद्ग्रसिष्ठऽओषधीरजीगः ॥१८॥ अनुत्वारथोऽअनुमर्य्योऽअ-
र्व्वन्ननुगावोऽनुभगः कनीनाम् । अनुव्व्रातासस्तवसख्यमीयुरनुदेवा-
ममिरेव्वीर्य्यन्ते ॥१९॥ हिरण्ण्यशृङ्गोयोऽअस्यपादामनोजवाऽअवरऽइ-
न्द्रआसीत् । देवाऽइदस्यहविरद्यमायन्योअर्व्वन्तम्प्रथमोऽअद्ध्यतिष्ठत्
॥ २० ॥ ईर्म्मान्तासःसिलिकमद्ध्यमासःसꣳशूरणासोदिव्व्यासोऽअ-
त्याः । हꣳसाऽइवश्रेणिशोयतन्तेयदाक्षिषुर्द्दिव्व्यमज्ज्ममश्श्वाः
॥ २१ ॥ तवशरीरम्पतयिष्ण्णवर्व्वन्तवचित्तंव्वातऽइवद्ध्रजीमान् ।

तव॒ शृङ्गा॑णि॒ विष्ठि॑ता पुरु॒त्रार॑ण्येषु॒ जर्भु॑राणा चरन्ति ॥ २२ ॥ उप॒
प्राऽगा॒च्छस॑नं वा॒ज्यर्वा॑ देव॒द्रीचा॒ मन॑सा॒ दीध्या॑नः । अ॒जः पु॒रो नी॑-
यते॒ नाभि॑र॒स्यानु॑ प॒श्चात्क॒वयो॑ यन्ति रे॒भाः ॥ २३ ॥ उप॒ प्राऽगा॑त्पर॒मं
यत्स॒धस्थ॒मर्वा॑ँ२ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च । अ॒द्या दे॒वाञ्जु-
ष्टत॑मो॒ हि ग॒म्या ऽअथा शा॑स्ते दा॒शुषे॒ वार्या॑णि ॥ २४ ॥ समि॑द्धो ऽ-
अ॒द्य मनु॑षो दु॒रो॒णे दे॒वो दे॒वान्य॑जसि जातवेदः । आ च॒ वह॑ मित्रमह-
श्चिकि॒त्वान्त्वं दू॒तः क॒विर॑सि॒ प्रचे॑ताः ॥ २५ ॥ तनू॑नपात्प॒थ ऽऋ॒त-
स्य॒ याना॒न्मध्वा॑ सम॒ञ्जन्त्स्व॑दया सुजिह्व । मन्मा॑नि धी॒भिरु॒त य॒-
ज्ञमृ॒न्धन्दे॑व॒त्रा च॑ कृणुह्यध्व॒रं नः॑ ॥ २६ ॥ नरा॒शंस॑स्य महि॒मान॑-

मेषाम्मुपस्तोषामयजतस्यंयज्ञैः । येसुक्कृतंवदंशुचंयोधियन्धाःस्वदं
न्तिदेवाऽउभयानिहव्व्या ॥ २७ ॥ आजुहृव्वानऽईड्योव्वन्द्यश्च्चा-
याह्यग्नेव्वसुभिःसजोषाः । त्वन्देवानामसियह्वहोतासऽएता-
न्यक्षीषितोयजीयान् ॥ २८ ॥ प्राचीनंम्बर्हिःप्प्रदिशापृथिव्व्याव्व-
स्तोरस्याव्वृज्ज्यतेऽअग्रेऽअन्हाम् । व्व्युप्प्रथतेव्वितरंव्वरीयोदेवे-
भ्योऽअदितयेस्योनम् ॥ २९ ॥ व्व्यचस्वतीरुर्व्वियाव्विश्रयन्ता-
म्पतिभ्योनजनयःशुम्भमानाः । देवीर्द्वारोबृहतीर्व्विश्वमिन्न्वा-
देवेभ्योभवतसुप्प्रायणाः ॥ ३० ॥ आसुष्वयन्तीयजतेऽउपाकेऽ
उषासानक्क्तासदतान्नियोनौ । दिव्व्येयोषणेबृहतीसुरुक्कमेऽअधि-

श्श्रयं६ शुक्क्रपिशन्दधाने ॥ ३१ ॥ दैव्याहोतारापथमासुवाचामि-
मानायज्ञम्मनुषोयजद्ध्यै । प्रचोदयन्ताव्विदथेषुकारूप्प्राचीनञ्ज्यो-
तिं ÷ प्प्रदिशादिशन्ता ॥ ३२ ॥ आनोयज्ञम्भारतीतूयमेत्विडामनु-
ष्ष्वदिहचेतयन्ती । तिस्रोदेवीर्ब्बर्हिरेद ँ स्योन ६ सरस्वतीस्वपसः
सदन्तु ॥ ३३ ॥ यऽइमेद्यावापृथिवीजनिन्त्रीरूपैरपिं६ शद्भुवनानि
व्विश्श्वा । तमद्यहोतरिषितोयजीयान्देवन्त्वष्टारमिहयक्षिव्वि-
द्वान् ॥ ३४ ॥ उपावसृजत्मन्न्यासमञ्जन्देवानाम्पाथऽऋतुथाह-
वीँ षिं । व्वनस्प्पतिं ÷ शमितादेवोऽअग्निः स्वदन्तुहव्यम्मधुना
घृतेन ॥ ३५ ॥ सद्योजातोव्व्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ।

अस्यहोतुः प्रदिश्यृतस्यंव्वाचिस्वाहांकृतᳪ हविरंदन्तुदेवाः ॥ ३६ ॥
केतुङ्कृण्वन्नंकेतवेपेशोमर्य्याऽअपेशसैं । समुषद्भिरजायथाः ॥३७॥
जीमूतस्येवभवतिप्रतीकंयद्वर्म्मीयातिसमदामुपस्थें । अनांवि-
द्धयातन्न्वाजयत्वᳪ सत्वाव्वर्म्मणोमहिमापिपर्त्तु ॥ ३८ ॥ धन्न्वंना
गाधन्न्वंनाजिञ्जयेमधन्न्वंनातीव्राःसमदोजयेम । धनुःशत्रोरप-
कामङ्कृणोतिधन्न्वंनासर्व्वाः प्रदिशोजयेम ॥ ३९ ॥ व्वक्ष्यन्ती
वेदागंनीगन्तिकर्ण्णम्प्रियᳪ सखांयम्परिषस्वजना । योषेवशिङ्क्तेव्वि-
तताधिधन्न्वञ्ज्याऽइयᳪसमंनेपारयंन्ती॥४०॥तेऽआचरंन्तीसमंनेवयो-
षांमातेवंपुत्रम्बिंभृतामुपस्थें। अपशत्रून्विद्ध्यताᳪसंव्विदानेऽआर्त्नी-

ऽइ॒मेव्विंष्फुरन्तीऽअ॒मित्रा॑न् ॥४१॥ब॒ह्वीनाम्पि॒ताब॒हुरंस्यपु॒त्रश्चि॒श्चाश्र॒क्
णोति॒सम॑नाव॒गत्यं ॥ इ॒षु॒धिःसङ्काःपृत॑नाश्च॒सर्व्वाः पृ॒ष्ठेनिन॑द्धोजयति॒
प्रसू॑तः॥४२॥रथे॒तिष्ठ॑न्नयतिव्वा॒जिनंः पु॒रोयत्र॑यत्रका॒मय॑तेसुषार॒थिः॥
अ॒भीशू॑नाम्महि॒मान॑म्पनायत॒मनंः प॒श्चाद॒नुं॑यच्छन्तिर॒श्मयंः ॥४३॥
ती॒व्रान्घोषा॑न्कृण्वते॒वृष॑पाण॒योश्वा॒रथे॑भिःस॒हव्वा॒जय॑न्तः ॥
अ॒व॒क्रामन्तःप्रप॑दैर॒मित्रा॑न्क्षि॒णन्ति॒शत्रूँ॑२॥रन॑पव्ययन्तः ॥ ४४ ॥
र॒थवाह॑णꣳह॒विर॑स्य॒नाम॒यत्रायु॑ध॒न्निहि॑त॒मस्य॒व्वर्म्मं । तत्रा॒रथ॒मुप॑-
श॒ग्मꣳसदेमव्वि॒श्वाहा॒व्वयꣳसु॒मन॒स्यमा॑नाः ॥ ४५ ॥ स्वा॒दु॒षꣳस-
दंः पि॒तरो॑व्वयो॒धाःकृ॑च्छ्रे॒श्रितःशक्ती॑वन्तोग॒भी॒राः । चि॒त्रसे॑ना

ऽइषुबलाऽअमृद्ध्राः सतोवीराऽउरवोव्रातसाहाः ॥ ४६ ॥ ब्राह्म-
णासः पितरः सोम्यासः शिवेनोद्यावापृथिवीऽअनेहसा । पूषानः
पातुदुरिताहतावृधोरक्षामाकिर्न्नोऽअघशंसऽईशत ॥ ४७ ॥ सुपर्ण्णं
व्वस्तेमृगोऽअस्यादन्तोगोभिः सन्नद्धापततिप्प्रसूता । यत्रानरः सञ्च
विचद्द्रवन्तितत्रास्म्मभ्यमिषवः शर्म्मयंसन् ॥ ४८ ॥ ऋजीतेपरि
वृङ्धिनोश्म्माभवतुनस्तनूः । सोमोऽअधिब्ब्रवीतुनोदितिः शर्म्मय-
च्छतु ॥ ४९ ॥ आजङ्घन्तिसान्न्वेषाञ्जघनाँ२ उपजिग्घ्नते । अश्श्वाज-
निप्प्रचेतसोश्श्वान्त्समत्सुचोदय ॥ ५० ॥ अहिरिवभोगैः पर्य्येतिबाहु-
ञ्ज्यायाहेतिम्परिबाधमानः । हस्तग्घ्नोव्विश्श्वाव्वयुनानिव्विद्वान्पु-

मान्पुमा ॐ सम्परिपातुव्विश्वतं ÷ ॥ ५१ ॥ व्वनस्पतेव्वीड्व-
ङ्गोहिभूयाऽअस्म्मत्सखाप्प्रतरणः सुवीरं ÷ । गोभिः सन्नद्धोऽअसि
व्वीडयस्वास्त्थातातेजयतुजेत्वानि ॥ ५२ ॥ दिवःपृथिव्व्याःपर्य्योज-
ऽउद्भृतंव्वनस्प्पतिब्भ्यः पर्य्याभृतꣳसहं ÷ । अपामोज्मानम्परिगो-
भिरावृतमिन्द्रस्यव्वज्ज्रꣳहविषारथंय्यज ॥ ५३ ॥ इन्द्रस्यव्वज्ज्रोम-
रुतामनीकंमित्रस्यगर्ब्भोव्वरुणस्यनाभिं ÷ । सेमान्नोहव्व्यदातिञ्जु-
षाणोदेवरथप्प्रतिहव्व्यागृभाय ॥ ५४ ॥ उपश्श्वासयपृथिवीमुतद्द्या-
म्पुरुत्त्रातेमनुतांविष्ठ्ठितञ्जगत् । सदुन्दुभेसजूरिन्द्रेणदेवैर्द्दूराद्दवीयोऽ-
अपसेधशत्त्रून् ॥ ५५ ॥ आक्क्रन्दयबलमोजोनऽआधानिष्ट्टनिहिदुरि-

तावाधमानः । अपप्प्रोथदुन्दुभेदुच्छुनाऽइतऽइन्द्रस्यमुष्टिरसिव्वीड-
यस्व ॥ ५६ ॥ आमूरंजप्प्रत्यावर्त्तयेमाः केतुमदुन्दुभिर्व्वावदीति ।
समश्वपर्ण्णाश्चरन्तिनोनरोस्म्माकमिन्द्ररथिनोजयन्तु ॥ ५७ ॥ आग्ने-
यः कृष्ण्णग्ग्रीवः सारस्वतीमेषीबभ्रुः सौम्म्यः पौष्ण्णः श्यामः शितिपृष्ठो
बार्हस्पत्यः शिल्पोवैश्वदेवऽऐन्द्रोरुणोमारुतः कल्म्माषऽऐन्द्राग्नः संह-
हितोधोरामः सावित्त्रोवारुणः कृष्ण्णऽएकशितिपात्पेत्वः ॥ ५८ ॥
अग्नयेनीकवतेरोहिताञ्जिरनड्वानधोरामौसावित्त्रोपौष्ण्णौरजतनाभीव्वै-
श्वदेवौपिशङ्गौतूपरौमारुतः कल्म्माषऽआग्नेयः कृष्ण्णोजः सारस्वतीमे-
षीव्वारुणः पेत्वः ॥ ५९ ॥ अग्नयेगायत्त्रायत्रिवृतेराथन्तरायाष्टा-

कपालऽइन्द्रायत्रैष्टुभायपञ्चदशायबार्हतायैकादशकपालोव्विश्श्वेभ्यो
देवेभ्योजागतेभ्यःसप्तदशेभ्योव्वैरूपेभ्योद्वादशकपालोमित्त्रावरु-
णाभ्यमानुष्टुभाभ्यामेकवि ꣳ शाभ्यांव्वैराजाभ्याम्पयस्याबृहस्प-
तयेपाङ्क्तायत्रिणवायशाक्वरायचरुःसवित्त्रऽऔष्णिहायत्रयस्त्रि ꣳ
शायरैवतायद्वादशकपालःप्राजापत्यश्चरुरदित्यैव्विष्णुपत्न्यैचरुर-
ग्नयेव्वैश्श्वानरायद्वादशकपालोनुमत्याऽअष्टाकपालः ॥ ६० ॥

इति संहितायां एकोनत्रिंशोऽध्यायः ॥

## ❀ त्रिंशत्तमोऽध्यायः ❀

ॐ देवसवितःप्रसुवयज्ञंप्रसुवयज्ञपतिम्भगाय । दिव्योगन्धर्व्वः

केतपूःऽकेतन्नःपुनातुव्वाचस्पतिर्व्वाचन्नःस्वदतु ॥ १ ॥ तत्सवितुर्व्वरे-
ण्यम्भर्ग्गोदेवस्यधीमहि । धियोषोनःप्रचोदयात् ॥ २ ॥ विश्वा-
निदेवसवितर्दुरितानिपरासुव । षद्भद्रन्तन्नऽआसुव ॥ ३ ॥
व्विभक्तारꣳहवामहेव्वसोश्चित्रस्यराधसः । सवितारन्नृचक्ष-
सम् ॥ ४ ॥ ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्यम्मरुद्भ्योवैश्यन्तपसे
शूद्रन्तमसेतस्करन्नारकायवीरहणम्पाप्मनेक्लीबमाक्रयायाऽअयो-
गूङ्कामायपुँश्चलूमतिक्रुष्टायमागधम् ॥ ५ ॥ नृत्तायसूतङ्गीताय
शैलूषन्धर्म्मायसभाचरन्नरिष्ठायैभीमलन्नर्म्मायरेभꣳहसायकारिमान्-
न्दायस्त्रीषखम्प्रमदेकुमारीपुत्रम्मेधायैरथकारन्धैर्य्यायतक्षाणम् ॥ ६ ॥

तपसेकौलालम्मायायैकम्मारं ॑ रूपायमणिकार ॑ शुभेव्वप ॑ शरव्यायाऽ-
इषुकार ॑ हेत्यैधनुष्कारङ्कर्म्मणेज्ज्याकारन्दिष्टायरज्जुसर्ज्जम्मृत्यवे
मृगयुमन्तकायश्वनिनम् ॥ ७ ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो
नैषादम्पुरुषव्याघ्रायदुर्म्मदङ्गन्धर्व्वाप्सरोभ्योव्व्रात्यम्प्रयुग्भ्यऽउन्म-
त्त ॑ सर्प्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्य्यतायाऽअकितवम्पि-
शाचेभ्योविदलकारीं व्यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥ स-
न्धयेजारङ्गेहायोपपतिमार्त्यै परिवित्तन्निर्ऋत्यैपरिविविदानमराध्याऽए-
दिधिषुः पतिन्निष्कृत्यैपेशस्कारी ॑ सञ्ज्ञानायस्मरकारीम्प्रकामो-
द्यायोपसदंव्वर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥ उत्सादेभ्यः

कुब्जम्प्रमुदेव्वामनन्द्वार्ब्भ्यःस्रामꣳस्वप्नायान्धमधर्म्मायबधिरम्पवित्त्रा-
यभिषजम्प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्प्रश्निनमुपशिक्षायाऽअभिप्प्र-
श्निनम्मर्य्यादायैप्प्रश्नविवाकम् ॥ १० ॥ अर्म्मेभ्योहस्तिप-
ञ्जवायाश्श्वम्पुष्ट्यैगोपालंव्वीर्य्यायाविपालन्तेजसेजपालमिरायैकी-
नाशङ्कीलालायसुराकारम्भद्द्रायगृहपꣳश्रेयसेव्वित्तधमाद्ध्यक्ष्या-
यानुक्षत्तारम् ॥ ११ ॥ भायैदार्व्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्य
व्विष्टपायाभिषेक्तारंव्वर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशिता-
रम्मनुष्ष्यलोकायप्प्रकरितारꣳसर्व्वेभ्योलोकेभ्यऽउपसेक्तारमवऽ-
ऋत्यैव्वधायोपमन्थितारम्मेधायव्वासःपल्पूलीम्प्रकामायरजयित्त्रीम्

॥ १२ ॥ ऋतयैस्तेनहृदयंव्वैरहत्यायपिशुनंव्विविक्त्यैक्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कन्दम्प्रियायप्प्रियवादिनमरिष्ट्याऽअश्वसादःस्वर्गायलोकायभागदुघंव्वर्षिष्ठायनाकायपरिवेष्टारम् ॥ १३ ॥ मन्यवेऽयस्तापङ्क्रोधायनिसरंय्योगाययोक्तारःशोकायाभिसर्त्तारङ्क्षेमायव्विमोक्त्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनंव्वपुषेमानस्कृतःशीलायाञ्जनीकारीन्निर्ऋत्यैकोशकारीम् ॥ १४ ॥

यमाययमसूमथर्व्वभ्योवतोकाःसंव्वत्सरायपर्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्क्कद्वरीव्वत्सरायव्विजर्जराःसंव्वत्सरायपलिक्क्नीमृभुभ्योजिनसन्धःसाद्ध्येभ्यं-

श्चर्म्मम्म्नम् ॥ १५ ॥ सरोभ्म्योधैवरमुपस्त्थावंराभ्म्योदाशंव्वैशन्ता-
भ्म्योव्वैन्दन्नंड्वलाभ्म्यः शौष्क्कलम्पारायंमार्ग्गारमंवारायंकेवर्त्तन्तीर्थे-
भ्म्यऽआन्दंव्विषमेभ्म्योमैनालंस्वनेभ्म्यः पर्ण्णकङ्गुहाभ्म्यः किरातः
सानुभ्म्योजम्भंकम्पर्व्वतेभ्म्यः किम्पूरुषम् ॥ १६ ॥ बीभत्सायैपौल्क-
संव्वर्ण्णायहिरण्ण्यकारन्तुलायैव्वाणिजम्पश्चादोषायंग्लाविनंव्विश्श्वे-
भ्म्योभूतेभ्म्यः सिध्मलम्भूत्यैजागरणमभूत्यैस्वपनमार्त्यैजनवादिनं
व्व्युद्ध्याऽअपगल्भᳬ संᳬशरायंप्प्रच्छिदम् ॥ १७ ॥ अक्षरा-
जायंकितवङ्कृतायादिनवदर्शन्त्रेतायैकल्पिनन्द्वापरायाधिकल्पिनंमा-
स्कन्दायंसभास्त्थाणुम्मृत्यवेगोव्व्यच्छमन्तकायगोघातङ्क्षुधेसोगांव्वि-

कृन्तन्तन्भिक्षमाणऽउपतिष्ठतिदुष्कृतायचरकाचार्य्यम्पाप्मनेसैलगम्
॥ १८ ॥ प्रतिश्रुत्कायाऽअर्त्तनङ्घोषायभषमन्तायबहुवादिनमनन्ता-
यमूकꣳशब्दायाडम्बराघातम्महसेवीणावादङ्क्रोशायतूणवध्ममवर-
स्परायशङ्खध्मंव्वनायव्वनपमन्यतोरण्यायदावपम् ॥ १९ ॥
नर्म्मायपुंश्चलूꣳहसायकारिंय्यादसेशाबल्याङ्ग्रामण्ण्यङ्गणकमभि-
क्रोशकन्तान्महसेवीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृत्तायानन्दाय
तलवम् ॥ २० ॥ अग्नयेपीवानम्पृथिव्यैपीठसर्प्पिणंव्वायवेचाण्डा-
लमन्तरिक्षायवꣳशनर्त्तिनन्दिवेखलतिꣳसूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यः
किर्म्मिरञ्चन्द्रमसेकिलासमह्नेशुक्लम्पिङ्गाक्षꣳरात्र्यैकृष्णम्पिङ्गाक्षम्

॥ २१ ॥ अथैतानुष्टौव्विरूपानालंभतेतिदीर्घञ्चातिह्रस्वञ्चातिस्थू-
लञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चातिलोमशञ्च । अशू-
द्द्राऽअब्ब्राह्मणास्तेप्प्राजापत्त्याः । मागधः पुँश्चलीकितवः क्लीबोऽशू-
द्द्राऽअब्ब्राह्मणास्तेप्प्राजापत्त्याः ॥ २२ ॥ इति संहितायां त्रिंशत्त-
मोऽध्यायः ।

## ❀ अथ एकत्रिंशोऽध्यायः ❀

ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्व्वतः-
स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषएवेदꣳ सर्वँय्यद्भूतँय्यच्च

भाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावान-
स्यमहिमातोज्ज्यायाँश्श्चपूरुषः । पादोस्यव्विश्श्वाभूतानित्त्रिपादस्या-
मृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ।
ततोव्विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोव्विराडजा-
यतव्विराजोऽअधिपूरुषः । सजातोऽअत्यरिच्च्यतपश्चाद्भूमिमथो
पुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्च-
क्क्रेव्वायव्यानारण्ण्याग्ग्राम्म्याश्श्चये ॥ ६ ॥ तस्म्माद्यज्ञात्सर्व्वहुत-
ऽऋचःसामानिजज्ञिरे । छन्दाᳫंसिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजा-
यत ॥ ७ ॥ तस्म्मादश्श्वाऽअजायन्तयेकेचोभयादतः । गावोहजज्ञि-

रेतस्म्मात्तस्म्माज्जाताऽअंजावयं÷ ॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्प्रौक्षन्न्पु-
रुषञ्ज्जातमंग्ग्रत॒ः । तेनंदेवाऽअंयजन्तसाद्ध्याऽऋषंयश्श्चये ॥ ९ ॥
यत्पुरुषंव्व्यदंधुःकतिधाव्व्यंकल्प्पयन् । मुखङ्किमंस्यासीत्किम्बाहू
किमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणोस्यमुखंमासीद्बाहूराजन्न्य÷
कृत॒ः । ऊरूतदंस्ययद्वैश्श्यं÷पद्भ्याᳲशूद्द्रोऽअंजायत ॥ ११ ॥
चन्द्रमामनंसोजातश्श्चक्षोःसूर्य्योंऽअजायत । श्श्रोत्राद्वायुश्श्चंप्प्राण-
श्श्चमुखादग्निरंजायत ॥१२॥ नाभ्याऽआसीदन्तरिक्षᳲशीष्ष्र्णोद्यौ॒ः
समंवर्त्तत । पद्भ्याम्भूमिर्द्दिशःश्श्रोत्रात्तथालोकाँ२अंकल्प्पयन्
॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतंन्न्वत । व्वसन्तोस्यासीदाज्ज्यं-

इ॒ग्ग्रीष्म॒मऽइ॒ध्मः॑श॒रद्ध॒विः ॥ १४ ॥ स॒प्तास्या॑सन्परि॒धय॒स्त्रिः॑स॒प्त-
स॒मिधः॑कृ॒ताः । दे॒वा यद्य॒ज्ञन्त॑न्वा॒नाऽअब॑ध्न॒न्पुरु॑षम्प॒शुम् ॥ १५ ॥
य॒ज्ञेन॑य॒ज्ञम॑यजन्तदे॒वास्तानि॒धर्म्मा॑णिप्रथ॒मान्या॑सन् । तेह॒नाक॑म्महि॒-
मानः॑सचन्त॒यत्र॒पूर्वे॑सा॒ध्याःसन्ति॑दे॒वाः ॥ १६ ॥ अ॒द्भ्यः॑सम्भृ॑तः
पृथि॒व्यैरसा॑च्चवि॒श्वक॑र्म्मण॒ःसम॑वर्त्त॒ताग्ग्रे॑ । तस्य॒त्वष्टा॑वि॒दध॑द्रू॒प-
मे॑ति॒तन्मर्त्य॑स्यदे॒वत्वमा॒जान॒मग्ग्रे॑ ॥ १७ ॥ वेदा॒हमे॒तम्पुरु॑षम्म॒हान्त॑-
मादि॒त्यव॑र्ण्ण॒न्तम॑सः॒पर॒स्तात् । तमे॒वविदि॒त्वाति॑मृ॒त्युमे॑ति॒नान्यः॑

---

१. 'यथा भारभराऽऽक्रान्ता निश्वसन्ति नरा भुवि । एवं वर्णाः प्रयोक्तव्याः
'अद्भ्यः सम्भृत' इत्यपि ॥ ( या० शि० श्लो० ६६ ) ।

पन्थाव्विद्यतेयनाय ॥ १८ ॥ प्रजापतिश्चरतिगर्ब्भेऽअन्तरजायमानो
बहुधाव्विजायते । तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्न्हतस्त्थुर्ब्भु-
वनानिव्विश्श्वा ॥ १९ ॥ योदेवेब्भ्यऽआतपतियोदेवानाम्पुरोहितः ।
पूर्व्वोयोदेवेब्भ्योजातोनमोरुचायब्ब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जन-
यन्तोदेवाऽअग्ग्रेतदब्रुवन् । यस्त्वैवम्ब्राह्मणोव्विद्यात्तस्यदेवाऽअस-
न्वशे ॥ २१ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूप-
मश्श्विनौव्यात्तम् । इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण
॥ २२ ॥ इति संहितायामेकत्रिंशोऽध्यायः ।

---

# ❀ अथ द्वात्रिंशोऽध्यायः ❀

ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रन्त-
द्ब्रह्म ताऽआपः स प्रजापतिः ॥ १ ॥ सर्व्वे निमेषा जज्ञिरे विद्युतः
पुरुषादधि । नैनमूर्द्ध्वन्न तिर्य्यञ्चन्न मद्ध्ये परिजग्ग्रभत् ॥ २ ॥
न तस्य प्रतिमाऽअस्ति यस्य नाम महद्यशः । हिरण्यगर्ब्भऽइत्येष-
मा मा हिᳬसीदित्येषा यस्मान्न जातऽइत्येषः ॥ ३ ॥ एषो ह देवः प्रदि-

१. हिरण्यगर्भः सम्, यः प्राणतो नि, यस्येमे, यऽ आत्मदा ( शु० अ० २५ मं० १०–१३ ) यस्मान्न जातः ( शु० श० ८ मं० ३६ ) मा मा हिᳬ० सीत् ( शु० अ० १२ मं० १०२ )

शोनुसर्व्वाꣳपूर्व्वोहजातःसऽउगर्ब्भेऽअन्तः । सऽएवजातःसजं
निष्ष्यमाणꣳप्प्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखꣳ ॥ ४ ॥ यस्म्माज्जा-
तन्नपुराकिञ्चनैवयऽआबभूवभुवनानिव्विश्श्वा । प्रजापतिꣳप्प्रज-
यासꣳरराणस्त्रीणिज्ज्योतीꣳषिसचतेसषोडशी ॥ ५ ॥ येनद्यौरु-
ग्ग्राप्पृथिवीचदृढायेनस्वस्तभितंय्येननाकः । योऽअन्तरिक्षेरजसो
व्विमानꣳकस्म्मैदेवायहविषाव्विधेम ॥ ६ ॥ यङ्क्रन्दसीऽअवसात-
स्तभानेऽअब्भ्यैक्षेताम्मनसारेजमाने । यत्राधिसूरऽउदितोव्विभाति
कस्म्मैदेवायहविषाव्विधेम । आपोहयद्बृहतीर्य्यश्चिद्दापः ॥ ७ ॥

१. आपो हयद् बृहतीः, यश्चित् ( शु० अ० २७ मं० २५, २६ )

व्वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रव्विश्श्वम्भवत्त्येकनीडम् । तस्मि-
न्निदꣳसञ्चव्विचैतिसर्व्वꣳसऽओतꣳप्प्रोतश्च्चव्विभूःप्रजासु ॥ ८ ॥
प्रतद्वोचेदमृतन्नुव्विद्वान्गन्धर्व्वोधामव्विभृतङ्गुहासत् । त्रीणि
पदानिनिहितागुहास्ययस्तानिव्वेदसपितुःपितासत् ॥ ९ ॥ सनो
बन्धुर्ज्जनितासव्विधाताधामानिव्वेदभुवनानिव्विश्श्वा । यत्रदेवाऽ
अमृतमानशानास्तृतीयेधामन्नध्यैरयन्त ॥ १० ॥ परीत्यभूतानि
परीत्यलोकान्परीत्यसर्व्वाःप्प्रदिशोदिशश्च्च । उपस्थायप्प्रथम-
जामृतस्यात्मनात्मानमभिसंव्विवेश ॥ ११ ॥ परिद्यावापृथिवीस-
द्यऽइत्वापरिलोकान्परिदिशꣳपरिस्वः । ऋतस्यतन्तुंव्विततंव्वि-

चृत्यतदपश्यत्तदभवत्तदासीत् ॥ १२ ॥ सदसस्पतिमद्भुतम्प्रिय
मिन्द्रस्यकाम्म्यम् । सनिम्मेधामयासिषᳬस्वाहा ॥ १३ ॥ याम्मे-
धान्देवगणाः पितरश्श्चोपासते । तयामामद्यमेधयाग्ग्नेमेधाविनङ्कु-
रुस्वाहा ॥ १४ ॥ मेधाम्मेव्वरुणोददातुमेधामग्निः प्रजापतिः ।
मेधामिन्द्रश्चव्वायुश्श्चमेधान्धातादवातुमेस्वाहा ॥ १५ ॥ इदम्मेब्रह्म-
चक्षत्रश्चोभेश्श्रियमश्नुताम् । मयिदेवादधतुश्श्रियमुत्तमान्तस्यै
तेस्वाहा ॥ १६ ॥ इति संहितायां द्वात्रिंशोऽध्यायः ।

## ❀ अथ त्रयस्त्रिंशतितमोऽध्यायः ❀

ॐअस्याजरासोदमामरित्रा अर्चद्धूमासोऽअग्नयः पावकाः । श्श्वि-

तीचयं÷श्श्वाग्रासौभुरण्ण्यवोव्वनर्षदोव्वायवोनसोमाः ॥ १ ॥ हर-
योधूमकेतवोव्वातजूताऽउपद्द्यवि । यतन्तेव्वृथगग्नयं÷ ॥ २ ॥ यजा-
नोमिञ्चावरुणायजादेवाँ२ऋतम्बृहत् । अग्ग्नेयक्षिस्वन्दमम् ॥ ३ ॥
युक्क्ष्वाहिदेवहूतमाँ२ अश्श्वाँ२अग्ग्नेरथीरिव । निहोतापूर्व्यःसदः ॥४॥
द्वेव्विरूपेचरतःस्वत्थेऽअन्न्यान्न्याव्वत्समुपधापयेते । हरिरन्न्यस्या-
म्भवतिस्वधावाञ्छुक्क्रोऽअन्न्यस्यान्ददृशेसुवर्च्चाः ॥ ५ ॥ [ शतम्—
१७००] अयमिहप्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्वीड्यं÷।
यमप्नवानोभृगवोव्विरुरुचुर्व्वनेषुचित्रंव्विभ्वंव्विशेविशे ॥६॥ त्रीणि
शतात्रीसहस्राण्यग्ग्निन्त्रिꣳशच्चदेवानवचासपर्य्यन् । औक्षन्घृतैरस्तृ-

णन्बर्हिरस्म्मा॒ऽआदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवोऽअर॒-
तिम्पृथिव्व्यावैश्श्वानरमृतऽअजातमग्निम् । कविᳬसम्राजमतिथि-
ञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ८ ॥ अग्निर्व्वृत्राणिजङ्घनद्द्र-
विणस्युर्व्विपन्न्यया । समिद्धᳬशुक्क्रऽआहुतᳬ ॥ ९ ॥ विश्श्वेभिᳬसो-
म्म्यम्मद्ध्वग्नऽइन्द्रेणव्वायुना । पिबामित्रस्यधामभिᳬ ॥१०॥ आयदि-
षेनृपतिन्तेजऽआनट्शुचिरेतोनिषिक्तन्द्यौरभीके । अग्निᳬशर्द्धमनवद्यं
युवानᳬस्वाद्ध्यञ्जनयत्सूदयञ्च ॥ ११ ॥ अग्नेशर्द्धमहतेसौभगाय
तवद्द्युम्म्नान्न्युत्तमानिसन्तु । सञ्जास्पत्यᳬसुयममाकृणुष्ष्वशत्रूय-
तामभितिष्ठमहाᳬसि ॥ १२ ॥ त्वाᳬहिमन्द्रतममर्क्कशोकैर्व्ववृमहे

महिनᳪश्रोष्ष्यं॑ग्ने । इन्द्रन्न॑त्वा॒शव॑सादे॒वता॑व्वा॒युम्पृ॑णन्ति॒राध॑सा॒नृ-
त॑माः ॥ १३ ॥ त्वेऽअ॑ग्नेस्वाहुत॒प्प्रि॒यास॑ꣳसन्तुसू॒रय॑ꣳ । य॒न्तारो॑
ये॒म॒घवा॑नो॒जना॑नामू॒र्व्वान्दय॑न्त॒गोना॑म् ॥ १४ ॥ श्रुधिश्रुत्कर्ण॒व्व-
न्हि॑भिर्दे॒वैर॑ग्नेस॒यावि॑भिः । आसी॑दन्तुब॒र्हिषि॑मि॒त्रोऽअ॑र्य्य॒मा प्रा॑त॒-
र्य्यावा॑णोऽअद्ध्व॒रम् ॥ १५ ॥ व्विश्वे॑षा॒मदि॑तिर्य्य॒ज्ञिया॑नां॒व्विश्वे॑-
षा॒मति॑थि॒र्म्मानु॑षाणाम् । अ॒ग्निर्दे॒वाना॒मव॑ऽआवृणा॒नः सु॑मृ॒डीको॑भव-
तुजा॒तवे॑दाः ॥ १६ ॥ म॒होऽअ॒ग्नेः स॑मिधा॒नस्य॒शर्म्म॒ण्यना॑गामि॒त्रे
व्वरु॑णेस्व॒स्तये॑ । श्रेष्ठे॑स्यामसवि॒तुः सवी॑मनि॒तद्दे॒वाना॒मवो॑ऽअ॒द्या-
व्वृ॑णीमहे ॥ १७ ॥ आप॑श्चित्पिप्युस्त॒र्य्यो॒नगावो॒नक्ष॑न्नृ॒तञ्ज॑रि॒तार॑-

स्तऽइन्द्र । साह्वि्वायुर्ब्बनियुतोनोऽअच्छात्वᳫंहिधीभिर्द्दयसेव्विवा-
जान् ॥१८॥ गावऽउपावतावतम्महीयज्ञस्यरप्प्सुदा । उभाकर्ण्णाहि-
रण्ण्यया ॥१९॥ यदद्यसूरऽउदितेनागामित्रोऽअर्य्यमा । सुवातिस-
विताभगः ॥२०॥ आसुतेसिञ्चतश्रियᳫंरोदस्योरभिश्रियम् । रसा-
दधीतव्वृषभम् । तम्प्रत्क्नथायंव्वेनः[1] ॥२१॥ आतिष्ठन्तम्परिविश्वेऽअ-
भूषञ्छ्रियोव्वसानश्चरतिस्वरोचिः । महत्तद्वृष्ण्णोऽअसुरस्यनामा
विश्वरूपोऽअमृतानितस्थौ ॥ २२ ॥ प्रवोमहेमन्दमानायान्धसोर्च्चा
व्विश्वानरायव्विश्वाभुवे । इन्द्रस्ययस्यसुमखᳫंसहोमहिश्रवोनृ-

1. तम्प्रत्क्नथा (शु० अ० ७ मं० १२) अयं वेनः (शु० अ० ७ मं० १६)।

म्मणश्चुरोदसीसपर्व्वतं ॥ २३ ॥ बृहन्निदिध्मऽएषाम्भूरिशस्त-
म्पृथुः स्वरुः । येषामिन्द्रोयुवासखा ॥ २४ ॥ इन्द्रेहिमत्स्यन्धसो
विश्वेभिःसोमपर्व्वभिः । महाँ२ऽअभिष्टिरोजसा ॥ २५ ॥ इन्द्रोव्वृ-
त्रमवृणोच्छर्द्धनीतिःप्रमायिनाममिनाद्वर्प्पणीतिः । अहन्व्यंसमु-
शधग्वनेष्वाविर्द्धेनाऽअकृणोद्राम्म्याणाम् ॥ २६ ॥ कुतस्त्वमि-
न्द्रमाहिनःसन्नेकोयासिसत्पतेकिन्तऽइत्था । सम्पृच्छसेसमराणःशुभा-
नैर्व्वोचेस्तन्नोहरिवोयत्तेऽअस्म्मे । [1]महाँ२ऽइन्द्रोयऽओजसाकदा-

1. महाँऽ इन्द्रो यऽ ओजसा ( शु० अ० ७ मं० ४० )।

चनस्तरीरसिकदाचनप्रयुच्छसि[2] ॥ २७ ॥ आतत्तऽइन्द्रायवंःपन-
न्ताभियऽऊर्व्वङ्गोमन्तन्तितृत्सान् । सकृत्स्वं ऽयेपुरुपुत्राम्महीᳬसहस्र-
धाराम्बृहतीन्दुदुक्षन् ॥ २८ ॥ इमान्तेधियम्प्रभरेमहोमहीमस्यस्तोत्रे
धिषणायत्तऽआनजे । तमुत्सवेचप्प्रसवेचसासहिमिन्द्रन्देवासᳬशव-
सामदन्ननु ॥ २९ ॥ व्विभ्राड्बृहत्पिबतुसोम्म्यम्मद्ध्वायुर्द्दधद्यज्ञ-
पतावविह्रुतम् । व्वातजूतोयोऽअभिरक्षतित्मनाप्प्रजाःपुपोषपुरुधा-
व्विराजति ॥ ३० ॥ उदुत्यञ्जातवेदसन्देवंव्वहन्तिकेतवंः । दृशेव्वि-

---

२. कदाचनस्तरीरसि, कदाचन प्रयुच्छसि ( शु० अ० ८ मं० २-३ )।

श्श्वायसूर्य्यम् ॥३१॥ येनापावकचक्षसाभुरण्यन्तञ्जनाँ२ऽअनु । त्वं
व्वंरुणपश्यसि ॥ ३२ ॥ दैव्यावद्ध्वर्यूऽआगतœरथेनसूर्य्यत्वचा
मद्ध्वायज्ञœसमञ्जाथे । तम्प्रत्नथायंव्वेनश्चित्रन्देवानाम्[1] ॥ ३३ ॥
आनऽइडाभिर्व्विदथेसुशस्तिव्विश्श्वानरःसवितादेवऽएतु । अपि
यथायुवानोमत्सथानोव्विश्श्वञ्जगदभिपित्वेमनीषा ॥ ३४ ॥ यद्-
द्यकच्चव्वृत्रहन्नुदगाऽअभिसूर्य्य । सर्व्वन्तदिन्द्रतेव्वशे ॥ ३५ ॥
तरणिर्व्विश्श्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य । व्विश्श्वमाभासिरोच-

---

१. तम्प्रत्नथा, अयं वेनः, चित्रं देवानाम् (शु० अ० ७ मं० १२, १६, ४२)।

गम् ॥ ३६ ॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वम्मध्याकर्त्तोर्व्विततᳪ-
सञ्जभार । यदेदयुक्तहरितः सधस्त्थादाद्रात्रीव्वासस्तनुतेसि-
मस्मै ॥ ३७ ॥ तन्मित्रस्यव्वरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्यो-
रुपस्त्थे । अनन्तमन्न्यद्रुशदस्यपाजः कृष्णमन्न्यद्धरितᳪसम्भ-
रन्ति ॥ ३८ ॥ बण्णमहाँ२अंसिसूर्य्यबडादित्यमहाँ२ऽअसि ।
महस्तैसतोमहिमापनस्यतेद्धादेवमहाँ२ऽअसि ॥ ३९ ॥ बट्सूर्य्य-
श्श्रवसामहाँ२ऽअसिसत्रादेवमहाँ२असि । मन्हादेवानामसुर्य्यः
पुरोहितोव्विभुज्ज्योतिरदाब्भ्यम् ॥ ४० ॥ श्रायन्तऽइवसूर्य्यंव्विश्श्वे-
दिन्द्रस्यभक्षत । व्वसूनिजातेजनमानऽओजसाप्प्रतिभागन्नदीधिम

॥ ४१ ॥ अद्यादेवाऽउदितासूर्य्यस्यनिरꣳहसःपिपृतानिरवद्यात् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥ ४२ ॥
आकृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च । हिरण्ययेनस-
वितारथेनादेवोयातिभुवनानिपश्यन् ॥ ४३ ॥ प्रवावृजेसुप्रयाबर्हि-
रेषामाविश्पतीवबीरिटऽइयाते । व्विशामक्तोरुषसःपूर्व्वहूतौव्वा-
युःपूषास्वस्तयेनियुत्वान् ॥ ४४ ॥ इन्द्रवायूबृहस्पतिम्मित्राग्निम्पू-
षणम्भगम् । आदित्यान्मारुतङ्गणम् ॥ ४५ ॥ व्वरुणःप्राविताभुव-
न्मित्रोव्विश्वाभिरूतिभिः । करतान्नःसुराधसः ॥ ४६ ॥ अधि-
नऽइन्द्रैषांव्विष्णोसजात्यानाम् । इतामरुतोऽअश्विना । तम्प्रत्क्था-

यंम्प्रत्नोयेदेवास ऽआनऽइडाभिर्विश्वेभिःसोम्यम्मदूधौमासश्चर्षणी
धृतं ॥ ४७ ॥ अग्नऽइन्द्रव्वरुणमित्रदेवाःशर्द्धःप्रयन्तमारुतोत-
विष्णो । उभानासत्यारुद्रोऽअधग्नाःपूषाभगःसरस्वतीजुषन्त
॥ ४८ ॥ इन्द्राग्नीमित्रावरुणादितिꣳस्वःपृथिवीन्द्यामरुतःपर्व्व-
ताँ२अपः । हुवेविष्णुम्पूषणम्ब्रह्मणस्पतिम्भगन्नुशꣳसꣳसविता-
रमूतये ॥ ४९ ॥ अस्मेरुद्रामेहनापर्व्वतासोवृत्रहत्येभरहूतौस-
जोषाः । यःशꣳसतेस्तुवतेधायिपज्ज्रऽइन्द्रज्ज्येष्ठाऽअस्माँ२अवन्तु

---

१. तम्प्रत्नथा, अयं वेनः, ये देवासः, ओमासश्चर्षणीधृ७ (शु० अ० ७ मं० १२, १६, १९, ३३) आनऽ इडा, विश्वेभिः सौम्यम् (शु० अ० ३३ मं० ३४, १०)।

देवाः ॥५०॥ अर्व्वाञ्चोऽअद्याभवतायजत्राऽआवोहार्द्दिभयमानोव्व्यये-
येयम् । त्राद्ध्वन्नोदेवानिजुरोव्वृकस्यत्राद्ध्वंकर्त्तादवपदोयजत्राः
॥५१॥ विश्श्वेऽअद्यमरुतोविश्श्वऽऊतीविश्श्वेभवन्त्वग्नयःसमिद्धाः ।
व्विश्श्वेनोदेवाऽअवसागमन्तुव्विश्श्वमस्तुद्रविणंव्वाजोऽअस्म्मे ॥५२॥
व्विश्श्वेदेवाःश्शृणुतेमᳬहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ । येऽअग्नि-
जिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयद्ध्वम् ॥ ५३ ॥
देवेब्भ्योहिप्प्रथमंय्यज्ञियेब्भ्योमृतत्वᳬसुवसिभागमुत्तमम् । आदि-
द्दामानᳬसवितर्व्व्यूर्णुषेनूचीनाजीविताम्मानुषेब्भ्यः ॥ ५४ ॥ प्रवा-
युमच्छाबृहतीमनीषाबृहद्रयिंव्विश्श्ववारᳬरथप्प्राम् । द्युतद्या-

मानियुतꣳपत्यमानꣳकविꣳकविर्मियक्षसिप्प्रयज्ज्यो ॥ ५५ ॥ इन्द्रवा-
यूऽइमेसुताऽउपप्प्रयोभिरागतम् । इन्दवोवामुशन्तिहि ॥ ५६ ॥
मित्रꣳहुवेपूतदक्षंव्वरुणञ्चरिशादसम् । धियङ्घृताचीꣳसाधन्ता
॥ ५७ ॥ दस्राबुवाकवꣳसुतानासत्याव्वृक्तबर्हिषꣳ । आयातꣳरु-
द्रवर्त्तनी । तम्प्रत्नथायंव्वेनः ॥ ५८ ॥ व्विदद्यदीसरमारुग्णमद्रे-
र्म्महिपाथःपूर्व्यꣳसध्र्यक्कꣳ । अग्रन्नयत्सुपद्यक्षराणामच्छारवं-
प्प्रथमाजानतीगात् ॥ ५९ ॥ नहिस्पशमविदन्नन्यमस्माद्वैश्वान
रात्पुरऽएतारमग्नेः । एमैनमवृधन्नमृताऽअमर्त्यंव्वैश्वानरङ्क्षैत्र-

---

१. तम्प्रत्नथा, अयं वेनः ( शु० अ० ७ मं० १२, १६ ) ।

जित्यायदेवाः ॥ ६० ॥ उग्राव्विघनिनामृधऽइन्द्राग्नीहवामहे ।
तानोमृडातऽईदृशे ॥ ६१ ॥ उपास्मैगायतानरः पवमानायेन्दवे ।
अभिदेवाँ२ इयक्षते ॥ ६२ ॥ येत्वाहिहत्येमघवन्नवर्द्धन्न्येशाम्बरेहरि-
वोयेगविष्टौ । येत्वानूनमनुमदन्तिव्विप्राः पिबेन्द्रसोमहसगणोमरु-
द्भिः ॥ ६३ ॥ जनिष्ठाऽउग्रः सहसेतुरायमन्द्रऽओजिष्ठोवहुला-
भिमानः । अवर्द्धन्निन्द्रम्मरुतश्चिद्त्रमातायद्वीरन्दधनद्धनिष्ठा
॥ ६४ ॥ आतूनऽइन्द्रव्वृत्रहन्नस्माकमर्द्धमागहि । महान्महीभिरू-
तिभिः ॥ ६५ ॥ त्वमिन्द्रप्प्रतूर्तिष्वभिविश्वाऽअसिस्पृधः ।
अशस्तिहाजनिताव्विश्वतूरसित्वन्तूर्व्यतरुष्यतः ॥ ६६ ॥ अनुते

शुष्म॑न्तुरयन्तमीयतुᳬक्षोणीशिशु॒न्नमातरा॑ । व्विश्श्वा॑स्त॒स्पृध॑ᳬश्नथ-
यन्तम॒न्न्यवैं॑व्वृ॒त्रंम्स॒दिन्द्र॒तू॒व्वैंसि ॥ ६७ ॥ य॒ज्ञोदे॒वाना॒म्प्रत्यैतिसु॒म्न-
मादि॑त्यास॒ोभव॑तामृड॒यन्त॑ᳬ । आवो॒र्व्वाचीसु॒म॒तिव्वैं॑वृत्याद॒ᳬ ह्वोश्चि॒द्य-
द्वा॒व्वरि॑वो॒वित्त॒रास॑त् ॥ ६८ ॥ अद॑ब्धेभिᳬसवितᳬपा॒युभि॒ष्ट्व॒ᳬशि-
वेभि॑र॒द्यपरि॑पाहि॒नो॒गय॑म् । हिर॑ण्ण्यजिह्वᳬसु॒वि॒ताय॒नव्व्य॑से॒रक्षा-
माकि॑र्न्नो॒ऽअघशं॑ᳬसऽईशत ॥ ६९ ॥ प्रवी॒र॒याशु॒च॑योदद्रि॒रे॒वामद॒ध्व॒-
र्य्युभि॒र्म्मधु॑मन्तᳬसु॒तास॑ᳬ । व्वह॒व्वायोनि॒युतो॑याह्यच्छापिबा॑सु॒त-
स्यान्ध॑स॒ोमदा॑य ॥७०॥ गाव॒ऽउपा॑वतावतम्म॒हीय॒ज्ञस्य॑र॒प्सुदा॑ । उभा-
कर्णा॑हि॒र॒ण्ण्यया॑ ॥७१॥ काव्व्य॑यो॒रा॒जानेषु॒क्क्रत्वा॒दक्ष॑स्यदु॒रो॒णे । रि॒-

शार्द्सासधस्त्थऽआ ॥७२॥ दैव्व्यावद्ध्वर्य्यूऽआगतᳯरथेनसूर्य्यत्वचा।
मद्ध्वायज्ञᳯसमञ्जाथे । तम्प्रत्क्कथायंव्वेनः¹ ॥७३॥ तिरश्चीनोव्वित-
तोरश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् । रेतोधाऽआसन्न्म-
हिमानऽआसन्त्स्वधाऽअवस्तात्प्रयतिᳯपरस्तात् ॥७४॥ आरोदसीअपृ-
णदास्वर्म्महज्जातंय्यदेनमपसोऽअधारयन् । सोऽअद्ध्वरायपरिणीयते
कविरत्त्योनव्वाजसातयेचनोहितᳯ ॥ ७५ ॥ उक्क्थेभिर्व्वृत्रहन्तमायाम
न्दानाचिदागिरा । आङ्गूषैराविवासतᳯ ॥ ७६ ॥ उपनᳯसूनवोगिरᳯ
शृण्ण्वन्त्वमृतस्यये । सुमृडीकाभवन्तुनᳯ ॥ ७७ ॥ ब्रह्माणिमेमत-

१—तम्प्रत्नथा, अयं वेनः ( शु० अ० ७ म० १२, १६ )।

यꣳशꣳसुतासꣳशुष्म्मंऽइयर्त्तिप्रभृतोमेऽअद्रिः । आशासतेप्रतिहर्य्य-
न्त्युक्थेमाहरीव्वहतस्तानोऽअच्छ ॥ ७८ ॥ अनुत्तमातेमघवन्नकिर्न्नु-
नत्वावाँ२ऽअस्तिदेवताव्विदानꣳ । नजायमानोनशतेनजातोयानिक-
रिष्याकृणुहिप्प्रवृद्ध ॥ ७९ ॥ तदिदासभुवनेषुज्ज्येष्ठंय्यतोजज्ञऽउग्र-
स्त्वेषनृम्म्णꣳ । सद्योजज्ञानोनिरिणातिशत्रूननुयंव्विश्श्वेमदन्त्यूमाꣳ
॥ ८० ॥ इमाऽउत्त्वापुरूवसोगिरोव्वर्द्धन्तुयाममं । पावकवर्ण्णाꣳशु-
चयोव्विपश्चितोभिस्तोमैरनूषत ॥ ८१ ॥ यस्यायंव्विश्श्वऽआर्य्यो
दासःशेवधिपाऽअरिः । तिरश्चिदर्य्येरुशमेपवीरवितुभ्भ्येत्सोऽअ-
ज्ज्यतेरयिः ॥ ८२ ॥ अयꣳसहस्रमृषिभिꣳसहस्कृतꣳसमुद्रऽइवप-

ष्प्रथे । स॒त्यःसोऽअस्यमहि॒मागृ॒णेशवो॑य॒ज्ञेषुँव्विप्प्र॒राज्ज्ये॑ ॥ ८३ ॥
अद॑ब्धेभिःसवितःपा॒युभि॒ष्ट्वᳪशि॒वेभि॑र॒द्यपरि॑पाहि॒नोगय॑म् । हिर॑-
ण्ण्यजिह्वःसुवि॒ताय॒नव्य॑से॒रक्षा॒माकि॑र्नोऽअ॒घशᳪसऽईशत ॥८४॥
आनो॑य॒ज्ञन्दि॑वि॒स्पृशं॒व्वायो॑या॒हिसु॒मन्म॑भिः । अ॒न्तःप॒वित्त्रऽउ॒परि॑
श्श्रीणा॒नोयᳪशु॒क्क्रोऽअ॑यामिते ॥ ८५ ॥ इ॒न्द्र॒वायू॒सु॑स॒न्दृशा॑सु॒हवे॒ह-
हवामहे । यथा॒नःसर्व्वऽइज्जनो॑नमी॒वःसङ्गमे॑सु॒मना॒ऽअस॑त् ॥ ८६ ॥
ऋध॑गि॒त्थासमर्त्त्यःशश॒मेदे॒वता॑तये । यो॑नू॒नम्मि॒त्त्रावरु॑णाव॒भिष्ट॑-
यऽआच॒क्क्रेह॒व्व्यदा॑तये ॥ ८७ ॥ आया॑त॒मुप॑भूषत॒म्मद्ध्वःपिबतम-
श्श्विना । दु॒ग्धम्पयो॑व्वृषणाजेन्न्यावसू॒मानो॑मर्द्धिष्ट॒मागतम् ॥ ८८ ॥

प्रैतुब्ब्रह्मणस्प्पतिः प्प्रदेव्व्येतुसूनृता । अच्छाव्वीरन्नर्यम्प्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥ ८९ ॥ चन्द्रमाऽअप्प्स्वन्तरासुपण्णोधावते दिवि । रयिम्पिशङ्गम्बहुलम्पुरुस्पृहं हरिरेतिकनिक्कदत् ॥ ९० ॥ देवन्देवंव्वोवसेदेवन्देवमभिष्टये । देवन्देवं हुवेमव्वाजसातयेगृणन्तोदेव्व्याधिया ॥ ९१ ॥ दिविपृष्ट्टोऽअरोचताग्निर्व्वैश्वानरोबृहन् । क्ष्मयाव्वृधानऽओजसाचनोहितोज्ज्योतिषाबाधतेतमः ॥ ९२ ॥ इन्द्राग्नीऽअपादियम्पूर्व्वागात्पद्वतीब्भ्यः । हित्वीशिरोजिह्व्वया व्वावदच्चरत्त्रिंशत्पदान्न्यक्कमीत् ॥ ९३ ॥ देवासोहिष्म्मामनवेसमन्न्यवोव्विश्श्वेसाकं सरातयः । तेनोऽअद्यतेऽअपरन्तुचेतुनोभ-

वन्तुव्वरिवोविदः ॥ ९४ ॥ अपाधमदभिशस्तीरशस्तिहाथेन्द्रोद्द्यु-
म्न्याभवत् । देवास्तऽइन्द्रसख्याययेमिरेबृहद्भानोमरुद्गण ॥९५॥
प्रवऽइन्द्रायबृहतेमरुतोब्ब्रह्मार्चत । व्वृत्रꣳहनतिव्वृत्रहाशतक्रतु-
र्व्वज्ज्रेणशतपर्व्वणा ॥ ९६ ॥ अस्येदिन्द्रोव्वावृधेव्वृष्ण्यꣳशवोमदे-
सुतस्यव्विष्णवि । अद्यातमस्यमहिमानमायवोनुष्टुवन्तिपूर्व्वथा ।
इमाऽउत्वायस्यायमयꣳसहस्रमूर्द्ध्वऽऊषुणः ॥९७॥ इति संहितायां
त्रयस्त्रिंशोऽध्यायः ।

---

१. इमा उत्वा, यस्यायम्, अयꣳ० सहस्रम् (शु० अ० ३३ मं० ८१-८३)।
२. ऊर्ध्वऽ ऊषुणः ( शु० अ० ११ मं० ४२ )।

# ❀ अथ चतुस्त्रिंशोऽध्यायः ❀

ओ३म् यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति । दूरङ्गमञ्ज्योतिं
षाञ्ज्योतिरेकन्तन्मेमनः शिवसंङ्कल्पमस्तु ॥ १ ॥ येनकर्म्माण्य-
पसोमनीषिणोयज्ञेकृण्वन्तिव्विदथेषुधीराः । यदपूर्व्वंय्यक्षमन्तः प्र-
जानान्तन्मेमनः शिवसंङ्कल्पमस्तु ॥ २ ॥ यत्प्रज्ञानमुतचेतोधृति-
श्चयज्ज्योतिरन्तरमृतम्प्रजासु । यस्मान्नऽऋतेकिञ्चनकर्म्मक्क्रि-
यतेतन्मेमनः शिवसंङ्कल्पमस्तु ॥ ३ ॥ येनेदम्भूतम्भुवनम्भवि-
ष्ष्यत्परिगृहीतममृतेनसर्व्वम् । येनयज्ञस्तायतेसप्तहोतातन्मेमनः

शिवसंङ्कल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः सामयजूंषियस्मिन्प्रति-
ष्ठितारथनाभाविवाराः । यस्मिँश्चित्तं सर्व्वमोतम्प्रजानान्तन्मे
मनः शिवसंङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिवयन्मनुष्यान्ने
नीयतेभीशुभिर्व्वाजिनऽइव । हृत्प्रतिष्ठंयदजिरञ्जविष्ठन्तन्मेम-
नः शिवसंङ्कल्पमस्तु ॥ ६ ॥ पितुन्नुस्तोषम्महोधर्म्माणन्तविषीम् ।
यस्यत्रितोव्व्योजसाव्वृत्रंविपर्व्वमर्दयत् ॥ ७ ॥ अन्विदनुमतेत्वम्म-
न्न्यासैशञ्चनस्कृधि । क्रत्वेदक्षायनोहिनुप्रणऽआयूंषितारिषः
॥ ८ ॥ [ शतम्—१८०० ] अन्नोद्यानुमतिर्य्यज्ञन्देवेषुमन्न्यताम् ।
अग्निश्चहव्व्यवाहनोभवतान्दाशुषेमयः ॥ ९ ॥ सिनीवालिपृथु-

च्छुकेषादेवानामसिस्वसा । जुषस्वहव्यमाहुतम्प्रजान्देविदिदि-
ड्ढिनः ॥ १० ॥ पञ्चनद्युः सरस्वतीमपियन्तिसस्रोतसः । सरस्व-
तीतुपञ्चधासोदेशेभवत्सरित् ॥ ११ ॥ त्वमग्नेप्रथमोऽअङ्गिराऽ-
ऋषिर्देवोदेवानामभवः शिवः सखा । तवव्रतेकवयोव्विद्मनापसो-
जायन्तमरुतोभ्राजदृष्टयः ॥ १२ ॥ त्वन्नोऽअग्नेतवदेवपायुभिर्म्म-
घोनोरक्षतन्वश्चव्वन्द्य । त्रातातोकस्यतनयेगवामस्यनिमेषः रक्ष-
माणस्तवव्रते ॥ १३ ॥ उत्तानायामवभराचिकित्वान्सद्यः प्रवीता
व्वृषणञ्जजान । अरुषस्तूपोरुशदस्यपाजऽइडायास्पुत्रोव्वयुनेजनिष्ट
॥ १४ ॥ इडायास्त्वापदेव्वयन्नाभापृथिव्व्याऽअधि । जातवेदो

निधीमह्यग्नेहव्यायव्वोढवे ॥ १५ ॥ प्रमन्न्महेशवसानायशूषमाङ्गू-
षङ्गिर्व्वणसेऽङ्गिरस्वत् । सुवृक्तिभिस्तुवतऽऋग्मियायार्च्चामार्क-
न्नरेव्विश्श्रुताय ॥ १६ ॥ प्रवोमहेमहिनमोभरद्ध्वमाङ्गूष्यꣳशव-
सानायसाम । येनानःपूर्व्वेपितरःपदज्ञाऽअर्च्चन्तोऽअङ्गिरसोगाऽ-
अविन्दन् ॥ १७ ॥ इच्छन्तित्वासोम्म्यासःसखायःसुन्न्वन्तिसोमन्द-
धतिप्प्रयाꣳसि । तितिक्षन्तेऽअभिशस्तिञ्जनानामिन्द्रत्वदाकश्चन-
हिप्प्रकेतः ॥ १८ ॥ नतेदूरेपरमाचिद्रजाꣳस्यातुप्प्रयाहिहरिवो
हरिब्भ्याम् । स्त्थिरायव्वृष्णेसवनाकृतेमायुक्ताग्ग्रावाणःसमिधाने
ऽअग्नौ ॥ १९ ॥ अषाढंय्युत्सुपृतनासुपप्प्रिꣳस्वर्षामप्प्सांव्वृजनस्य

गोपाम् । भरेषुजाᳬसुक्षितिᳬसुश्रवसञ्जयन्तन्त्वामनुमदेमसोम
॥२०॥ सोमोधेनुᳬसोमोऽअर्व्वन्तमाशुᳬसोमोव्वीरङ्कर्म्मण्यन्ददाति ।
सादन्यंविदत्थ्यᳬसभेयम्पितृश्रवणंय्योददाशदस्मै ॥ २१ ॥ त्वमि-
माऽओषधीᳬसोमव्विश्श्वास्त्वमपोऽअजनयस्त्वङ्गाः । त्वमाततन्थो-
र्व्वन्तरिक्षन्त्वञ्ज्योतिषाव्वितमोव्ववर्त्थ ॥ २२ ॥ देवेनंनोमनसादेव-
सोमरायोभागᳬसहसावन्नभियुद्ध्य । मात्वातनदीशिषेव्वीर्य्यस्यो-
भयेब्भ्यᳬप्रचिकित्सागविष्टौ ॥ २३ ॥ अष्टौव्व्यख्यत्ककुभᳬपृथि-
व्यास्त्रीधन्वयोजनासप्तसिन्धून् । हिरण्ण्याक्षᳬसविता देवऽआगा-
द्धद्रत्नादाशुषेव्वार्य्याणि ॥ २४ ॥ हिरण्ण्यपाणिᳬसविताव्विचर्षं-

णिरुभेद्यावापृथिवीऽअन्तरीयते । अपामीवाम्बाधतेव्वेत्तिसूर्य्यमभि-
कृष्णेनरजसाद्यामृणोति ॥ २५ ॥ हिरण्यहस्तोऽअसुरःसुनीथः
सुमृडीकःस्ववाँयात्वर्वाङ् । अपसेधन्रक्षसोयातुधानानस्थाद्देवः
प्रतिदोषङ्गृणानः ॥ २६ ॥ येतेपन्थाःसवितःपूर्व्यासोरेणवःसुकृता-
ऽअन्तरिक्षे । तेभिर्नोऽअद्यपथिभिःसुगेभीरक्षाचनोऽअधिचब्रूहिदेव
॥ २७ ॥ उभापिबतमश्विनोभानःशर्म्मयच्छतम् । अविद्रियाभि-
रूतिभिः ॥२८॥ अप्नस्वतीमश्विनाव्वाचमस्मेकृतन्नोदस्राव्वृष-
णामनीषाम् । अद्यूत्येवसेनिह्वयेवाँव्वृधेचनोभवतंव्वाजसातौ ॥२९॥
द्युभिरक्तुभिःपरिपातमस्मानरिष्टेभिरश्विनासौभगेभिः । तन्नोमि-

त्रोव्वरुणोमामहन्तामदितिः सिन्धुः पृथिवीऽउतद्यौः ॥ ३० ॥ आ
कृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसविता
रथेनादेवोयातिभुवनानिपश्यन् ॥ ३१ ॥ आरात्त्रिपार्थिवꣳरजः
पितुरप्प्रायिधामभिः । दिवः सदाꣳसिबृहतीव्वितिष्ठसऽआत्वेषंव्व-
र्त्ततेतमः ॥ ३२ ॥ उषस्तच्चित्रमाभरास्मभ्यंव्वाजिनीवति । येन
तोकञ्चतनयञ्चधामहे ॥ ३४ ॥ प्रातरग्निम्प्रातरिन्द्रꣳहवामहेप्प्रातर्म्मित्रा-
त्रावरुणाप्प्रातरश्विना । प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातः सोम-
मुतरुद्रꣳहुवेम ॥ ३३ ॥ प्रातर्ज्जितम्भगमुग्ग्रꣳहुवेमव्वयम्पुत्रमदि-
तेर्य्योविधर्त्ता । आद्ध्रश्चिद्यम्मन्न्यमानस्तुरश्चिद्राजाचिद्यम्भ-

गम्भक्षीत्याह ॥ ३५ ॥ भगप्प्रणेतर्भगसत्यराधोभगेमान्धियमुद-
वाददन्नः । भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तः स्याम
॥ ३६ ॥ उतेदानीम्भगवन्तꣳस्यामोतप्प्रपित्वऽउतमद्ध्येऽअह्नाम् ।
उतोदितामघवन्त्सूर्य्यस्यव्वयन्देवानाꣳसुमतौस्याम ॥३७॥ भगऽएव
भगवाँ२ऽअस्तुदेवास्तेनव्वयम्भगवन्तꣳस्याम । तन्त्वाभगसर्व्वऽइज्जो-
हवीतिसनोभगपुरऽएताभवेह ॥३८॥ समद्ध्वरायोषसोनमन्तदधिक्रा-
वेवशुचयेपदाय । अर्व्वाचीनव्वसुविदम्भगन्नोरथमिवाश्वाव्वाजिनऽ-
आवहन्तु ॥ ३९ ॥ अश्वावतीर्ग्गोमतीर्न्नऽउषासोव्वीरवतीꣳसदमुच्छ-
न्तुभद्राः । घृतन्दुहानाव्विश्वतःप्रपीतायूयपातस्वस्तिभिःस-

दानं ॥ ४० ॥ पूषन्तवंव्व्रतेव्वयन्नरिष्येमकदाचन । स्तोतारस्तऽ
इहस्म्मसि ॥ ४१ ॥ पथस्पथःपरिपतिंव्वचस्याकामेनकृतोऽअब्भ्या-
नडर्कम् । सनोरासच्छुरुधश्चन्द्राग्राधियंन्धियंषीषधातिप्रपूषा
॥ ४२ ॥ त्रीणिपदाव्विचक्रमेव्विष्णुर्ग्गोपाऽअदाभ्यः । अतोधर्म्माणि
धारयन् ॥ ४३ ॥ तद्विप्रासोव्विपन्न्यवोजागृवाꣳसःसमिन्धते ।
व्विष्णोर्य्यत्परमम्पदम् ॥४४॥ घृतवतीभुवनानामभिश्रियोर्व्वीपृथ्वी
मधुदुघेसुपेशसा । द्यावापृथिवीव्वरुणस्यधर्म्मणाव्विष्कभितेअजरेभू-
रिरेतसा ॥ ४५ ॥ येनः सपत्नाऽअपतेभवन्त्विन्द्राग्निभ्यामवबाधाम-
हेतान् । वसवोरुद्द्राऽआदित्याऽउपरिस्पृशम्मोग्ग्रञ्चेत्तारमधिराजम

क्रन् ॥ ४६ ॥ आनासत्यात्रिभिरेकादशैरिहदेवेभिर्यातम्मधुपेयम-
श्विना । प्रायुस्तारिष्टन्नीरपाᳬंसिमृक्षतᳬसेधतन्द्वेषोभवतᳬसचाभु-
वा ॥ ४७ ॥ एषवस्तोमोमरुतऽइयङ्गीर्म्मान्दार्य्यस्यमान्यस्यकारोः[1] ।
एषायासीष्टतन्न्वेव्वयांव्विद्यामेषंव्वृजनञ्जीरदानुम् ॥ ४८ ॥ सह-
स्तोमाᳬसहछन्दसऽआवृतᳬसहप्प्रमाऽऋषयᳬसप्तदैव्याः । पूर्व्वे-
षाम्पन्थामनुदृश्यधीराऽअन्वालेभिरेरथ्योनरश्श्मीन् ॥४९॥ आयु-
ष्ष्यंव्वर्च्चस्यᳬरायस्पोषमौद्भिदम् । इदᳬहिरण्ण्यंव्वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ ५० ॥ नतद्रक्षाᳬसिनापिशाचास्तरन्तिदेवानामो-

१—यस्यातिहाय सहेतिन प्रा० अ० ४—२६ इति सूत्रेण चकारनिषेधात् ।

जं॑ प्रथमजञ्ज्योतत् । सोबिभर्त्तिदाक्षायणः हिर॑ण्ण्यः सदेवेषुकृणु-
तेदीर्ग्घमायुः समनुष्ष्ये षुकृणुतेदीर्ग्घमायुः ॥ ५१ ॥ यदावध्ननन्दा-
क्षायणाहिर॑ण्ण्यः शतानीकायसुमनस्यमानाः । तन्मऽआबध्नामिश-
तशारदायायुष्ष्माञ्जरदष्ट्टिर्य्यथासम् ॥५२॥ उतनोहिर्ब्बुध्न्यः शृणो-
त्वजऽएकपात्पृथिवीसमुद्द्रः । विश्श्वेदेवाऽऋतावृधोहुवानास्तुता-
मन्त्राः कविशस्ताऽअवन्तु ॥ ५३ ॥ इमागिरऽआदित्येभ्योघृतस्नूः
सनाद्द्राजभ्योजुह्वाजुहोमि । शृणोतुमित्त्रोऽअर्य्यमाभगोनस्तुवि-
जातोव्वरुणोदक्षोऽअꣳशः ॥ ५४ ॥ सप्तऽऋषयः प्रतिहिताः शरीरे
सप्तरक्षन्तिसदमप्प्रमादम् । सप्तापः स्वपतोलोकमीयुस्तत्रजागृतोऽ-

ऽअस्वंप्नजौसत्त्रसदौचदेवौ ॥ ५५ ॥ उत्तिष्ठब्ब्रह्मणस्प्पतेदेवयन्तं-
स्त्वेमहे । उपप्प्रयंन्तुमरुतं÷सुदानंवऽइन्द्रंप्प्राशूर्ब्भवासचां ॥ ५६ ॥
प्रनूनम्ब्रह्मंणस्प्पतिर्म्मन्त्रंव्वदत्युक्त्थम् । यस्म्मिन्निन्द्रोव्वरुणोमित्त्रो
ऽअर्य्यमादेवाऽओकांᳬसिचक्रिरे ॥ ५७ ॥ ब्रह्मंणस्प्पतेत्वमस्ययन्-
न्तासूक्तस्यंबोधितनंयञ्चजिन्व । व्विश्श्वन्तद्भद्द्रंय्यदवन्तिदेवावृह-
द्वदेमव्विदथेसुवीराः । यंऽइमाव्विश्श्वाव्विश्श्वकर्म्मयोनं÷पिताऽन्न-
पतेन्नंस्यनोदेहि[2] ॥ ५८ ॥ इति संहितायां चतुस्त्रिंशोऽध्यायः ।

---

१—यऽइमा, व्विश्वकर्म्मा विमनाः, यो नः पिता (शु० अ० १७ मं० १७, २६, २७)। २—अन्नपतेन्नस्य, (अ० ११ मं० ८३)।

# ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

ॐ अपेतोयन्तुपणयोसुम्म्नादेवपीयवं÷ । अस्यलोकऽसुता-
वतं । द्युभिरहोभिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मै ॥ १ ॥
सवितातेशरीरेभ्यः पृथिव्यांल्लोकमिच्छतु । तस्मैयुज्यन्तामुस्रियाः
॥ २ ॥ व्वायुःपुनातुसवितापुनात्वग्नेर्ब्भ्राजसासूर्य्यस्यव्वर्च्चसा ।
विमुच्च्यन्तामुस्रियाः ॥ ३ ॥ अश्वत्थेवोनिषदनम्पर्ण्णेवोव्वसति-

१—'पणयो जहीमोऽम्बिके' ४।७६। पणयः जहीमः अम्बिके एतेभ्य एकारौ-कारेभ्यः परोऽकारोऽभिनिधीयत इति सूत्रार्थः। 'अत्रा जहीमोऽशिवाये' ३५।१०। अम्बेऽअम्बिकेऽम्बालिके २३।१८। इत्यादौ।

ष्कृता । गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ४ ॥ सविताते
शरीराणिमातुरुपस्थऽआवपतु । तस्मैपृथिविशम्भव ॥ ५ ॥ प्रजा-
पतौत्वादेवतायामुपोदकेलोकेनिदधाम्म्यसौ । अपनःशोशुचदघम्
॥ ६ ॥ परम्मृत्योऽअनुपरेहिपन्थांयस्तेऽअन्न्यऽइतरोदेवयानात् ।
चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजाꣳरीरिषोमोतव्वीरान् ॥ ७ ॥
शंव्वातःशꣳहितेघृणिःशन्तेभवन्त्विष्टकाः । शन्तेभवन्त्वग्नयः
पार्थिवासोमात्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्तेदिशस्तुभ्य
मापः शिवतमास्तुभ्यंम्भवन्तुसिन्धवः । अन्तरिक्षꣳशिवन्तु
भ्यङ्कल्पन्तान्तेदिशःसर्व्वाः ॥ ९ ॥ अश्मन्न्वतीरीयतेसꣳरभ-

इर्ध्वमुत्तिष्ठतप्प्रतरतासखायः । अत्राजहीमोशिवायेऽअसञ्छिवा-
न्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघमपकिल्बिषमपकृत्यामपो
रपः । अपामार्गत्वमस्म्मदपदुःष्वप्न्यꣳसुव ॥ ११ ॥ सुमित्त्रिया-
नऽआपओषधयःसन्तुदुर्म्मित्त्रियास्तस्म्मैसन्तुय्योस्म्मान्द्वेष्ट्टियञ्चव-
यन्द्विष्म्मः ॥ १२ ॥ अनड्वाहमन्वारभामहेसौरभेयꣳस्वस्तये ।
सनऽइन्द्रऽइवदेवेभ्योवह्निःसन्तारणोभव ॥ १३ ॥ उद्वयन्तमस-
स्परिस्वःपश्यन्तऽउत्तरम् । देवन्देवत्रासूर्य्यमगन्म्मज्ज्योतिरुत्तम-
म् ॥ १४ ॥ इमञ्जीवेब्भ्यःपरिधिन्दधामिमैषान्नुगादपरोऽअर्त्थमेतम् ।
शतञ्जीवन्तुशरदःपुरूचीरन्तर्म्मृत्युन्दधताम्पर्व्वतेन ॥ १५ ॥ अग्न-

ऽआयूᳪ᳘षिपवस्सऽआसुवोर्ज्जमिषञ्चनः । आरेबाधस्वदुच्छुनाम् ॥१६॥
आयुष्म्मानग्नेहविषाव्वृधानोघृतप्प्रतीकोघृतयोनिरेधि । घृतम्पीत्वा
मधुचारुगव्व्यम्पितेवपुत्रमभिरक्षतादिमान्त्स्वाहा ॥ १७ ॥ परीमेगा-
मनेषतपर्य्यग्निमहृषत । देवेष्ष्वक्रतश्श्रवःकऽइमाँ२आदधर्षति ॥१८॥
क्रव्यादमग्निम्प्रहिणोमिदूरँय्यमराज्ज्यङ्गच्छतुरिप्प्रवाहः । इहैवायमि-
तरोजातवेदादेवेब्भ्योहव्व्यंव्वहतुप्प्रजानन् ॥ १९ ॥ व्वहव्वपाञ्जा-
तवेदःपितृब्भ्योयत्रैनान्वेत्थनिहितान्पराके । मेदसःकुल्ल्याऽउप-
तान्त्स्रवन्तुसत्याऽएषामाशिषःसन्नमन्ताᳪ᳘स्वाहा ॥ २० ॥ स्योना-
नापृथिविनोभवानृक्षरानिवेशनी । यच्छानःशर्म्मसप्प्रथाः । अपनः

शोशुचदघम् ॥ २१ ॥ अस्मात्त्वमधिजातोसित्त्वदयञ्जायता-
म्पुनः । असौस्वर्गायलोकायस्वाहा ॥ २२ ॥ इति संहितायां
पञ्चत्रिंशोऽध्यायः ।

## ❀ अथ षट्त्रिंशोऽध्यायः ❀

ॐऋचंव्वाचम्प्रपद्येमनोयजुःप्रपद्येसामप्प्राणम्प्रपद्येचक्षुःश्श्रोत्र-
म्प्रपद्ये । व्वागोजःसहौजोमयिप्प्राणापानौ ॥ १ ॥ यन्मेछिद्द्र-
ञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्प्पतिर्म्मेतद्दधातु । शन्नोभवतु
भुवनस्ययस्प्पतिः ॥ २ ॥ भूर्ब्भुवःस्वःतत्सवितुर्व्वरेण्यम्भर्गो
देवस्यधीमहि । धियोयोनःप्प्रचोदयात् ॥ ३ ॥ कयानश्चित्त्रऽआ-

भुवदूतीसदावृधःसखा । कया[illegible]ष्ठयाव्वृता ॥ ४ ॥ कस्त्वासत्यो-
मदानाम्मꣳहिष्ठोमत्सदन्धसः । दृढाचिदारुजेव्वसु ॥ ५ ॥ अभी-
षुणःसखीनामविताजरितॄणाम् । शतम्भवास्यूतिभिः ॥ ६ ॥ कया
त्वन्नऽऊत्याभिप्प्रमन्दसेव्वृषन् । कयास्तोतृब्भ्यऽआभर ॥ ७ ॥
इन्द्रोव्विश्श्वस्यराजति । शन्नोऽअस्तुद्द्विपदेशञ्चतुष्प्पदे ॥ ८ ॥
शन्नोमित्रःशंव्वरुणःशन्नोभवत्वर्य्यमा । शन्नऽइन्द्रोबृहस्प्पतिःशन्नो
व्विष्ण्णुरुरुक्रमः ॥ ९ ॥ शन्नोव्वातःपवताᳫंशन्नस्तपतु-
सूर्य्यः । शन्नःकनिक्क्रदद्देवःपर्ज्जन्न्योऽअभिवर्षतु ॥ १० ॥ अहा-
निशम्भवन्तुनःशꣳरात्रीःप्प्रतिधीयताम् । शन्नऽइन्द्राग्नीभवतामवो-

मि॒न्द्रा॑व॒रुणा॑रा॒तह॑व्या । शन्न॑ऽइन्द्रापू॒षणा॒ व्वाज॑सातौ॒शमिन्द्रा॒सोमा॑सुवि॒ताय॒शंय्योः॑ ॥ ११ ॥ शन्नो॑दे॒वीर॒भिष्ट॑य॒ऽआपो॑ भवन्तुपी॒तये॑ । शंय्योर॒भिस्र॑वन्तुनः ॥ १२ ॥ स्यो॒नापृ॑थिविनोभवानृक्ष॒रानि॒वेश॑नी । यच्छा॑नः॒शर्म्म॑स॒प्प्रथाः॑ ॥ १३ ॥ आपो॒हिष्ठाम॑यो॒भुव॒स्तान॑ऽऊ॒र्ज्जेद॑धातन । म॒हेरणा॑य॒चक्ष॑से ॥ १४ ॥ योवः॑शि॒वत॑मो॒रस॒स्तस्य॑भाजयते॒हनः॑ । उ॒श॒तीरि॑वमा॒तरः॑ ॥ १५ ॥ तस्मा॒ऽअर॑ङ्गमामवो॒यस्य॒क्षया॑य॒जिन्व॑थ । आपो॑ज॒नय॑थाचनः ॥ १६ ॥ द्यौः॒शान्ति॑र॒न्तरि॑क्ष॒ꣳशान्तिः॑ पृथि॒वीशान्ति॒राप॒ꣳशान्ति॒रोष॑धय॒ꣳशान्तिः॑ । व्वन॒स्पत॑य॒ꣳशान्ति॒र्व्विश्वे॑दे॒वाः॒शान्ति॒र्ब्रह्म॒शान्ति॒ꣳसर्व्व॑ꣳ

शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७ ॥ दृते दृꣳह मा
मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहञ्चक्षु-
षा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥
दृते दृꣳह मा । ज्योक्ते सन्दृशि जीव्यासञ्ज्योक्ते सन्दृशि जीव्यासम्
॥ १९ ॥ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे । अन्याँस्ते ऽअस्म-
त्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भव ॥ २० ॥ नमस्ते ऽअस्तु
विद्युते नमस्ते स्तनयित्नवे । नमस्ते भगवन्नस्तु यतः स्वः समीहसे
॥ २१ ॥ यतो यतः समीहसे ततो नो ऽअभयङ्कुरु । शन्नः कुरु प्रजाभ्यो
ऽभयन्नः पशुभ्यः ॥ २२ ॥ सुमित्रिया न ऽआप ऽओषधयः सन्तु

दुर्म्मित्त्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्ष्टियञ्चवयन्द्विष्ष्मः ॥ २३ ॥
तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् । पश्येमशरदः शतञ्जीवेमशरदः शतꣳशृणुयामशरदः शतम्प्रब्ब्रवामशरदः शतमदीनाः स्यामशरदः शतम्भूयश्चशरदः शतात् ॥ २४ ॥

इति संहितायां षट्त्रिंशोऽध्यायः ।

---

१. 'तकारवर्गश्चकारवर्गे चकारवर्गम्' (४।९५) तकारवर्गः पदान्तोयः चकारवर्गे प्रत्यये परे चकारवर्गमापद्यते । एवम्—'आराच्चिद्द्वेषः २०।५२। आच्छच्छन्दः १५।५।३, उज्जिहानाः १५।५। इत्यादौ । 'झकारादि ञकारादि च पदानामुदाहरणं संहितायां न विद्यते ।

# ❀ अथ सप्तत्रिंशोऽध्यायः ❀

ओ३म् देवस्यत्त्वासवितुः प्प्रसवेशिवनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ।
आददेनारिरसि ॥ १ ॥ युञ्जतेमनऽउतयुञ्जतेधियोव्विप्प्राव्विप्प्रस्य
बृहतोव्विपश्चितः । व्विहोत्राद्धेव्वयुनाविदेकऽइन्महीदेवस्यस-
वितुःपरिष्टुतिः ॥ २ ॥ देवीद्यावापृथिवीमखस्यवामद्यशिरोराद्ध्यास-
न्देवयजनेपृथिव्व्याः । मखायत्वामखस्यत्वाशीर्ष्णे ॥ ३ ॥ देव्व्योव्व-
म्म्योभूतस्यप्प्रथमजामखस्यवोद्यशिरोराद्ध्यासन्देवयजनेपृथिव्व्याः ।
मखायत्वामखस्यत्वाशीर्ष्णे ॥४॥ [शतम् १९००] इयत्यग्ग्रऽआसी-
न्मखस्यतेद्यशिरोराद्ध्यासन्देवयजनेपृथिव्व्याः । मखायत्वामखस्य

त्वाशीर्ष्णे ॥ ५ ॥ इन्द्रस्यौजस्स्थमखस्यंवोद्यशिरोराद्ध्यासन्देवयजं-
नेपृथिव्व्याः । मखायंत्वामखस्यंत्वाशीर्ष्णे । मखायंत्वामखस्यंत्वा
शीर्ष्णे । मखायंत्वामखस्यंत्वाशीर्ष्णे ॥ ६ ॥ प्रैतुब्ब्रह्मणस्प्पतिःप्प्र-
देव्व्येतुसूनृता । अच्छाव्वीरन्नर्य्यम्पङ्क्तिराधसन्देवायज्ञन्नंयन्तुनः ।
मखायंत्वामखस्यंत्वाशीर्ष्णे । मखायंत्वामखस्यंत्वाशीर्ष्णे । मखा-
यंत्वामखस्यंत्वाशीर्ष्णे ॥ ७ ॥ मखस्यशिरोसि मखायंत्वामखस्यंत्वा
शीर्ष्णे । मखस्यशिरोसि । मखायंत्वामखस्यंत्वाशीर्ष्णे । मखस्यशि-
रोसि । मखायंत्वामखस्यंत्वाशीर्ष्णे । मखायंत्वामखस्यंत्वाशीर्ष्णे ।
मखायंत्वामखस्यंत्वाशीर्ष्णे । मखायंत्वामखस्यंत्वाशीर्ष्णे ॥ ८ ॥

अश्वस्यत्वावृष्ण्णः शक्नाधूपयामिदेवयजनेपृथिव्याः । मखायत्वा मखस्यत्वाशीर्ष्णे । अश्वस्यत्वावृष्ण्णः शक्नाधूपयामिदेवयजने पृथिव्याः । मखायत्वामखस्यत्वाशीर्ष्णे । अश्वस्यत्वावृष्ण्णः शक्नाधूपयामिदेवयजनेपृथिव्याः । मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वा- मखस्यत्वाशीर्ष्णे ॥९॥ ऋजवेत्वासाधवेत्वासुक्षित्यैत्वा । मखायत्वा मखस्यत्वाशीर्ष्णे । मखायत्वामखस्यत्वाशीर्ष्णे । मखायत्वामखस्य त्वाशीर्ष्णे ॥१०॥ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे । देवस्त्वास वितामध्वानक्तुपृथिव्याः सःस्पृशस्पाहि । अर्चिरसिशोचिर

सितपोसि ॥ ११ ॥ अनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुम्मेंदाः पुत्रवं-
तीदक्षिणतऽइन्द्रस्याधिपत्येप्प्रजाम्मेंदाः । सुखदापश्श्चाद्देवस्यंसवितु-
राधिपत्येचक्षुर्म्मेंदाऽआश्श्रुतिरुत्तरतोधातुराधिपत्येरायस्पोषंम्मेदाः ।
व्विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओजोमेदाव्विश्श्वाब्भ्योमाना
ष्ट्राब्भ्यंस्प्पाहिमनोरश्श्वासि ॥ १२ ॥ स्वाहामरुद्भिःपरिश्श्रीय-
स्वदिवःसंस्पृशंस्प्पाहि । मधुमधुमधु ॥ १३ ॥ गर्ब्भोदेवानाम्पि-
तामतीनाम्पतिं÷प्प्रजानाम् । सन्देवोदेवेनंसव्वित्राागतसः सूर्य्येणरो-
चते ॥ १४ ॥ समग्निरग्निनागतसन्दैवेनसवित्त्रासः सूर्य्येणारोचिष्ट ।
स्वाहासमग्निस्तपंसागतसन्दैव्व्येनसवित्त्रासंसूर्य्येणारूरुचत ॥१५॥

धर्त्तादिवोव्विभातितपंसस्पृथिव्व्यान्धर्त्तादेवोदेवानाममर्त्यस्तपोजाः ।
व्वा चमस्म्मेनियच्छदेवायुवम् ॥ १६ ॥ अपश्यङ्गोपामनिपद्यमानमा
चपराचपथिभिश्चरन्तम् । ससद्ध्रीचीःसव्विषूचीर्व्वसानऽआवरी-
वर्तिभुवनेष्वन्तः ॥ १७ ॥ व्विश्श्वासाम्भुवाम्पतेव्विश्श्वस्यमनस-
स्प्पतेव्विश्श्वस्यव्वचसस्प्पतेसर्व्वस्यव्वचसस्प्पते । देवश्श्रुत्वन्देवघ-
र्म्मदेवोदेवान्पाह्यत्रप्प्रावीरनुवान्देववीतये । मधुमाद्ध्वीब्भ्याम्मधु-
माधूचीब्भ्याम् ॥१८॥ हृदेत्वामनसेत्वादिवेत्वासूर्य्यायत्वा । ऊर्द्ध्वो
ऽअद्ध्वरन्दिविदेवेषुधेहि ॥ १९ ॥ पितानोसिपितानोबोधिनमस्तेऽअ-
स्तुमामाहिंसीः । त्वष्टृमन्तस्त्वासपेमपुत्रान्पशून्मयिधेहिप्प्रजा-

मस्म्मासुधेह्यरिष्ट्वाहᳪ सहपत्याभूयासम् ॥ २० ॥ अर्हः केतुनाजुषताᳪ सुज्ज्योतिज्ज्योतिषास्वाहा । रात्रिः केतुनाजुषताᳪ सुज्ज्योतिज्ज्योतिषास्वाहा ॥ २१ ॥

इति संहितायां सप्तत्रिंशोऽध्यायः ।

## ❀ अथ अष्टात्रिंशोऽध्यायः ❀

ॐ देवस्यत्वासवितुःप्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्यांपूष्णोहस्ताब्भ्याम् । आदुदेदित्यैरास्स्नासि ॥ १ ॥ इडऽएह्यदितऽएहि सरस्वत्येहि । असा[1]

---

1. 'असौ च शाकटायनः' (शु० य० प्रा० अ० ४ सू० १२७) असावित्येतस्य पदस्य असस्थाने प्रत्यये मकारो न लुप्यते शाकटायनमतेन ।

वेह्यसावेह्यसावेहि ॥ २ ॥ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ।
पूषासिघर्म्मायदीष्व ॥ ३ ॥ अश्विभ्याम्पिन्वस्वसरस्वत्यैपिन्व-
स्वेन्द्रायपिन्वस्व । स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ ४ ॥
यस्ते स्तनःशशयोयोमयोभूर्य्योरत्नधाव्वसुविद्यःसुदत्रः ।
येनव्विश्वापुष्य्यसिव्वार्य्याणिसरस्वतितमिहधातवेकः । उर्व्व-
न्तरिक्षमन्वेमि ॥ ५ ॥ गायत्रञ्छन्दोऽसित्रैष्टुभञ्छन्दोऽसि
द्यावापृथिवीभ्यान्त्वापरिगृह्णाम्म्यन्तरिक्षेणोपयच्छामि । इन्द्रा-
श्विनामधुनःसारघस्यघर्म्मम्पातव्वसवोयजतव्वाट् । स्वाहासूर्य्य
स्यरश्मयेव्वृष्टिवनये ॥ ६ ॥ समुद्रायत्वाव्वातायस्वाहासरिराय

त्वाव्वातायस्वाहा । अनाधृष्ष्यायत्वाव्वातायस्वाहाप्प्रतिधृष्ष्याय
त्वाव्वातायस्वाहा । अवस्यवेत्वाव्वातायस्वाहाशिमिदायत्वाव्वा-
तायस्वाहा ॥ ७ ॥ इन्द्रायत्वाव्वसुमतेरुद्रवतेस्वाहेन्द्रायत्वादित्य-
वतेस्वाहेन्द्रायत्वाभिमातिघ्नेस्वाहा । सवित्रेत्वऽऋभुमतेव्विभु-
मतेव्वाजवतेस्वाहाबृहस्पतयेत्वाव्विश्श्वदेव्यावतेस्वाहा ॥ ८ ॥
यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा । स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे
॥ ९ ॥ व्विश्श्वाऽआशादक्षिणसद्विश्श्वान्देवानयाडिह । स्वाहा
कृतस्यघर्म्मस्यमधोःपिबतमश्श्विना ॥१०॥ दिविधाऽइमंय्यज्ञमिमंय्य-
ज्ञन्दिविधाः । स्वाहाग्नयेयज्ञियायशंय्यजुर्भ्यः ॥११॥ अश्श्विनाघर्म्मं-

म्पातꣳहार्द्दांनमहर्द्दिवाभिरूतिभिः । तन्त्रायिणेनमोद्यावापृथिवी
भ्याम् ॥१२॥ अपातामश्विनाघर्म्ममनुद्यावापृथिवीऽअमꣳसाताम्।
इहैवरातयः सन्तु ॥१३॥ इषेपिन्वस्वोर्ज्जेपिन्वस्वब्ब्रह्मणेपिन्वस्व
क्षत्त्रायपिन्वस्वद्यावापृथिवीब्भ्यांपिन्वस्व । धर्म्मासिसुधर्म्मामेन्न्य-
स्म्मेनृम्णानिधारयब्ब्रह्मधारयक्षत्त्रन्धारयव्विशन्धारय ॥१४॥ स्वाहा-
पूष्णेशरसेस्वाहाग्ग्रावब्भ्यःꣳस्वाहाप्प्रतिरवेब्भ्यः । स्वाहापितृब्भ्यऽऊ-
र्ध्ध्वबर्हिब्भ्योघर्म्मपावब्भ्यःꣳस्वाहाद्यावापृथिवीब्भ्याꣳस्वाहाव्विश्श्वे-
ब्भ्योदेवेब्भ्यः ॥ १५ ॥ स्वाहारुद्द्रायरुद्द्रहूतयेस्वाहासञ्ज्योति-
षाज्ज्योतिः । अहः केतुनाजुषताꣳसुज्ज्योतिज्ज्योतिषास्वाहा ।

त्वाव्वातायस्वाहा । अनाधृष्ष्यायत्वाव्वातायस्वाहाप्प्रतिधृष्ष्याय
त्वाव्वातायस्वाहा । अवस्यवेत्वाव्वातायस्वाहाशिमिदायत्वाव्वा
तायस्वाहा ॥ ७ ॥ इन्द्रायत्वाव्वसुमतेरुद्द्रवतेस्वाहेन्द्रायत्वादित्य
वतेस्वाहेन्द्रायत्वाभिमातिग्घ्नेस्वाहा । सवित्रेत्वऽऋभुमतेव्विभु
मतेव्वाजवतेस्वाहाबृहस्प्पतयेत्वाव्विश्श्वदेव्व्यावतेस्वाहा ॥ ८ ॥
यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा । स्वाहाघर्म्मायस्वाहाघर्म्मःपित्त्रे
॥ ९ ॥ व्विश्श्वाऽआशादक्षिणसद्द्विश्श्वान्देवानयाडिह । स्वाहा
कृतस्यघर्म्मस्यमधोःपिबतमश्श्विना ॥१०॥ दिविधाऽइमंय्यज्ञमिमंय्य-
ज्ञन्दिविधाः । स्वाहाग्नयेय्यज्ञियायशंय्यजुर्भ्यः ॥११॥ अश्श्विनाघर्म्म-

ग्पातꣳ हार्द्दानमहंर्द्दिवाभिरूतिभिः । तन्त्रायिणेनमोद्द्यावापृथिवी
भ्याम् ॥१२॥ अपातामश्विनाघर्म्ममनुद्द्यावापृथिवीऽअंमꣳसाताम्।
इहैवरातयः सन्तु ॥१३॥ इषेपिन्न्वस्वोर्ज्जेपिन्न्वस्वब्ब्रह्मणेपिन्न्वस्व
क्षत्रायपिन्न्वस्वद्द्यावापृथिवीब्भ्यांपिन्न्वस्व । धर्म्मासिसुधर्म्मामेन्न्य-
स्म्मेनृम्णानिधारयब्ब्रह्मंधारयक्षत्रन्धारयव्विशन्धारय ॥१४॥ स्वाहा-
पूष्णेशरसेस्वाहाग्ग्रावब्भ्यꣳस्वाहाप्प्रतिरवेब्भ्यः । स्वाहापितृब्भ्यऽऊ-
र्द्ध्वबर्हिब्भ्योघर्म्मपावब्भ्यꣳस्वाहाद्द्यावापृथिवीब्भ्याꣳस्वाहाव्विश्वे-
ब्भ्योदेवेब्भ्यः ॥ १५ ॥ स्वाहारुद्द्रायरुद्द्रहूतयेस्वाहासञ्ज्योति-
षाज्ज्योतिः । अहः केतुनाजुषताꣳसुज्ज्योतिज्ज्योतिषास्वाहा ।

रात्रि॑÷केतु॒नाञ्जु॑षता॒ᳪ᳭सु॒ज्ज्योति॒र्ज्ज्योति॑षा॒स्वाहा॑ । मधु॑हु॒तमिन्द्र॑-
तमेऽअ॒ग्नाव॒श्याम॑तेदेवघर्म्म॒नम॑स्तेऽअस्तु॒मामा॑हिᳪ᳭सीः ॥ १६ ॥
अ॒भी॒मम्म॑हि॒मादि॒वं॒व्विप्रो॑बभूवस॒प्रथाः॑ । उ॒तश्श्रव॑सापृथि॒वीᳪ᳭सᳪ᳭-
सी॑दस्वम॒हाँ२ऽअ॑सि॒रोच॑स्वदे॒ववी॑तमः । व्विधू॒मम॑ग्नेऽअरु॒षम्मि॑येद्ध्य-
सृ॒जप्र॑शस्तद॒र्श॒तम् ॥ १७ ॥ यातै॑घर्म्म॒दि॒व्व्याशुग्ग्याग्गा॒य॒त्र्याᳪ᳭ह॑-
वि॒र्द्धानें॑ । सात॒ऽआप्प्या॑यता॒न्निष्ट्या॑यता॒न्तस्यै॑ते॒स्वाहा॑ । यातै॑घ-
र्म्मा॒न्तरि॑क्षे॒शुग्ग्या॒त्रि॒ष्टुब्भ्याग्नी॑ध्रे । सात॒ऽआप्प्या॑यता॒न्निष्ट्या॑यता-
न्तस्यै॑ते॒स्वाहा॑ । याते॑घर्म्म॑पृथि॒व्व्याᳪ᳭शुग्ग्याजग॑त्याᳪ᳭सद॒स्या॒ ।
सात॒ऽआप्प्या॑यता॒न्निष्ट्या॒यसा॒न्तस्यै॑ते॒स्वाहा॑ ॥ १८ ॥ क्ष॒त्रस्य॑त्वा

परस्पायब्ब्रह्मणस्तन्न्वम्पाहि । व्विशस्त्वाधर्म्मणाव्वयमनुक्रामा-
मसुवितायनव्यसे ॥ १९ ॥ चतुःस्रक्तिर्न्नाभिर्ऋतस्यसप्प्रथाः
सनोव्विश्श्वायुःसप्प्रथाःसनःसर्व्वायुःसप्प्रथाः । अपद्द्वे-
षोऽअपह्व्वरोन्न्यव्व्रतस्यसश्चिम ॥ २० ॥ घर्म्मैतत्तेपुरीषन्तेनव्वर्द्ध-
स्वचाचप्प्यायस्व । व्वर्द्धिषीमहिचव्वयमाचप्प्यासिषीमहि ॥ २१ ॥
अचिक्रदद्वृषाहरिर्म्महान्मित्त्रोनदर्शतः । सꣳसूर्य्येणदिद्युतदुदधि-
र्न्निधिः ॥ २२ ॥ सुमित्त्रियानऽआपऽओषधयःसन्तुदुर्म्मित्त्रियास्त-
स्म्मैसन्तुयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्म्मः ॥ २३ ॥ उद्वयन्तमस-
स्प्परिस्वःपश्यन्तऽउत्तरम् । देवन्देवत्राासूर्य्यमगन्न्मज्ज्योतिरुत्त-

मम् ॥ २४ ॥ एधोस्येधिषीमहिसमिदसितेजोसितेजोमयिधेहि ॥२५॥
यावतीद्यावापृथिवीयावच्चसप्तसिन्धवोव्वितस्थिरे । तावन्तमिन्द्र-
तेग्ग्रहमूर्ज्जागृह्णाम्म्यक्षितम्मयिगृह्णाम्म्यक्षितम् ॥ २६ ॥ मयित्यदि-
न्द्रियम्बृहन्न्मयिदक्षोमयिक्क्रतुः । घर्म्मस्त्रिशुग्ग्विराजतिव्विराजाज्ज्यो-
तिषासहब्ब्रह्मणातेजसासह ॥ २७ ॥ पयसोरेतऽआभृतन्तस्य
दोहमशीमह्युत्तरामुत्तराᳫंसमाम् । त्विषः संव्वृक्क्त्वेदक्षस्यतेसुषु-
म्म्णस्यतेसुषुम्म्णाग्निहुतः । इन्द्रपीतस्यप्प्रजापतिभक्षितस्यमधुमतऽ-
उपहूतऽउपहूतस्यभक्षयामि ॥ २८ ॥

इति संहितायां अष्टत्रिंशोऽध्यायः ।

# ❀ अथ एकोनचत्वारिंशत्तमोऽध्यायः ❀

ॐ स्वाहाप्प्राणेब्भ्यः᳘साधिपतिकेब्भ्यः᳘। पृथिव्यैस्वाहाग्नयेस्वाहा-
न्तरिक्षायस्वाहाव्वायवेस्वाहा । दिवेस्वाहासूर्य्यायस्वाहा ॥ १ ॥
दिग्भ्यः स्वाहाचन्द्रायस्वाहानक्षत्त्रेब्भ्यः᳘स्वाहाद्भ्यः स्वाहाव्वरुणाय
स्वाहा । नाब्भ्यैस्वाहापूतायस्वाहा ॥ २ ॥ व्वाचेस्वाहाप्प्राणाय
स्वाहाप्प्राणायस्वाहा । चक्षुषेस्वाहाचक्षुषेस्वाहाश्श्रोत्त्रायस्वाहा
श्श्रोत्त्रायस्वाहा ॥ ३ ॥ मनसः᳘काममाकूतिंव्वाचः सत्यमशीय । पशू-
नाᳬरूपमन्नस्यरसोयशः᳘श्रीः श्श्रयताम्मयिस्वाहा ॥ ४ ॥ प्रजापतिः᳘

सम्म्रियमाणꣳसम्म्राट्सम्भृतोव्वैश्श्वदेवः॑संꣳसन्नोघर्म्मः॑प्रवृक्तस्ते-
जऽउद्यतऽआश्श्विनः॑पयस्यानीयमानेपौष्ष्णोव्विष्ष्यन्दमानेमारुतः॑क्क्लथन् । मैत्रः॑शरसिसन्ताय्यमानेव्वायव्व्योह्रियमाणऽआग्नेयोहूयमानो
व्वाग्घुतः॑ ॥ ५ ॥ सविताप्प्रथमेहन्नग्निर्द्वितीयेव्वायुस्तृतीयऽआदि-
त्यश्चतुर्त्थेचन्द्रमाꣳपञ्चमऽऋतुः॑षष्ठेमरुतꣳसप्तमेबृहस्पतिरष्ट्टमे ।
मित्रोनवमेव्वरुणोदशमऽइन्द्रऽएकादशेव्विश्श्वेदेवाद्द्वादशे ॥ ६ ॥
उग्ग्रश्श्चभीमश्श्चद्ध्वान्तश्श्चधुनिश्श्च । सासह्वाँश्श्चाभियुग्ग्वाचव्वि-
क्षिपꣳस्वाहा ॥ ७ ॥ अग्निꣳहृदयेनाशनिꣳहृदयाग्ग्रेणपशुपतिङ्कृ-

त्स्नह्रदयेनभवंय्यक्ना । शर्व्वम्मतस्नाभ्यामीशानम्मन्युनामहादेव-
मन्तःपर्शव्येनोग्ग्रन्देवंव्वनिष्टुनाव्वसिष्ठहनुःशिङ्गीनिकोश्याभ्याम्
॥ ८ ॥ उग्ग्रंल्लोहितेनमित्रᳬसौव्व्रत्येनरुद्रन्दौर्व्वत्येनेन्द्रम्प्रक्क्रीडेन
मरुतोबलेनसाद्ध्यान्प्रमुदा । भवस्यकण्ठ्यᳬरुद्रस्यान्तःपश्र्व्य-
म्महादेवस्ययक्कृच्छर्व्वस्यव्वनिष्ठुःपशुपतेःपुरीतत् ॥ ९ ॥ लोमभ्यः
स्वाहालोमभ्यः स्वाहात्वचेस्वाहात्वचेस्वाहालोहितायस्वाहालोहिताय
स्वाहामेदोभ्यःस्वाहामेदोभ्यःस्वाहा । माᳬसेभ्यःस्वाहा
माᳬसेभ्यःस्वाहास्नावभ्यःस्वाहास्नावभ्यःस्वाहास्थभ्यःस्वा-

ह्रास्त्थब्भ्यः स्वाहा मज्जब्भ्यः स्वाहा मज्जब्भ्यः स्वाहा । रेतसे स्वाहा
पायवे स्वाहा ॥ १० ॥ आयासाय स्वाहा प्प्रायासाय स्वाहा संय्यासाय
स्वाहा व्वियासाय स्वाहोद्यासाय स्वाहा । शुचे स्वाहा शोचते स्वाहा
शोचमानाय स्वाहा शोकाय स्वाहा ॥ ११ ॥ तपसे स्वाहा तप्प्यते स्वाहा
तप्प्यमानाय स्वाहा तप्ताय स्वाहा घर्म्माय स्वाहा । निष्कृत्यै स्वाहा
प्प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा ॥१२॥ यमाय स्वाहान्तकाय स्वाहा
मृत्यवे स्वाहा । ब्ब्रह्मणे स्वाहा ब्ब्रह्महत्यायै स्वाहा विश्श्वेब्भ्यो देवेब्भ्यः
स्वाहा द्यावापृथिवीब्भ्याᳫं स्वाहा ॥ १३ ॥

इति संहितायामेकोन-चत्वारिंशत्तमोऽध्यायः ।

# अथ चत्वारिंशत्तमोऽध्यायः

ॐ ईशावास्यमिदꣳसर्वं॒यत्किञ्च॒जग॑त्यां॒जग॑त् । तेन॑त्य॒क्तेन
भुञ्जीथा॒मागृ॑ध॒ःकस्य॑स्वि॒द्धन॑म् ॥ १ ॥ कु॒र्वन्ने॒वेह॒कर्म्मा॑णिजिजीवि॒-
षेच्छ॒तꣳसमा॑ः । ए॒वन्त्वयि॒नान्यथे॒तो॑स्ति॒नकर्म्म॑लिप्प्यते॒नरे॑ ॥ २ ॥
अ॒सु॒र्य्या॒नाम॒तेलो॒काऽअ॒न्धेन॒तम॒सावृ॑ताः । तांस्तेप्रेत्यापि॑गच्छन्ति॒
येकेचा॑त्म॒हनो॒जना॑ः ॥ ३ ॥ अने॑ज॒देकं॒मन॑सो॒जवी॑यो॒नैन॑द्दे॒वाऽआ॑-
प्नुव॒न्पूर्व्व॒मर्श॑त् । तद्धाव॑तो॒न्यानत्ये॑ति॒तिष्ठ॒त्तस्मि॑न्न॒पोमा॑तरिश्वा॑
दधाति ॥ ४ ॥ तदे॑जति॒तन्नैज॑ति॒तद्दू॒रेतद्व॑न्ति॒के । तद॒न्तर॑स्य॒सर्व्व॑स्य॒

तदुसर्व्वस्यास्यबाह्यतः ॥ ५ ॥ यस्तुसर्व्वाणिभूतान्यात्मन्नेवानुप-
श्यंति । सर्वभूतेषुचात्मानन्ततोनव्विचिकित्सति ॥ ६ ॥ यस्मिम्-
न्त्सर्व्वाणिभूतान्यात्मैवाभूद्विजानतः । तत्रकोमोहःकःशोकऽएक-
त्वमनुपश्यतः ॥ ७ ॥ सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्ध-
मपापविद्धम् । कविर्म्मनीषीपरिभूःस्वयम्भूर्य्याथातत्थ्यतोर्थान्व्य-
दधाच्छाश्वतीब्भ्यःसमाब्भ्यः ॥ ८ ॥ अन्धन्तमःप्रविशन्तियेसम्भू-
तिमुपासते । ततोभूयऽइवतेतमोयऽउसम्भूत्याꣳरताः ॥९॥ अन्न्य
देवाहुःसम्भवादन्यदाहुरसम्भवात् । इतिशुश्रुमधीराणांय्येनस्त
द्विचचक्षिरे ॥ १० ॥ सम्भूतिञ्चविनाशञ्चयस्तद्वेदोभयꣳसह ।

व्विनाशेनमृत्युन्तीर्त्वासम्भूत्यामृतमश्नुते ॥ ११ ॥ अन्धन्तमᳫंप्र-
विशन्तियेविद्यामुपासते । ततोभूयऽइवतेतमोयऽउविद्यायाᳫंर-
ताः ॥ १२ ॥ अन्यदेवाहुर्व्विद्यायाऽअन्यदाहुरविद्यायाः । इति
शुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १३ ॥ व्विद्याञ्चाविद्याञ्च
यस्तद्वेदोभयᳫंसह । अविद्ययामृत्युन्तीर्त्वाव्विद्ययामृतमश्नुते
॥ १४ ॥ व्वायुरनिलममृतमथेदम्भस्मान्तᳫंशरीरम् ॥ ॐ ३ क्रतो-
स्मर । क्लिबेस्मर । कृतᳫंस्मर ॥ १५ ॥ अग्नेनयसुपथारायेऽअस्मा-
न्विश्वानिदेवव्वयुनानिव्विद्वान् । युयोध्यस्मज्जुहुराणमेनोभूयि-
ष्ठान्तेनमऽउक्तिंव्विधेम ॥ १६ ॥ हिरण्मयेनपात्रेणसत्यस्यापिहित-

म्मुखम् । य़ोसावादित्येपुरुषः सोसावहम् ॥१७॥ ॐ३खम्ब्रह्म ॥१८॥

इति संहितायां चत्वारिंशत्तमोऽध्यायः ।



---

१. 'तस्मिँल्लृहलजिह्वामूलीयोपद्ध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् । लृकारो दीर्घः प्लुतश्चोक्तवर्जम् । ढकारष्टवर्गीयोळकारश्च तत्प्रकृती ह्लकारौ क इति जिह्वामूलीयः प इत्युपध्मानीयः हुम् इति नासिक्यः एते वर्णा न सन्ति माध्यन्दिनानाम् । लृकारो दीर्घः लाजीञ्छाचीनित्यमादयो ये पठितास्तान्प्लुतान् वर्जयित्वा अन्ये प्लुता न सन्ति माध्यन्दिनानाम् । ( शु० य० प्रा० सू० २९, ३० ) ।

॥ अथाष्टौ विकृतीनां स्वरूपकथनम् ॥ कास्ताः ॥ जटा-
मालादण्डरेखारथध्वजशिखाघनाः ॥ क्रममाश्रित्य निर्वृत्ता
विकारा अष्टविश्रुताः ॥ १ ॥ विश्रुताः ॥ जटा माला शिखा
रेखा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रम-
पूर्वा महर्षिभिः ॥ २ ॥ द्विपदादिक्रमाः पञ्च प्रक्रमाद्युत्क्रमा
स्ततः ॥ पुनः क्रमादुद्यादिता जटात्वं प्रापिता बुधैः ॥ ३ ॥
वैदिकैः पठ्यमानत्वात्प्रत्यक्षस्मृतिमलतः ॥ जटाद्यध्ययनं
कार्यं पङ्क्तिपावनकारणात् ॥ ४ ॥ जटादिविकृतीनां ये
पारायणपरा नराः ॥ महात्मानो द्विजाः श्रेष्ठाः ते ज्ञेयाः
पङ्क्तिपावनाः ॥ ५ ॥ इति वाराहपुराणे ॥ मार्कण्डेये च ॥
क्रमाध्ययनसम्पन्नो मन्त्रब्राह्मणपारगः ॥ जटापारायणपरो
विष्णुलोके महीयते ॥ ६ ॥ जटापाठपरं विप्रं यो गर्हयति
मूढधीः ॥ पुनरावृत्तिसहितं तमः प्राप्नोति नान्यथा ॥ ७ ॥
वृद्धमनुः ॥ वेदवेदार्थतत्त्वज्ञा जटाक्रमविशारदाः ॥ श्रोत्रिया

ब्राह्मणाः श्राद्धे ये नराः पङ्क्तिपावनाः ॥ ८ ॥ पराशरः ॥
संहितावित्स्वर्गगामी पदवेदी महर्गतिः ॥ क्रमी जनतपः
सप्तगामी वैकुण्ठभोग्जटी ॥ ९ ॥ यथा ॥ अथ जटा ॥
त्र्यम्बकँय्यजामहेयजामहेत्र्यम्बकंत्र्यम्बकँय्यजामहे । त्र्य
म्बकमिति त्रिऽअम्बकम् । यजामहेसुगन्धिꣳसुगन्धिँय्यजा
महेयजामहेसुगन्धिम् । सुगन्धिम्पुष्टिवर्द्धनम्पुष्टिवर्द्धनꣳसुग
न्धिꣳसुगन्धिम्पुष्टिवर्द्धनम् । सुगन्धिमिति सुऽगन्धिम् । पुष्टि
वर्द्धनमिति पुष्टिऽवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनाद्बन्धना
दुर्व्वारुकमिवोर्व्वारुकमिवबन्धनात् । उर्व्वारुकमिवेत्त्युर्व्वारुकम्
ऽइव । बन्धनान्मृत्त्योर्म्मृत्त्योर्बन्धनाद्बन्धनान्मृत्त्योः ।
मृत्त्योर्म्मुक्क्षीयमुक्क्षीयमृत्त्योर्म्मृत्त्योर्मुक्क्षीय । मुक्क्षीयमा
मामामुक्क्षीयमुक्क्षीयमा । मामृतादमृतान्मामामृतात् ।
अमृतादित्त्यमृतात् ॥ पतिवेदनमितऽइतः पतिवेदनम्पतिवे
दनमितः । पतिवेदनमितिपतिऽवेदनम् । इतोमुक्क्षीयमु

क्षीयेब्रऽहुतोसुंक्षीय। मुक्षीयुमामामुंक्षीयमुक्षीयुमा।
मामुतोमुतोमामामुतं÷। अमुतऽइत्त्यमुतं÷ ॥१॥ (जटा॥)
पुनंस्त्वात्त्वापुनः पुनंस्त्वा। पुनरितिपुनं÷। त्वादित्त्याऽ
आदित्त्यारुस्त्वात्त्वादित्त्याः। आदित्त्यारुद्रारुद्राऽआदि
त्त्याऽआदित्त्यारुद्राः॥ रुद्राव्वसंवोव्वसंवोरुद्रारुद्राव्वसंवः।
व्वसंवःसंव्वसंवोव्वसंवःसम्। समिन्धतामिन्धताꣳसं
समिन्धताम्। इन्धताम्पुनःपुनरिन्धतामिन्धताम्पुनं÷।
शु. य. संहिता. पुनंर्ब्रह्माणौब्रह्माणःपुनःपुनंर्ब्रह्माणं÷। ब्रह्माणौव्वसुनीथव्व अष्ट. विकृतयः
॥१५०॥ सुनीथब्रह्माणौब्रह्माणौव्वसुनीथ। व्वसुनीथयुज्ज्ञैर्य्युज्ज्ञैर्व्वसुनी
थव्वसुनीथयुज्ज्ञैः। व्वसुनीथेतिवसुऽनीथ। युज्ज्ञैरितियुज्ज्ञैः॥
घृतेनत्त्वंत्वङ्घृतेनंघृतेनत्त्वम्। त्वन्तन्वन्तन्वन्त्वन्त्वन्तन्वम्।
तन्वंव्वर्द्धयस्वव्वर्द्धयस्वतन्वन्तन्वंव्वर्द्धयस्व। व्वर्द्धयस्वसत्त्याः
सत्त्याव्वर्द्धयस्वव्वर्द्धयस्वसत्त्याः। सत्त्याःसंन्तुसन्तुसत्त्याः ॥ ४ ॥
सत्त्याःसंन्तु। सन्तुयजंमानस्ययजंमानस्यसन्तुसन्तुयजंमा

नस्य । यजंमानस्युकामाृकामायजंमानस्युयजंमानस्युका
मां । कामाऽइतिकामाः ॥ २ ॥ सनोंनुःससनं÷ । नुःपि
तेवपितेवनोनःपितेव । पितेवसूनवेंसूनवेंपितेवपितेवसूनवे ।
पितेवेतिपिताऽइंव। सूनवेग्नेग्नेंसूनवेंसूनवेग्ने। अग्नेंसूपायनश्
सूपायनोग्नेग्नेंसूपायनश् । सुपायनोभवभवसूपायनश्सूपाय
नोभंव । सुपायनऽइतिसूऽउपायनश् । भवेतिभव ॥ सचंस्वा
नोनुःसचंस्वसचंस्वानः । नुःस्वस्तयेंस्वस्तयेनोनःस्वस्तये ।
स्वस्तयऽइतिस्वस्तयें ॥ ३ ॥ अथ क्रममाला निरूप्यन्ते ॥



ब्रूयात्क्रमविपर्यासानर्धर्चस्यादितोऽन्ततः । अन्तश्चादि नये-
देवं क्रममालेति गीयते ॥ १ ॥ क्रमविपर्यासान् ॥ क्रमक्रम-
व्युत्क्रमाभ्यामर्धर्चस्यादितः अन्ततो व्युत्क्रमोपक्रममिति
विशेषः ॥ ब्रूयात् ॥ एवं क्रमविपर्यासाभ्यां क्रमं ब्रुवन् पुमान्
आदित आदित आरभ्य क्रमं समानं समाप्तिं नयेत् ॥ ॥ ५ ॥
अन्तमन्तत आरब्धं क्रमं आदितः समाप्तिं नयेत् ॥ प्रापये-

दित्यर्थः ॥ यथा ॥ ॐ ॥ यज्ञेनयज्ञम् । आसन्नित्या
सन् । यज्ञमयजन्त । आसन्प्रथमानि । अयजन्तदेवाः ।
प्रथमानिधर्म्माणि । देवास्तानि । धर्म्माणितानि । तानि
धर्म्माणि । तानिदेवाः । धर्म्माणिप्रथमानि । देवाऽअय
जन्त । प्रथमान्यासन् । अयजन्तयज्ञम् । आसन्नित्त्यासन् ।
यज्ञँयज्ञेन ॥ तेह । देवाऽइतिदेवाः । हनाकम् । देवाः
 सन्ति । नाकम्महिमानः । सन्तिसाद्ध्याः । महिमानः
 सचन्त । साद्ध्याःपूर्वे । सचन्तयत्र । पूर्वेयत्र । यत्रपूर्वे । 
 यत्रसचन्त । पूर्वेसाद्ध्याः । सचन्तमहिमानः । साद्ध्याः
सन्ति । महिमानोनाकम् । सन्तिदेवाः । नाकँह । देवाऽ
इतिदेवाः । हते ॥ १ ॥ मालामालेवपुष्पाणां पदानां ग्रथिनी
हि सा ॥ आवर्त्तते त्रयस्तस्यां क्रमव्युत्क्रमसंक्रमाः ॥ १ ॥
यथा ॥ अथपुष्पमालाविकृतिः ॥ परीत्त्यभुतानि । भुतानि 
परीत्त्य । परीत्त्यभुतानि । परीत्त्येतिपरीऽइत्त्य । भुतानि

परीत्त्यं । परीत्त्यंभूतानि । भूतानिंपरीत्त्यं । परीत्त्यंलोकान् ।
लोकान्परीत्त्यं । परीत्त्यंलोकान् । परीत्त्येतिंपरीऽइत्त्यं ।
लोकान्परीत्त्यं । परीत्त्यंलोकान् । लोकान्परीत्त्यं । परीत्त्य
सर्व्वाः । सर्व्वाःपरीत्त्यं । परीत्त्यसर्व्वाः । परीत्त्येतिंपरीऽ
इत्त्यं । सर्व्वाःप्प्रदिशः । प्रदिशःसर्व्वाः । सर्व्वाःप्प्रदिशः ।
प्रदिशोदिशः । दिशःप्प्रदिशः । प्रदिशोदिशः । प्रदि
शऽइतिंप्प्रदिशः । दिशंश्च । चदिशःदिशंश्च । चेतिंच ॥

शु. य. संहिता. ॥१५३॥ उपस्त्थायंप्प्रथमजाम् । प्रथमजामुपस्त्थायं । उपस्त्थायं अष्ट-विकृतय
प्प्रथमजाम् । उपस्त्थायेत्त्युपऽस्थायं । प्रथमजामृतस्यं ।
ऋतस्यंप्प्रथमजाम् । प्रथमजामृतस्यं । प्रथमजामितिंप्प्रथमऽ
जाम् । ऋतस्यात्क्मनां । आत्क्मनंऽऋतस्यं । ऋतस्या
त्क्मनां । आत्क्मनात्क्मानंम् । आत्क्मानंमात्क्मनां ।
आत्क्मनात्क्मानंम् । आत्क्मानंमभि । अभ्यात्क्मानंम् । ॥ ७
आत्क्मानंमभि । अभिसम् । समभि । अभिसम् । संव्वि

वेश । विवेशसम् । संविवेश । विवेशेतिविवेश ॥ १ ॥
परिद्यावापृथिवी । द्यावापृथिवीपरि । परिद्यावापृथिवी ।
द्यावापृथिवीसद्यः । सद्योद्यावापृथिवी । द्यावापृथिवीसद्यः ।
द्यावापृथिवीऽइतिद्यावापृथिवी । सद्यऽइत्त्वा । इत्त्वासद्यः ।
सद्यऽइत्त्वा । इत्त्वापरि । परीत्त्वा । इत्त्वापरि । परिलो
कान् । लोकान्परि । परिलोकान् । लोकान्परि । परिलो
कान् । लोकान्परि । परिदिशः । दिशःपरि । परिदिशः ।
दिशःपरि । परिदिशः । दिशःपरि । परिस्वः । स्वःपरि ।
परिस्वः । स्वरितिस्वः ॥ ऋतस्यतन्तुम् । तन्तुमृतस्य ।
ऋतस्यतन्तुम् । तन्तुंवितंतम् । वितंतन्तन्तुम् । तन्तुंवितंतम् ।
वितंतंविचृत्त्यं । विचृत्त्यवितंतम् । वितंतंविचृत्त्यं । वितंत
मितिवीऽतंतम् । विचृत्त्यतत् । तद्विचृत्त्यं । विचृत्त्यतत् ।
विचृत्त्येतिवीऽचृत्त्यं । तदंपश्श्यत् । अपश्श्यत्तत् । तदंप
श्श्यत् । अपश्श्यत्तत् । तदंपश्श्यत् । अपश्श्यत्तत् । तदं

भवत् । अभवुत्तत् । तदंभवत् । अभवुत्तत् । तदंभवत् । अभवुत्तत् । तदासीत् । आसीुत्तत् । तदासीत् । आसीुदि त्त्यासीत् ॥ २ ॥ इति पुष्पमालाविकृतिः ॥

॥ अथ पञ्चसंधीविकृतिमन्त्रः ॥

ॐ वण्महान् । महान्महान् । महान्वट् । बट्वट् । वण्महान् । महाँ२ऽअसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ ऽअसि । असिसूर्य्य । सूर्य्यसूर्य्य । सूर्य्यासि । अस्यसि । असि सूर्य्य । सूर्य्यवट् । बट्बट् । बट्सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यवट् । बडादित्त्य । आदित्त्यादित्त्य । आदित्त्यबट् । वट्वट् । वडा दित्त्य । आदित्त्यमहान् । महान्महान् । महानादित्त्य । आदित्त्यादित्त्य । आदित्त्यमहान् । महाँ२ऽअसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ऽअसि । असीत्त्यसि ॥ महस्त्ते । तेते । तेमहः । महोमहः । महस्त्ते । तेसतः । ॥ १९ ॥ सुतःसुतः । सुतस्त्ते । तेते । तेसुतः । सुतोमहिमा । महिमा

शु. य. संहिता. ॥१५५॥

अष्ट-विकृतयः

महिमा । महिमासुतः । सुतःसुतः । सुतोमहिमा । महि
मापनस्यते । पनस्यतेपनस्यते । पनस्यतेमहिमा । महिमा
महिमा । महिमापनस्यते । पनस्युतेद्धा । अद्धाद्धा । अद्धा
पनस्यते । पनस्यतेपनस्यते । पनस्यतेद्धा । अद्धादेव । देव
देव । देवाद्धा । अद्धाद्धा । अद्धादेव । देवमहान् । महान्म
हान् । महान्देव । देवदेव । देवमहान् । महाँ२ऽअसि ।
अस्यसि । असिमहान् । महान्महान् । महाँ२ऽअसि ।
असीत्यसि ॥ १ ॥ बट्सूर्य । सूर्यसूर्य । सूर्यबट् ।
बट्बट् । बट्सूर्य । सूर्यश्रवसा । श्रवसाश्रवसा । श्रवसा
सूर्य । सूर्यसूर्य । सूर्यश्रवसा । श्रवसामहान् । महान्म
हान् । महाञ्छ्रवसा । श्रवसाश्रवसा । श्रवसामहान् । महाँ
२ऽअसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ऽ
असि । असिसत्रा । सत्रासत्रा । सत्रासि । अस्यसि । असि
सत्रा । सत्रादेव । देवदेव । देवसत्रा । सत्रासत्रा । सत्रादेव ।

शु. य. संहिता. ॥१५६॥

अष्ट· विकृतयः

॥ १० ॥

देवमहान् । महान्महान् । महान्देव । देवदेव । देवमहान् ।
महाँ२ऽअसि । अस्यसि । असिमहान् । महान्महान् । महाँ
२ऽअसि । असीत्त्यसि ॥ मन्हादेवानान् । देवानान्देवाना
म् । देवानान्मह्ना । मह्नामह्ना । मह्नादेवानाम् । देवाना
मसुर्य्यः । असुर्य्योसुर्य्यः । असुर्य्योदेवानाम् । देवानान्दे
वानाम् । देवानामसुर्य्यः । असुर्य्यःपुरोहितः । पुरोहितः
पुरोहितः । पुरोहितोसुर्य्यः । असुर्य्योसुर्य्यः । असुर्य्यः
पुरोहितः । पुरोहितोव्विभु । व्विभुव्विभु । व्विभुपुरोहितः ।
पुरोहितःपुरोहितः । पुरोहितोव्विभु । पुरोहितऽइतिपुरः
हितः । व्विभुज्ज्योतिः । ज्योतिज्ज्योतिः । ज्योतिर्व्विभु ।
व्विभुव्विभु । व्विभुज्ज्योतिः । व्विभ्भ्वितिविभू । ज्योतिरदा
भ्यम् । अदाभ्यमदाभ्यम् । अदाभ्यञ्ज्योतिः । ज्योति
ज्ज्योतिः । ज्योतिरदाभ्यम् । अदाभ्यमित्त्यदाभ्यम् ॥ २ ॥ ॥११॥
अथ शिखा ॥ पदोत्तरां शिखामेव जटायामः प्रचक्षते ॥

सं. ११
शु. य. संहिता.
॥१५८॥

आर्याः पदोत्तरसंक्रमा जटां शिखां प्रवदन्ति ॥ यथा ॥
श्रीश्चचश्रीश्श्रीश्चंते। चतेतेचचतेलक्ष्मीश्। तेलक्ष्मीर्लक्ष्मींस्त्तें
तेलक्ष्मीश्च। लक्ष्मीश्चंचलक्ष्मीर्लक्ष्मीश्चपत्न्यौ। चपत्न्यौप
त्न्यौचचपत्न्न्यावहोरात्रे। पत्न्यावहोरात्रेऽअहोरात्रेपत्न्यौ
पत्न्यावहोरात्रेपार्श्वे। अहोरात्रेपार्श्वेपार्श्वेऽअहोरात्रेऽपार्श्वेन
क्षत्राणि। अहोरात्रेऽइत्त्यहोरात्रे। पार्श्वेनक्षत्राणिनक्ष
त्राणिपार्श्वेपार्श्वेनक्षत्राणिरूपम्। पार्श्वेऽइतिपार्श्वे। नक्ष
त्राणिरूपꣳरूपन्नक्षत्राणिनक्षत्राणिरूपमश्विनौ। रूपम
श्विनावश्विनौरूपꣳरूपमश्विनौव्यात्त्तम्। अश्विनौव्यात्त्तं
व्यात्त्तमश्विनावश्विनौव्यात्त्तम्। व्यात्त्तमितिविऽआत्त्तम् ॥
इष्णन्निषाणेपाणेष्णन्निष्णन्निषाणामुम्। इषाणामुमम
मिषाणेपाणामुम्मे। अमुम्मेमेमुममुम्मंऽइषाण। मऽइषाणे
षाणमेमऽइषाणसर्व्वलोकम्। इषाणसर्व्वलोकꣳसर्व्वलोकमि ॥ १२ ॥
षाणेषाणसर्व्वलोकम्मे। सर्व्वलोकम्मेमेसर्व्वलोकꣳसर्व्वलोकम्मं

अष्ट-विकृतयः

ऽइषाण । सर्वंल्लोकमितिसर्वंऽल्लोकम् । मइषाणेषाणमेमंऽइ
षाण । इषाणेतीषाण ॥ १ ॥ धातारातीरातिर्धाताधातारा
तिःसविता । रातिःसवितासवितारातीरातिः सवितेदम् । स
वितेदमिदꣳसवितासवितेदञ्जुषन्ताम् । इदञ्जुषन्ताञ्जुषन्ता
मिदमिदञ्जुषन्ताम्प्रजापतिः । जुषन्ताम्प्रजापतिःप्रजापति
ञ्जुषन्ताञ्जुषन्ताम्प्रजापतिर्निधिपाः । प्रजापतिर्निधिपानिधि
पाःप्रजापतिःप्रजापतिर्निधिपादेवः । प्रजापतिरितिप्रजाऽ
पतिः । निधिपादेवोदेवोनिधिपादेवोऽअग्निः । निधिपाऽ

इतिनिधिऽपाः । देवोऽअग्निरग्निर्देवोदेवोऽअग्निः । अग्निरि
त्यग्निः ॥ त्वष्टाविष्णुर्विष्णुस्त्वष्टात्वष्टाविष्णुः प्रजया ।
विष्णुः प्रजयाप्रजयाविष्णुर्विष्णुः प्रजयासꣳरराणाः ।
प्रजयासꣳरराणाःसꣳरराणाःप्रजयाप्रजयासꣳरराणायज
मानाय । प्रजयेतिप्रऽजया । सꣳरराणायजमानायजमा ॥ १३
नायसꣳरराणाःसꣳरराणायजमानायद्रविणम् । सꣳरराणा

ऽइतिंसम्ऽरराणाः॥ यजंमानायुद्रविंणन्द्रविंणुञ्यजंमानायुय
जंमानायुद्रविंणन्दधात। द्रविंणन्दधातदधातुद्रविंणन्द्रविंण
न्दधातुस्वाहां। दुधातुस्वाहुास्वाहांदधातदधातुस्वाहां। स्वाहे
तिुस्वाहां॥ २॥ अथ रेखा॥ क्रमाद्धित्रिचतुःपञ्चपदक्रममु
दाहरेत्। पृथक् पृथक् विपर्यस्य रेखामाहुः पुनः क्रमात्
॥ १॥ क्रमात्॥ अनुःक्रमात॥ द्वित्रीचतुःपञ्चपदः क्रमम्
प्रत्येकं प्रत्येकं विपर्यस्य क्रमादुदाहरेत्॥ एवमुक्त्वा विकृ-
शु. य. संहिता. तिन्नाम रेखां प्रचक्षते॥ महान्त आहुरित्यर्थः॥ यथा॥ अष्ट-विकृतयः
॥२६०॥ ॐ बृहंस्पतेपरिं। परिंबृहंस्पते। बृहंस्पतेपरिं। परिंदीया
रथेंन। रथेंनदीयुपरिं। परिंदीय। दीयारथेंन। रथेंनरक्षोहा
मित्राँ२ऽअपुबाधंमानः। अपुबाधंमानोमित्राँन्रक्षोहारथेंन।
रथेंनरक्षोहा। रक्षोहामित्राँन्। रक्षोहेतिरक्षःऽहा।
अमित्राँ२ऽअपुबाधंमानः। अपुबाधंमानुऽइत्यंपुऽबाधंमा ॥ १४ ॥
नः॥ प्रभुञ्जन्त्सेनाःप्रमृणोयुधाजयंन्। जयंन्युधाप्रमृणः

सेनाꣳप्रभुञ्जन् । प्रभुञ्जन्निति॑प्रऽभुञ्जन् । सेनाꣳप्रमृणः ।
प्रमृणोयुधा । प्रमृणऽइतिप्रऽमृणः । युधाजयन् । जयन्नु
स्म्माकमेद्ध्यवितारथानाम् । रथानामवितैद्ध्युस्म्माकञ्ज
यन् । जयन्नुस्म्माकम् । अस्म्माकमेधि । एद्ध्यविता । अविता
रथानाम् । रथानामितिरथानाम् ॥ १ ॥ इति रेखाविकृतिः ॥
अथ ध्वजः ॥ भूयादादेः क्रमं सम्यग्गन्तादुच्चारयेदिति । वर्गे
वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः ॥ वर्गे वा ऋचि
शु. य. संहिता. वास्यादिः ॥ आदित आरभ्य सम्यक् क्रमं ब्रूयात् ॥ अन्ता- अष्टविकृतयः
॥५६१॥ दयं क्रममारभ्य सम्यगुत्तारयेत् ॥ एकमेकं पूर्वं पूर्वं पदं
अन्तोपान्त्यादिक्रमपूर्वं अनुक्रमेणावार्पयदित्यर्थः ॥ इति
ये सादितं स्यात् ॥ स ध्वज इत्यर्थः ॥ यथा ॥ ॐ बृह
स्पपतेपरि । रथानामितिरथानाम् । परिदीय । अवितारथा
नाम् । दीयपरि । एद्ध्यविता । रथेनरक्षोहा । अस्म्माकं ॥ १५ ॥
मेधि । रक्षोहामित्रान् । जयन्नुस्म्माकम् । रक्षोहेतिरक्षः

ऽहा। सुधाजयन्। अमित्राँ२ऽअपबाधमानः। प्रमृणोसुधा।
प्रभुञ्जन्त्सेनाः। सेनाःप्प्रमृणः। प्रभुञ्जन्नितिप्प्रऽभुञ्जन्।
सेनाःप्प्रमृणः। प्रभुञ्जन्त्सेनाःप्प्रमृणोसुधा। अपबाधमान्
ऽइत्त्यपऽबाधमानः। प्रमृणऽइतिप्प्रऽमृणः। अमित्राँ२ऽ
अपबाधमानः। सुधाजयन्। रक्षोहेतिरक्षःऽहा।
जयन्नस्म्माकम्। रक्षोहामित्रान्। अस्म्माकमेधि।
रथैनरक्षोहा। एदध्यविता। दीयारथेन। अवितारथा
नाम्। परिदीय। रथानामितिरथानाम्। बृहस्प्पते
परि ॥ १ ॥ इति ध्वजाविकृतिः ॥ अथ दंडः ॥ क्रममुक्त्वा
विपर्यस्य पुनश्च क्रममुत्तरम् ॥ अर्धर्चादेवमुक्त्वोक्तः क्रमद-
ण्डोऽभिधीयते॥ १ ॥ पुनश्च पुनरपि आदित आरभ्य क्रम-
मुच्चरेत् ॥ एवं पूर्वार्धर्चक्रमसम्बन्धत्वेनोत्तरार्द्धर्चं क्रममु-
क्त्वा ॥ पूर्वार्धं चादिपदपर्यन्तं विपर्यासेन संहितामुक्त्वा ॥
पुनस्ततऽआरभ्योत्तरार्धर्चस्थपर्यन्तं किंकसोवाश्च एवेत्यन्तो

नेत्याह ॥ अर्धर्चादिति अर्धर्चपरिसमाप्तिपर्यन्तं एवायं नि-
यमः ॥ तस्योक्ता उच्चारेण दण्डो नाम विकृतिविशेषोऽभिधी-
यते॥ यथा॥ ॐताऽउभौ। उभौतौ। ताऽउभौ। उभौचतुरं÷।
चतुरंऽउभौतौ। ताऽउभौ। उभौचतुरं÷। चतुरं÷पदः।
पदश्चतुरंऽउभौतौ। ताऽउभौ। उभौचतुरं÷। चतुरं÷पदः।
पदश्सुम्प्रसारयाव। सुम्प्रसारयावपदश्चतुरंऽउभौतौ। ताऽ
उभौ। उभौचतुरं÷। चतुरं÷पदः। पदश्सुम्प्रसारयाव।
सुम्प्रसारयावस्वुर्ग्गौ। स्वुर्ग्गौसुम्प्रसारयावपदश्चतुरंऽउभौतौ।
ताऽउभौ। उभौचतुरं÷। चतुरं÷पदः। पदश्सुम्प्रसारयाव।
सुम्प्रसारयावस्वुर्ग्गौ। सुम्प्रसारयावेतिसम्ऽप्रसारयाव। स्वुर्ग्गौ
लोके। लोकेस्वुर्ग्गौसुम्प्रसारयावपदश्चतुरंऽउभौतौ। ताऽउभौ।
उभौचतुरं÷। चतुरं÷पदः। पदःसुम्प्रसारयाव। सुम्प्रसार
यावस्वुर्ग्गौ। सुम्प्रसारयावेतिसम्ऽप्रसारयाव। स्वुर्ग्गौलोके। ॥१७॥
स्वुर्ग्गौऽइतिस्वुःऽगे। लोकेप्प्र। प्रलोकेस्वुर्ग्गौसुम्प्रसारयावपद

श्चतुरंऽउभौतौ । ताउभौ । उभौचतुरः । चतुरःपदः ।
पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्ग्गे । सम्प्रसारयावेतिस
म्ऽप्रसारयाव । स्वर्ग्गेलोके । स्वर्ग्गऽइतिस्वःऽगे । लोकेप्प्र ।
प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथाम्प्रलोकेस्वर्ग्गेसम्प्रसारयावपदश्च
तुरंऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदः
सम्प्रसारयाव । सम्प्रसारयावस्वर्ग्गे । सम्प्रसारयावेतिसम्ऽ
प्रसारयाव । स्वर्ग्गेलोके । स्वर्ग्गऽइतिस्वःऽगे । लोकेप्प्र ।
प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषोर्ण्णुवाथाम्प्रलोकेस्वर्ग्गे
सम्प्रसारयावपदश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरः ।
चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्ग्गे ।
सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्ग्गेलोके । स्वर्ग्गऽ
इतिस्वःऽगे । लोकेप्प्र । प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा ।
वृषांव्वाजी । व्वाजीवृषोर्ण्णुवाथाम्प्रलोकेस्वर्ग्गेसम्प्रसारयाव ॥ १८ ॥
पदश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः ।

पुदश्सुम्प्रसारयाव । सुम्प्रसारयावस्वुर्ग्गे । सुम्प्रसारयावेतिसम्ऽ
प्रसारयाव । स्वुर्ग्गेलोके । स्वर्ग्गऽइतिस्वुःऽगे । लोकेप्प्र ।
प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषांव्वाजी । व्वाजीरेतो
धाः । रेतोधाव्वाजीवृषोर्ण्णुवाथाम्प्रलोकेस्वुर्ग्गेसुम्प्रसारयावपु
दश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ । चतुरं÷पुदः ।
पुदश्सुम्प्रसारयाव । सुम्प्रसारयावस्वुर्ग्गे । सुम्प्रसारयावेतिसु
म्ऽप्रसारयाव । स्वुर्ग्गेलोके । स्वर्ग्गऽइतिस्वुःऽगे । लोकेप्प्र ।
शु. य. संहिता. प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषांव्वाजी । व्वाजीरेतोधाः । अष्ट-विकृतयः
॥१९५॥ रेतोधारेत÷ । रेतोरेतोधाव्वाजीवृषोर्ण्णुवाथाम्प्रलोकेस्वुर्ग्गेसुम्प्र
सारयावपुदश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ । ३८
चतुरं÷पुदः । पुदश्सुम्प्रसारयाव । सुम्प्रसारयावस्वुर्ग्गे ।
सुम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वुर्ग्गेलोके । स्वर्ग्गऽइति
स्वुःऽगे । लोकेप्प्र । प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषा ॥१९॥
व्वाजी । व्वाजीरेतोधाः । रेतोधारेत÷ । रेतोधाऽइतिरेतुःऽ

धाः । रेतोदधातु । दधातुरेतोरेतोधाव्वाजीवृषोर्ण्णुवाथाम्प्र
लोकेस्वर्ग्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौ
चतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयाव
स्वर्ग्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्ग्गेलोके ।
स्वर्ग्गऽइतिस्वःऽगे । लोकेप्प्र । प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथां
वृषा । वृषाव्वाजी । व्वाजीरेतोधाः । रेतोधारेतः । रेतोधाऽइति
रेतःऽधाः । रेतोदधातु । दधात्वितिदधातु ॥ १ ॥ इति दण्डक्रमः ।

शु. य. संहिता. अथ क्रमरथः ॥ पादशोर्धर्चशो वापि सहोक्त्वा दण्डवद्रथः ॥ अष्टः विकृतयः
॥१९९॥ ऋचोर्धर्चयोः पदयोर्दण्डवत्संहितापदक्रमैः ॥ १ ॥ सहो
क्त्वा रथो विहितो भवतीत्यर्थः ॥ सहोक्तिरेव रथ इति
यावत् ॥ यथा ॥ चतुष्पाद्रथः ॥ ॐ स्वस्तिनः । स्वस्ति
नः । स्वस्तिनः । स्वस्तिनः । नःस्वस्ति । नः
स्वस्ति । नःस्वस्ति । नःस्वस्ति । स्वस्तिनः । स्वस्तिनः । ॥ २०॥
स्वस्तिनः । स्वस्तिनः । नऽइन्द्रः । नःपूषा । नस्ता

क्ष्यं÷ । नोबृहुस्प्पतिं÷ । इन्द्रोनःस्वुस्त्ति । पुषानं÷ स्वुस्त्ति । ताक्ष्योंनःस्वुस्त्ति । बृहुस्प्पतिर्नःस्वुस्त्ति । स्वुस्त्ति नं÷ । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । नुऽइन्द्रं÷ । नुःपुषा । नुस्त्ताक्ष्यं÷ । नोबृहुस्प्पतिं÷ । इन्द्रोवृद्ध श्श्रंवाः । पुषाव्विश्श्ववेंदाः । ताक्ष्योंऽअरिंष्टनेमिः । बृहु स्प्पतिर्द्दधातु । वृद्धश्श्रंवाऽइन्द्रोनःस्वुस्त्ति । व्विश्श्ववेंदाःपुषा नं÷स्वुस्त्ति । अरिंष्टनेमिुस्त्ताक्ष्योंनःस्वुस्त्ति । दुधातुबृहु स्प्पतिर्नःस्वुस्त्ति । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । नुऽइन्द्रं÷ । नुःपुषा । नुस्त्ताक्ष्यं÷ । नोबृहु स्प्पतिं÷ । इन्द्रोवृद्धश्श्रंवाः । पुषाव्विश्श्ववेंदाः । ताक्ष्योंऽ अरिंष्टनेमिः । बृहुस्प्पतिर्द्दधातु । वृद्धश्श्रंवाऽइतिवृद्धऽश्रंवाः । व्विश्श्ववेंदाऽइतिव्विश्श्वऽवेंदाः । अरिंष्टनेमिरित्त्यरिंष्टऽनेमिः । दुधात्त्वितिदधातु ॥ १ ॥ इति चतुष्पाद्रथः ॥ ॥







## ॥ अथ द्विपाद्रथः ॥

ॐ अनिंशितोसि । अनिंशितासि । अस्यनिंशितः ।
अस्यनिंशिता । अनिंशितोसि । अनिंशितासि । अनिंशि
तऽइत्त्यनिंशितः । अनिंशितेत्त्यनिंऽशिता । असिसपत्क्न
क्षित् । असिसपत्क्नक्षित् । सपत्क्नक्षिदुस्यनिंशितः ।
सपत्क्नक्षिदुस्यनिंशिता । अनिंशितोसि । अनिंशितासि ।
अनिंशितइत्त्यनिंऽशितः । अनिंशितेत्त्यनिंऽशिता । असि
सपत्क्नक्षित् । असिसपत्क्नाक्षित् । सपत्क्नक्षिद्वाजिनंम् ।
सपत्क्नक्षिद्वाजिनींम् । वाजिनःसपत्क्नक्षिदुस्यनिंशितः ।
वाजिनींःसपत्क्नक्षिदुस्यनिंशिता । अनिंशितोसि । अनि
शितासि । अनिंशितऽइत्त्यनिंऽशितः । अनिंशितेत्त्यनिंऽ
शिता । असिसपत्क्नक्षित् । असिसपत्क्नक्षित् । सप
त्क्नक्षिद्वाजिनंम् । सपत्क्नक्षिद्वाजिनींम् । सपत्क्नक्षि
दितिंसपत्क्नऽक्षित् । सपत्क्नक्षिदितिंसपत्क्नऽक्षित् ।

व्वाजिनन्त्वा । व्वाजिनीन्त्वा । त्वाव्वाजिनꣳसपत्क्नक्षिदुस्य
निंशितꣳ। त्वाव्वाजिनीꣳसपत्क्नक्षिदुस्यनिंशिता । अनिंशि
तोसि। अनिंशितासि। अनिंशितऽइत्त्यनिंऽशितꣳ । अनिंशि
तेत्त्यनिंऽशिता । असिसपत्क्नक्षित्। असिसपत्क्नक्षित्।
सपत्क्नक्षिद्वाजिनम् । सपत्क्नक्षिद्वाजिनीम् । सपत्क्न
क्षिदितिंसपत्क्नऽक्षित्। सपत्क्नक्षिदितिंसपत्क्नऽक्षित्।
व्वाजिनन्त्वा । व्वाजिनीन्त्वा । त्वाव्वाजेद्धयायै । त्वाव्वाजे
द्धयायै। व्वाजेद्धयायैत्त्वाव्वाजिनꣳसपत्क्नक्षिदुस्यनिंशितꣳ।
व्वाजेद्धयायैत्त्वाव्वाजिनीꣳसपत्क्नक्षिदुस्यनिंशिता । अनिं
शितोसि। अनिंशितासि। अनिंशितऽइत्त्यनिंऽशितꣳ। अनिं
शितेत्त्यनीऽशिता। असिसपत्क्नक्षित्। असिसपत्क्नक्षित्।
सपत्क्नक्षिद्वाजिनम्। सपत्क्नक्षिद्वाजिनीम्। सपत्क्नक्षि
दितिंसपत्क्नऽक्षित्। सपत्क्नक्षिदितिंसपत्क्नऽक्षित्। व्वा ॥ २३।
जिनन्त्वा। व्वाजिनीन्त्वा। त्वाव्वाजेद्धयायै। त्वाव्वाजेद्धयायै।

व्वाजेद्ध्यायैसम् । व्वाजेद्ध्यायैसम् । संव्वाजेद्ध्यौयत्त्वाव्वाजि
नंᳪसपत्क्नक्क्षिदुस्यनिंशितः । संव्वाजेद्ध्यायैत्त्वाव्वाजिनींᳪ
सपत्क्नक्क्षिदुस्यनिंशिता । अनिंशितोसि । अनिंशितासि ।
अनिंशितऽइत्त्यनिंऽशितः । अनिंशितेत्त्यनींऽशिता । असि
सपत्क्नक्क्षित् । असिसपत्क्नक्क्षित् । सपत्क्नक्क्षिद्वाजि
नंम् । सपत्क्नक्क्षिद्वाजिनींम् । सपत्क्नक्क्षिदितिसपत्क्नऽ
 क्क्षित् । सपत्क्नक्क्षिदितिसपत्क्नऽक्क्षित् । व्वाजिनंन्त्वा ।
 व्वाजिनींन्त्वा । त्वाव्वाजेद्ध्यायै । त्वाव्वाजेद्ध्यायै । व्वाजे 
 द्ध्यायैसम् । व्वाजेद्ध्यायैसम् । व्वाजेद्ध्यायाऽइतिव्वाजऽद्धु
द्ध्यायै । व्वाजेद्ध्यायाऽइतिव्वाजऽद्धुद्ध्यायैसम्मार्ज्जिम । सम्मा
र्ज्जिम । मार्ज्जिमसंव्वाजेद्ध्यायैत्त्वाव्वाजिनंᳪसपत्क्नक्क्षिदुस्य
निंशितः । मार्ज्जिमसंव्वाजेद्ध्यायैत्त्वाव्वाजिनींᳪसपत्क्नक्क्षि
दुस्यनिंशिता । अनिंशितोसि । अनिंशितासि । अनिंशितऽ 
इत्त्यनिंशितः । अनिंशितेत्त्यनींऽशिता । असिसपत्क्न

क्षित् । अुसिसपत्क्नुक्षित् । सपुत्क्नुक्षिद्वाजिनम् । सपु
त्क्नुक्षिद्वाजिनीम् । सपुत्क्नुक्षिदितिसपत्क्नुऽक्षित् ।
सपुत्क्नुक्षिदितिसपत्क्नुऽक्षित् । व्वाजिनन्त्वा । व्वाजि
नीन्त्वा । त्वाव्वाजेद्ध्यायै । त्वाव्वाजेद्ध्यायै । व्वाजेद्ध्यायै
सम् । व्वाजेद्ध्यायैसम् । व्वाजेद्ध्यायाऽइतिव्वाजऽइद्ध्यायै ।
व्वाजेद्ध्यायाऽइतिव्वाजऽइद्ध्यायै । सम्मार्ज्मि । सम्मा
र्ज्मि । मार्ज्मीतिमार्ज्मि । मार्ज्मीतिमार्ज्मि ॥ २ ॥ इति

शु. य. संहिता. ॥१७२॥ द्विपादूक्रमरथः ॥ ॥ अथ घनः ॥ शिखा जटा घनः प्रोक्ता इत्यष्टौ विकृतीः पठेत् ॥ अथ द्वितीयः प्रकारो घनः ॥ अष्ट-विकृतयः

अन्तक्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् । आदिक्रमं नयेदन्तं
घनमाहुर्मनीषिणः ॥ यथा ॥ हरिः ॐ ॥ गुणानान्त्वात्त्वागुणा
नाङ्गुणानान्त्वागुणपतिङ्गुणपतिन्त्वागुणानाङ्गुणानान्त्वागुण
पतिम् ॥ त्वागुणपतिङ्गुणपतिन्त्वात्त्वागुणपतिᳬहवामहेहवा ॥ २५ ॥
महेगुणपतिन्त्वात्त्वागुणपतिᳬहवामहे । गुणपतिᳬहवामहेह

वामहेगणपतिङ्गणपतिꣳहवामहेप्प्रियाणाम्प्रियाणाꣳहवाम
हेगणपतिङ्गणपतिꣳहवामहेप्प्रियाणाम् । गणपतिमितिगणऽ
पतिम् । हवामहेप्प्रियाणाम्प्रियाणाꣳहवामहेहवामहेप्प्रिया
णाम्प्रियपतिम्प्रियपतिम्प्रियाणाꣳहवामहेहवामहेप्प्रियाणा
म्प्रियपतिम् । प्रियाणाम्प्रियपतिम्प्रियपतिम्प्रियाणाम्प्रिया
णाम्प्रियपतिन्निधीनान्निधीनाम्प्रियपतिम्प्रियाणाम्प्रियाणा
म्प्रियपतिन्निधीनाम् । प्रियपतिन्निधीनान्निधीनाम्प्रियपति
म्प्रियपतिन्निधीनान्निधिपतिन्निधिपतिन्निधीनाम्प्रियपतिम्प्रि
यपतिन्निधीनान्निधिपतिम् । प्रियपतिमितिप्प्रियऽपतिम् । नि
धीनान्निधिपतिन्निधिपतिन्निधीनान्निधीनान्निधीपतिंव्वसोव्वसो
निधीपतिन्निधीनान्निधीनान्निधिपतिंव्वसो । निधीनामितिनी
ऽधीनाम् । निधिपतिंव्वसोव्वसोनिधिपतिन्निधिपतिंव्वसोममम
मव्वसोनिधिपतिन्निधिपतिंव्वसोमम । निधिपतिमितिनिधीऽ
पतिम् । व्वसोममममव्वसोव्वसोमम । व्वसोऽइतिव्वसो । ममे

शु. य. हिता. १७२॥

–अष्ट- विकृतयः

॥२६

तिमम ॥ आहमुहमाहमंजान्यजान्युहमाहमंजानि । अह
मंजान्यजान्युहमुहमंजानिगर्भंधङ्गर्भंधमंजान्युहमुहमं
जानिगर्भंधम् । अजानिगर्भंधङ्गर्भंधमंजान्यजानिगर्भं
धमात्त्वन्त्वमागर्भंधमंजान्यजानिगर्भंधमात्त्वम् । गर्भं
धमात्त्वन्त्वमागर्भंधङ्गर्भंधमात्त्वमंजास्यजासित्त्वमागर्भं
धङ्गर्भंधमात्त्वमंजासि । गर्भंधमितिगर्भंऽधम् । आत्त्वम् ।
त्वमंजास्यजासित्त्वन्त्वमंजासिगर्भंधङ्गर्भंधमंजासित्त्व
न्त्वमंजासिगर्भंधम् । अजासिगर्भंधङ्गर्भंधमंजास्यजासि
गर्भंधम् । गर्भंधमितिगर्भंऽधम् ॥ १ ॥ अम्बेऽअम्बिके
म्बिकेम्बेम्बेऽअम्बिकेम्बालिकेम्बालिकेम्बिकेम्बेम्बेऽअम्बिके
म्बालिके । अम्बिकेम्बालिकेम्बालिकेम्बिकेम्बिकेम्बालिकेन
नाम्बालिकेम्बिकेम्बिकेम्बालिकेन । अम्बालिकेननाम्बालिके
बालिकेनमामानाम्बालिकेबालिकेनमा । नमामाननमानय
तिनयतिमाननमानयति । मामयतिनयतिमामानयतिकं

कोनंयतिमामानयतिकः । नयतिकश्कोनंयतिनयतिकश्चन
चनकोनंयतिनयतिकश्चन । कश्चनचनकश्कश्चन । चनेति
चन ॥ ससंस्त्त्यश्वकोश्वकश्ससंस्त्तिससंस्त्त्यश्वकश्सुभंद्रि
काꣳसुभंद्रिकामश्वकश्ससंस्त्तिससंस्त्त्यश्वकश्सुभंद्रिकाम् ।
अश्वकश्सुभंद्रिकाꣳसुभंद्रिकामश्वकोश्वकश्सुभंद्रिकाङ्काम्पी
लवासिनींङ्काम्पीलवासिनीꣳसुभंद्रिकामश्वकोश्वकश्सुभंद्रि
काङ्काम्पीलवासिनींम् । सुभंद्रिकाङ्काम्पीलवासिनींङ्काम्पील
वासिनीꣳसुभंद्रिकाꣳसुभंद्रिकाङ्काम्पीलवासिनींम् । सुभंद्रि
कामितिसुऽभंद्रिकाम् । काम्पीलवासिनीमितिंकाम्पीलऽवा
सिनींम् ॥ २ ॥ बह्वीनाम्पितापितांबह्वीनाम्बंह्वीनाम्पिताबहु
र्बहुश्पितांबह्वीनाम्बंह्वीनाम्पिताबहुः । पिताबहुर्बहुश्पितापि
ताबहुरंस्यास्यबहुश्पितापिताबहुरंस्य । बहुरंस्यास्यबहुर्बहुरंस्य
पुत्रश्पुत्रोस्यबहुर्बहुरंस्यपुत्रः । अस्यपुत्रश्पुत्रोस्यास्यपुत्रश्चिश्चा ॥२८॥
चिश्चापुत्रोस्यास्यपुत्रश्चिश्चा । पुत्रश्चिश्चाचिश्चापुत्रश्पुत्रश्चि

श्चाक्कृणोतिकृणोतिचिश्चापुत्रश्पुत्रश्चिश्चाकृणोति । चिश्चाकृणो
तिकृणोतिचिश्चाचिश्चाकृणोतिसमनासमनाकृणोतिचिश्चाचि
श्चाकृणोतिसमना । कृणोतिसमनासमनाकृणोतिकृणोतिस
मनावगत्त्यावगत्त्युसमनाकृणोतिकृणोतिसमनावगत्त्यं । सम
नावगत्त्यावगत्त्युसमनासमनावगत्त्यं । अवगत्त्येत्त्यवऽग
त्त्यं ॥ इषुधिश्सङ्क्राꣳसङ्क्राऽइषुधिरिषुधिश्सङ्क्राꣳपृतनाꣳपृतनाꣳ
सङ्क्राऽइषुधिरिषुधिश्सङ्क्राꣳपृतनाꣳ । इषुधिरितीषुऽधिश् । सङ्क्राꣳ
शु. य. संहिता. ॥१७५॥ पृतनाꣳपृतनाꣳसङ्क्राꣳसङ्क्राꣳपृतनाश्चचपृतनाꣳसङ्क्राꣳसङ्क्राꣳपृ अष्ट- विकृतयः (५
तनाश्च । पृतनाश्चचपृतनाꣳपृतनाश्चसर्व्वाꣳसर्व्वाश्चपृतनाꣳपृत
नाश्चसर्व्वाः । चसर्व्वाꣳसर्व्वाश्चचसर्व्वाःपृष्ठेपृष्ठेसर्व्वाश्चचसर्व्वाः
पृष्ठेꣳ । सर्व्वाःपृष्ठेपृष्ठेसर्व्वाꣳसर्व्वाःपृष्ठेनिनद्धोनिनद्धꣳपृष्ठेसर्व्वाꣳ
सर्व्वाःपृष्ठेनिनद्धः । पृष्ठेनिनद्धोनिनद्धꣳपृष्ठेपृष्ठेनिनद्धोजयति
जयतिनिनद्धꣳपृष्ठेपृष्ठेनिनद्धोजयति । निनद्धोजयतिजयति ॥२९॥
निनद्धोनिनद्धोजयतिप्प्रसूतꣳप्प्रसूतोजयतिनिनद्धोनिनद्धोज

यतिप्प्रसूतꣳ। निनद्धुऽइतिनीऽनद्धꣳ। जयतिप्प्रसूतꣳप्प्रसूतो जयतिजयतिप्प्रसूतꣳ। प्रसूतऽइतिप्प्रऽसूतः ॥ ३ ॥ धानावन्तङ्करम्भिणङ्करम्भिणन्धानावन्तन्धानावन्तङ्करम्भिणमपूपवन्तमपूपवन्तङ्करम्भिणन्धानावन्तन्धानावन्तङ्करम्भिणमपूपवन्तम्। धानावन्तमितिधानाऽवन्तम्। करम्भिणमपूपवन्तमपूपवन्तङ्करम्भिणङ्करम्भिणमपूपवन्तमुक्क्थिनमुक्क्थिनमपूपवन्तङ्करम्भिणङ्करम्भिणमपूपवन्तमुक्क्थिनम्। अपूपवन्तमुक्क्थिनमुक्क्थिनमपूपवन्तमपूपवन्तमुक्क्थिनम्। अपूपवन्तमित्यपूपऽवन्तम्। उक्क्थिनमित्युक्क्थिनम् ॥ इन्द्रप्प्रातःप्प्रातरिन्द्रेन्द्रप्प्रातर्ज्जुषस्वजुषस्वप्प्रातरिन्द्रेन्द्रप्प्रातर्ज्जुषस्व। प्रातर्ज्जुषस्व जुषस्वप्प्रातःप्प्रातर्ज्जुषस्वनोनोजुषस्वप्प्रातःप्प्रातर्ज्जुषस्वनꣳ। जुषस्वनोनोजुषस्वजुषस्वनꣳनऽइतिनः ॥ ४ ॥ इति घनः ॥

इत्यष्टविकृतयः समाप्ताः ॥

शु. य. संहिता. सं. १९ ॥१७६॥

# अथ याज्ञवल्क्यशिक्षा-प्रतिज्ञासूत्र-सर्वानुक्रम-सूत्र-पारस्करगृह्यसूत्राणां प्रारम्भः ॥



# ॥ अथ याज्ञवल्क्यशिक्षाप्रारम्भः ॥

श्रीगणेशाय नमः ॥ ॥ अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः ॥ उदात्तश्चानुदात्तश्च स्वरितश्च तथैव च ॥ लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥ १ ॥ शुक्लमुच्चं विजानीयान्नीचं लोहितमुच्यते ॥ श्यामं तु स्वरितं विद्यादग्निमुखस्य दैवतम् ॥ २ ॥ नीचे सोमं विजानीयात्स्वरिते सविता भवेत् ॥ उदात्तं ब्राह्मणं विद्यान्नीचं क्षत्रियमुच्यते ॥ ३ ॥ वैश्यं तु स्वरितं विद्याद्भारद्वाजमुदात्तकम् ॥ नीचं गौतममित्याहुर्गार्ग्यं च स्वरितं विदुः ॥ ४ ॥ विद्यादुदात्तं गायत्रीं नीचं त्रैष्टुभमुच्यते ॥ जागतं स्वरितं विद्यादत एवं नियोगतः ॥ ५ ॥ गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः ॥ त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः ॥ ६ ॥ उच्चौ निषादगान्धारौ नीचावृषभधैवतौ ॥ शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः ॥ ७ ॥ षड्जो वेदे शिखण्डिः स्यादृषभः स्यादजामुखे ॥ गावो रम्भन्ति गान्धारं क्रौञ्चाश्चैव तु मध्यमम् ॥ ८ ॥ कोकिलः

* केचनात्र पाठभेदा अपि प्रदर्श्यन्ते । १ नीचम् । २ देयमेव । ३ शिखण्ड्यास्या० ।

शु. य. संहिता. ॥१७८॥ पञ्चमो ज्ञेयो निषादं तु वदेद्गजः ॥ आश्वश्च धैवतो ज्ञेयः स्वराः सप्त विधीयते ॥ ९ ॥ निमेषमात्रो कालः स्याद्विद्युत्कालस्तथापरे ॥ अक्षरातुल्ययोगाच्च मतिः स्यात्सोमशर्मणः ॥ १० ॥ सूर्यरश्मिप्रतीकाशात्कणिका यत्र दृश्यते ॥ अणवस्य तु सा मात्रा मात्रा च चतुराणवा ॥ ११ ॥ मानसे चाणवं विद्यात्कण्ठे विद्याद्विराणवम् ॥ त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुः ॥ १२ ॥ अवग्रहे तु कालः स्यादर्धमात्रा विधीयते ॥ पदयोरन्तरे काल एकमात्रा विधीयते ॥ १३ ॥ ऋचोऽर्द्धे तु द्विमात्रः स्यात्त्रिमात्रः स्यादृगन्तके ॥ रिक्तं तु पाणिमुत्क्षिप्य द्वे मात्रे धारयेद्बुधः ॥ १४ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् ॥ १५ ॥ विवृतौ चावसाने च ऋचोऽर्द्धे च तथा परे ॥ पदे च पादसंस्थाने शून्यहस्तं विधीयते ॥ १६ ॥ प्रणवं तु प्लुतं कुर्याद्व्याहृतीर्मात्रिका विदुः ॥ चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत् ॥ १७ ॥ शिखी वदति त्रिमात्रामात्राणामिति संस्थितिः ॥ वर्णो जातिश्च मात्रा च गोत्रं याज्ञ० शिक्षा. ॥ ३२

१ मूते । २ निमेषकाला मात्रा स्यात् । ३ अक्षरातुल्ययोगत्वान्मतिः । ४ अणुवस्य । ५ तु कालः स्यादर्धमात्रात्मको द्विः सः । ६ ऋचार्द्धे । ७ नकुलस्त्वर्धमात्रकम् ।

